PLEASE SUBSCRIBE FOR THE MANJUSHA



श्रीशिवः शरणम्

त्रयोदशं वर्षं ] September, 1958 [ प्रथमा संख्या

# मञ्जूषा



सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month ( 48 pages )

Democracy in Ancient India by Dr. Radha Kumud Mukherji

Some interesting derivations by Dr. Suniti Kumar Chatterji.

Vedānta—Old and New by Pandit Charu-krishna Darśanācārya.

Kāñcana-Kuñcikam—a new serial drama in 10 acts by Sri Vishnupada Bhattacharya.

On some readings of the Meghadūta.

On गुरुलाघव. रसमञ्जरी ।

Notes and Queries.

Subscribers are earnestly requested to send in their subscriptions along with donations on the receipt of this number.

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.

Minimum Annual Subscription : Rupees Six only.

Foreign—Twelve shillings.

Single copy : One Rupee.

## मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२ । प्रतिसौरमासं दशमदिने ( आङ्ग्लमासस्य चतुर्विंशे दिवसे ) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

**स्त्रीप्रशंसा**—अभिनवविस्तृतव्याख्यया विभूषिता । मूल्यं १)

| | |
|---|---|
| Upasarga and other Technical Terms | Rs. 1/4/- |
| Convocation Address in Ancient India | As. 12 |
| Popular Etymology— | Re. 1/- |

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-**

**GREEK PROVERBS** in Roman character with their Latin and English analogues and parallel proverbs and sayings from Sanskrit, Marathi and Bengali. All the grammatical forms have been clearly explained and the student of Sanskrit will not only acquire some knowledge of the glorious Greek language but will be struck with the resemblance it bears to Sanskrit. *Price : Rupees Two only.*

| | |
|---|---|
| **ऋग्वेदीयम् आनोभद्रसूक्तम्** ( पञ्चभाष्यसमन्वितम् ) | २॥० |
| **শব্দকথা**—সরস, সরল ভাষাতত্ত্ব | ২৲ |
| **ঊষার আলো**—ছোট ছোট হাসির গল্পের সমষ্টি— | ৮০ |
| **নক্ষত্রমালা**—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ | ।/০ |

**Several complete sets of Vols. IV, V, VI, VII, X and XI (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IX Rs. 6/-.**

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

श्रीक्षितीशचन्द्र-चट्टोपाध्यायेन सम्पादिता

त्रयोदशं वर्षम्

आश्विन १८८०—भाद्र १८८१
September 1958—August 1959

श्रीविश्वनाथ-चट्टोपाध्यायः
८, भूपेन्द्रवसु एवेन्यू, कलिकाता-४

# मञ्जूषायास्त्रयोदशखण्डस्य संक्षिप्तं सूचीपत्रम्

( पृष्ठसंख्या २१२+८+८०+७२ )

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

September, 1958. | १८८०-शकीयाश्विनस्य १३शा-वर्षस्य प्रथमा संख्या | Vol. XIII No. 1

श्रीशिवः शरणम्

## मञ्जूषाप्रशंसापञ्चकम्

[ रचयिता—पं० तर्कतीर्थश्रीनीलकण्ठशिवाचार्यमहास्वामी सिंहासन-बृहन्मठ हूलि ( संवदत्ति ) जि० बेलगांव, कर्णाटक ]

सुशब्दव्याप्तव्याकरणपरशिक्षाविलसिता
श्रुतज्योतिःशास्त्रोदितमतपुरस्कारफलिता ।
निरुक्त्या छन्दोभिर्बुधमहितकल्पानुकलिता
सदा मञ्जूषेयं जयति सुषडङ्गैः श्रुतिरता ॥१॥

श्रुतेरुक्त्या वर्णाश्रमविहितधर्मोन्नतिकरी
कृतेर्युक्त्या कर्माचरणपरिबोधैकलहरी ।
स्तुतेर्भक्त्या श्रीशङ्करचरणसेवासहचरी
सदा मञ्जूषेयं जयति सुरवाणीस्मृतिभरी ॥२॥

सुरसमयसुबोधामोदवादप्रसारा
सुरसमयविलासोद्भासभाषाप्रचारा ।

सुर-सम-यतिसङ्घोत्सङ्गसङ्गात्मसारा
सुरसमयति मञ्जूषागमोक्तानुसारा ॥३॥

अन्वेषाव्याप्तरेषाश्रितविबुधमणिश्रीक्षितीशेन्दुपोषा
सश्लेषा त्यक्तदोषा श्रुतविभवजुषां श्रीमतां साभिलाषा ।
सन्तोषासक्तिभूषा सुरनुतगिरिजाशम्भुनामाश्रितैषा
मञ्जूषा मञ्जुघोषा जयति विकलुषा देवभाषाविशेषा ॥४॥

गीर्वाणांग्लेयभाषाद्वयकृतिरचिताऽऽभाणकालिप्रबोधा
प्राचीनोक्तप्रयोगादिषु विविधदिशा दर्शितान्तःप्रमादा ।
विद्वच्छ्लाघ्यैः सुयोग्यैः सरससुमधुरैर्लेखनैः सत्यवादा
मञ्जूषा वीतबाधा जयति मतिमतां धन्यवादाभिवादा ॥५॥

क्षितीशचन्द्रसङ्काशात् कौमुदीतत्त्वलक्षिता ।
भाति मासिकमञ्जूषा सुरवाणी सुरक्षिता ॥६॥

शान्तिरस्तु—तुष्टिरस्तु—पुष्टिरस्तु—शिवं भवतु ।

---

## आभाणकमाला

१। Love me, love my dog.

**Latin.** Qui me amat, amat et canem meum.

यो मयि स्निह्यति स मम शुनकेऽपि स्निह्यति ।

इयं खलु स्नेहस्य शैली यत्तत्परिग्रहेऽपि तद्वत्पक्षपातः। विद्युल्लता ( ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी पुत्रप्रेम्णा कुवलयदलक्षेपि कर्णे करोतीत्यत्र )।

**French.** On dit qui m'aime aime mon chien.

**French.** Qui aime Jean (Bertrand) aime son chien.

**German.** Wer schlägt meinen Hund, der liebt mich nicht.

यो मम शुनि प्रहरति नासौ मयि स्निह्यति ।

२। Familiarity breeds contempt.*

---

* ग्रीक्-लातीन-फरासीस-वचनानि मञ्जूषाया दशमवर्षस्य द्वादशाङ्के ( August 1956, पृ॰ २७३ ) द्रष्टव्यानि ।

अत्यन्तपरिशीलनाद् विशिष्टवस्तुन्यपि क्रमेणावज्ञा भविष्यति । अङ्गनस्थिताया मल्लिकायाः सौरभ्यं नास्तीति जगत्प्रसिद्धिः । रससदनभाणः पृः ३५ ।

अतिपरिचयादवज्ञा भवति विशिष्टेऽपि वस्तुनि प्रायः ।
जनः प्रयागवासी कूपे स्नानं समाचरति ॥
अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥
[ अतिपरिचयादवज्ञेत्येतद्वाक्यं मृषैव तद्भाति ।
अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा ॥ ]
सन्निकर्षोऽत्र मर्त्यानामनादरणकारणम् ।
गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥
प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः ।
अतिपरिचयदोषात्कस्य नो मानहानि र्नवनवगुणरागी प्रायशः सर्वलोकः ॥
मधुकरगणश्चूतं त्यक्त्वा गतो नवमल्लिकां
पुनरपि गतो रक्ताशोकं कदम्बवनं ततः ।
तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं
परिचितजन[गुण]द्वेषी लोको नवं नवमीहते ॥
सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।
स्वदारपरिहारेण परदारार्थिनो जनाः ॥
निकटस्थं गरीयांसमपि लोको न मन्यते ।
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥
ये तावन्मलयोपकण्ठनिलयास्तेष्विन्धनं चन्दनं
तीरोपान्तनिवासिनां जलनिधे रत्नानि पाषाणवत् ।
काश्मीरेषु निवासिनामपि नृणां नास्त्यादरः कुङ्कुमे
दूरस्थस्य महार्घता परिभवः संवासतो जायते ॥
सौन्दर्यं सहधर्मिण्याः स्वभृत्यस्य च पाटवम् ।
गृहवैद्यस्य विद्या च कस्मैचिद्यदि रोचते ॥

३ । ( ब ) डुबे डुबे जल खाओया ।
निमज्ज्य निमज्ज्य सलिलपानम् ।
( ब ) डुवे डुवे जल खेले शिवेर बाबाओ जानते पारवे ना ।
निमज्ज्य निमज्ज्य सलिलं पीयते चेत् परमेशस्य पितापि न विज्ञातुं प्रभवेत् ।

मत्स्या यथान्तः सलिले चरन्तो ज्ञातुं न शक्याः सलिलं पिबन्तः ।
युक्तास्तथा कार्यविधौ नियुक्ता ज्ञातुं न शक्या धनमाददानाः ॥
अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
न तु प्रच्छन्नपापानां युक्तानां चरतां गतिः ॥ कौटिलीयार्थशास्त्रम् २।९-१०

It is daylight that makes sin. *Comus.*

[ वङ्गीयस्यास्याभाणकस्याशयः—ये तावन्निगूढं पापमाचरन्ति तेषां पापानुष्ठानं केनापि न विज्ञायत इति। सर्वथा भ्रान्तमिदमभिमतम्। तथाच महाभारते दुष्यन्तं प्रति शकुन्तलावचनम्—

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥
आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति ।

आङ्ग्लैरप्युच्यते—Men may securely sin, but safely never. ]

---

## शकुन्तला

### [ कवीन्द्ररवीन्द्रनाथस्य ]

कविकुलमौलिरत्नस्य शेक्सपीयरस्य टेम्पेष्टनाटकेन साकं कविकुलचूडामणेः कालिदासस्य शाकुन्तलस्य सादृश्यं स्वतु एव मानसे समुदियात्। अनयोर्बहिरङ्गमैक्यमन्तरङ्गं चानैक्यं सर्वथा पर्यालोचनमर्हति ।

निर्जनलालितया मिरान्दया साकं कुमारफार्दिनान्दस्य प्रणयव्यापारस्तापसकुमारिकया शकुन्तलया साकं दुष्यन्तस्य प्रणयस्यानुरूपः। संघटनस्थानयोरपि सादृश्यं वर्त्तते। एकत्र समुद्रवेष्टितं द्वीपमपरत्र च तपोवनम् ।

एवमुभयोराख्यानयोर्मूलगतमैक्यं सन्दृश्यते काव्यरसस्य पुनः स्वादः सर्वथा विलक्षणः, पाठमात्रेणैवैतदनुभूयते ।

युरोपप्रदेशस्य कविकुलगुरुणा गेटेमहोदयेनैकेनैव श्लोकेन शाकुन्तलस्य समालोचनमुपनिबद्धम्। न खलु तेन काव्यं खण्डशो विच्छिन्नम्। तदीयः श्लोकः शिखेव दीपवर्तिकायाः क्षुद्रः, परं स दीपशिखेवैव समग्रं शाकुन्तलं मुहूर्तेनैव समुद्भासयेत्। तेन वाक्येनैकेनोक्तम्—कोऽपि चेत् तरुणवत्सरस्य प्रसूनं परिणतवत्सरस्य च फलम्, कोऽपि चेन्मर्त्यं च स्वर्गं च युगपद् द्रष्टुमिच्छेत् तर्हि शाकुन्तल एव तल्लभेत ।

बहवः खलु वचनमिदं कवेरुच्छ्वासमात्रमेवेति मन्यमाना अकिञ्चित्करमिदमाकलयन्ति। ते मन्यन्ते वचनस्यास्य तात्पर्यं शाकुन्तलकाव्यमुत्कृष्टमिति। वस्तुतस्तु न तथा। न खलु गेटेविरचितः श्लोकोऽयमानन्दमूलिकात्युक्तिः, प्रत्युतायं सहृदयस्य विमर्शः। अत्र च वैशिष्ट्यं वर्तते। कविना विशिष्योक्तम्—शाकुन्तले कश्चन गभीरपरिणतिव्यापारो वर्तते, सा च परिणतिः प्रसूनात् फले परिणतिः, मर्त्यात् स्वर्गे परिणतिः, निसर्गाच्च धर्मे परिणतिः। मेघदूते यथा पूर्वमेघ उत्तरमेघश्च वर्तते, पूर्वमेघे पार्थिवविचित्रसौन्दर्यपर्यटनपूर्वकमुत्तरमेघेऽलकापुर्याः शाश्वतसौन्दर्ये समुपस्थेयम्, तथैव शाकुन्तले पूर्वमेलनमुत्तरमेलनञ्च वर्तते। प्रथमाङ्कवर्तिनो मर्त्यस्य चञ्चलात् सौन्दर्यमयाद् विचित्रात् पूर्वमेलनात् स्वर्गतपोवने शाश्वतानन्दमयोत्तरमेलनप्रस्थानमेव शाकुन्तलं नाटकम्। न खल्विदं भावविशेषस्यावतारणं न वा चरित्रविशेषस्य विकासः, इदं किल समग्रस्य काव्यस्यैकस्माल्लोकाल्लोकान्तरप्रापणम्, प्रेम्णः स्वभावसौन्दर्यस्य प्रदेशतो मङ्गलसौन्दर्यस्याक्षयधाम्न्युत्तारणम्। प्रसङ्गोऽयं प्रबन्धान्तरेऽस्माभिः प्रपञ्चित इति तस्यात्र पुनरुक्तितो विरम्यते।

स्वर्गस्य मर्त्यस्य चेदं यन्मेलनं तत् कालिदासेन परमसौकर्येणैव संसाधितम्। स खलु प्रसूनं तथा नैसर्गिकप्रणाल्या फले परिणमितवान्, मर्त्यस्य सीमानं तथा नैपुण्येन स्वर्गेण संघटितवान् यथान्तरा किमपि व्यवधानं नयनपथं नावतरति। प्रथमेऽङ्के शकुन्तलायाः पतनव्यतिकरे कविना मर्त्यस्य मृत्तिका लेशतोऽपि न निगूढा। तस्या अन्तरे वासनायाः प्रभावः कियानवर्तत तद् दुष्यन्तस्य शकुन्तलायाश्चोभयोः संव्यवहारेण कविर्विस्पष्टं प्रदर्शितवान्। यौवनमत्ततायाः हावभावलीलाचाञ्चल्यं परमया लज्जया प्रबलस्यात्मप्रकाशस्य संग्रामः सर्वमेव कविनाभिव्यञ्जितम्। एतत् खलु शकुन्तलायाः सारल्यस्य निदर्शनम्। न खलु साऽनुकूलावसरे भावावेशस्याकस्मिकाविर्भावस्य कृते पूर्वतः सन्नद्धासीत्। न खलु तया स्वस्य दमनाय निगूहनाय वा कोऽप्युपायः पूर्वतश्चिन्तितः। या नाम हरिणी व्याधं न विजानाति तस्या वेधने किं कदापि विलम्बो भवेत्? न खलु शकुन्तला पञ्चशरं यथावद् व्यजानात्, अत एव तस्या मर्मस्थानमरक्षितमेवासीत्। तया खलु नैव कन्दर्पे नापि दुष्यन्तेऽविश्वासो विहितः। यथा यस्मिन् खल्वरण्ये सर्वदैव मृगया भवति तत्र व्याधस्य समधिकमात्मगोपनमावश्यकम्, तथा यस्मिञ्जनसमाजे स्त्रीपुंसयोर्मेलनं सर्वदा सौकर्येणैव सङ्घटते तत्र मीनकेतुनातीव सावधानेन स्वात्मानं प्रच्छाद्य कर्म कर्तव्यं भवति। यथा हि तपोवनस्य हरिणी निःशङ्का तथैव तपोवनस्य बालिकाऽपि सदैवानवधाना।

यथा शकुन्तलायाः पराभवः सातिशयसौकर्येण सञ्जात इति चित्रितं तथैव

तस्मिन् पराभवे तस्याश्चरितस्य गभीरतरं पावित्र्यं तस्याः स्वतः सिद्धमक्षुण्णं सतीत्वम् अन्तरेणैव लेशतोऽप्यायासं परिस्फुटीभवति। एतदपि तस्याः सारल्यस्य निदर्शनम्। गृहाभ्यन्तरे यत् कृत्रिमपुष्पं सज्जीक्रियते तस्य धूलिः प्रत्यहमेवावश्यं सम्मार्जनीया, परमारण्यपुष्पस्य धूलिसम्मार्जनाय जननियोगो नावश्यकीभवति। तत् खल्वनावृतमेवावतिष्ठते, तस्य गात्रे धूलिरपि संसज्यते, तथापि तत् खलु विनैवायासं स्वं मञ्जुलं नैर्मल्यं संरक्षदेव तिष्ठतीत्यहो आश्चर्यम्! शकुन्तलायामपि धूलिः संसक्ता परं सा तज् ज्ञातुं नैव प्राभवत्। सा खल्वरण्यस्य सरला हरिणीव, निर्झरस्य सलिलधारेव मालिन्यसंसर्गेऽपि स्वत एव निर्मला।

कालिदासः स्वामिमामाश्रमपालितामुद्भिन्नयौवनां शकुन्तलां संशयविरहितस्य स्वभावस्य सरणौ मुक्तवान्। न खल्वान्तं कदापि तस्याः स्वभावसञ्चारस्य पथि तेन विघ्नः सृष्टः। अन्ततश्च तामप्रगल्भां दुःखशीलां नियमचारिणीं सतीधर्मस्य प्रतिमूर्तिमिवाङ्कितवान्। एकतः सा तरुलताफलपुष्पाणीव विस्मृतात्मा स्वभावधर्मानुगता च, अन्यतस्तस्यान्तरतरा नारीप्रकृतिः संयता सहिष्णुश्च। सा खल्वेकाग्रतपःपरायणा, कल्याणधर्मशासननिगडेन चैकान्ततो नियन्त्रिता। अपूर्वेण नैपुण्येन कालिदासः स्वां नायिकां लीलाधैर्ययोर्निसर्गनियमयोः सरित्समुद्रयोः सम्भेद एव स्थापयित्वा प्रदर्शितवान्। तस्याः पिता किल ऋषिर्माता चाप्सराः। व्रतभङ्गतस्तस्या जन्म। तपोवने तस्याः पालनम्। तपोवनं नाम तथाविधं स्थानं यत्र स्वभावश्च तपस्या च, सौन्दर्यञ्च संयमश्चैकत्र सङ्गतें। तत्र जनसमाजसुलभं कृत्रिमं विधानं नास्ति, परं धर्मस्य कठोरो नियमो विराजते। गान्धर्वविवाहोऽपि तथाविध एव। तत्र स्वभावस्योद्दामतापि वर्तते, उद्वाहस्य सामाजिकं बन्धनमपि वर्तते। बन्धनाबन्धनयोः सङ्गमस्थले स्थापितं सच्छकुन्तलानाटकमपूर्वत्वविशेषमध्यगमत्। तत्रत्यं सुखं च दुःखं च मेलनं च विच्छेदश्च सर्वमेवानयोर्घातप्रतिघातकृतम्। कथं तावद् गेटेमहोदयेन स्वे विमर्शे शकुन्तलायां विसदृशयोर्द्वयोरेकत्र समावेशः समुद्घोषितस्तत्साभिनिवेशसन्दर्शनेनैव स्पष्टीभवति।

अयं व्यतिकरष्टेम्पेस्टे नास्ति। कथं वा वर्तेत? शकुन्तलापि सुन्दरी, मिरान्दापि सुन्दरी, तावतोभयोर्नासानयनस्याविकलं सादृश्यं को नामाशंसेत? उभयोरवस्थयोर्व्यापारयोः प्रकृत्योश्च सम्पूर्णः प्रभेदः। यस्मिन् खलु नैर्जन्ये मिरान्दा आ शैशवात्पालिता, अनभिज्ञ्वासीच्छकुन्तला तस्य नैर्जन्यस्य। मिरान्दा पितुरेवैकस्य साहचर्येण वर्धिता, अत एव तस्याः प्रकृतिः स्वाभाविकविकासस्यानुकूल्यं न लब्धवती। शकुन्तला तु सवयोभिः सखीभिः परिवर्धिता। तास्तावत् परस्पराम् उत्तापेनानुकरणेन चिन्ताविनिमयेन हास्यपरिहाससंलापैश्च स्वाभाविकं विकासमलभन्त। यदि शकुन्तला-

ह्रहः कण्वमुनिनैव सार्धमवास्थास्यत तर्हि तस्या उन्मेषः प्रत्यहनिष्यत, तर्हि तस्याः सारल्यमज्ञतापरपर्यायो भूत्वा तां स्त्रीऋष्यश्रृङ्गं व्यधास्यत्। वस्तुतः शकुन्तलायाः सारल्यं स्वाभाविकम्, मिरान्दायाः पुनर्बहिर्व्यापारकृतम्। उभयोः समवस्थयो र्यो विभेदो वर्तते तेनेदमेव सङ्गतम्। न खलु मिरान्दाया इव शकुन्तलायाः सारल्यं समन्तादज्ञानेन परिरक्षितम्। शकुन्तलाया यौवनं सद्यो विकसितम्, कौतुकशीलश्च सखीजनः तस्य विस्मरणायावकाशं नाददात्। एतत् सर्वं प्रथमाङ्क एवास्माभिः प्रत्यक्षीक्रियते। सा च लज्जामनुभवितुमपि शिक्षितवती। परं सर्वमेवैतद् बाह्यं वस्तु। तस्याः सारल्यं गभीरतरम्, तस्याः पावित्र्यमन्तरतरम्। बाह्यः कोऽप्यनुभवो नैव प्रबभूव तां स्प्रष्टुम्, आन्तं कविनैतत् प्रदर्शितम्। शकुन्तलायाः सारल्यमाभ्यन्तरम्। सा खलु लौकिकं किमपि न जानातीति न, तपोवनं हि जनसमाजबाह्यं न वर्तते, तपोवनेऽपि गृहधर्मः पाल्यते स्म। कामं बाह्येषु विषयेषु शकुन्तलानभिज्ञा, तथापि नासावज्ञा। तस्याः खल्वन्तर्हृदये विश्वासस्य सिंहासनं विराजते। तद्विश्वासनिष्ठं सारल्यं मुहूर्ताय तां पतितां व्यदधात्, परमत्यन्ताय तामुदधरत्। दारुणतमाया विश्वासघातकताया आघातेऽपि धैर्ये क्षमायां कल्याणे च तां स्थेयसीं व्यधात्। मिरान्दायाः सारल्यस्याग्निपरीक्षा न सञ्जाता, लौकिकज्ञानेन साकं तस्य सङ्घातो न सङ्घटितः। तां तावद् वयं प्रथमायामेवावस्थायां दृष्टवन्तः, शकुन्तलां पुनः कविः प्रथमतोऽन्तिमावस्थां यावत् प्रदर्शितवान्। (क्रमशः)

---

## रवेरुदयः

एकदा कवीन्द्राचार्यो रवीन्द्रनाथो युरोपमहादेशं गतः। तत्र गाणितिकशिरोमणिना आइन्ष्टाइनेन साकं कवेः साक्षात्कारः सञ्जातः। अथ समुपजाते परिचये आइन्ष्टाइनमहोदयेन कविरुक्तः, भवन्तं विज्ञायैव भारतवर्षं विज्ञातं मयेति। कविनोक्तम्, अये भ्रान्तो भवान्। औत्तराधर्यं सञ्जातम्। भारतवर्षं विज्ञातवान् भवानित्येव प्रभवति मां विज्ञातुमिति। आइन्ष्टाइनेनोक्तम्—सम्यगभिहितं भवता। भवांस्तावद् भारतवर्षस्य मध्यमणिः। ननु भारतवर्षस्य रविरेव। इति। कविना विहस्योक्तम्—अपि नाम रविर्नोदेति भवदीये देश इति। आइन्ष्टाइनेनापि विहस्योक्तम्—अस्माकं देशे सदैव रवेः प्रभावः स्वल्प एव। दूरे ह्यसौ वर्तते पार्श्वं च तिर्यगवतिष्ठते इति। कविना सस्मितमुक्तम्—इत ऊर्ध्वं न खलु दूरे पार्श्व एवावस्थास्ये। इति।

प्रातराशावसरे रवीन्द्रनाथेन प्रायेण कञ्चन पानमाद्धकायामाहूयन्त स्म। एवमव-कदा विश्वभारतीग्रन्थसम्पादको नन्दगोपाल-सेनगुप्तः समाहूतः। चा-वण्टनकाले कविना नन्दगोपालमहोदयमभिलक्ष्योक्तम्—अरे, दाक्षिण्येनास्मै चापानीयं प्रदयीताम्। एते तावच्छरद्वर्गीयाः। चाचषकस्य स्थाने घट्या सम्माय चापानीयं पिबन्ति। इति। शरन्नाम शरच्चन्द्रचट्टोपाध्यायः। एकस्मिन् दिने घटपरिमितं चा-पानीयं तेन पीतमासीत्।

---

## विश्वगुरोर्गुरुः

एकदा गान्धीमहोदयः शान्तिनिकेतनमागतः। महात्मा तत्र कवेरतिथिः संवृत्तः। कवेः कक्षे महात्मना समं कवेः संलापः प्रवृत्तः। कथाप्रसङ्गेन कविनोक्तम्—अहं तावदचलः, भवान् पुनः सचल इति। महात्मनोक्तम्, कविगुरुर्भवान् खलु। इति। कविनोक्तम्, भवान् पुनर्विश्वगुरुः। इति। महात्मना पुनरप्युक्तम्, तथापि भवान् महत्तरः। भवान् हि विश्वगुरोर्गुरुः। मम प्रणम्यः। इति। ततश्चोभावेव हसितुं प्रवृत्तौ।

---

## सजीवम्

एकदा कवीन्द्र-रवीन्द्रनाथः कस्यचिद् भक्तस्य निर्बन्धेन तस्य गृहमुपगतः। उप-वेशनार्थं किञ्चन सुन्दरं काष्ठासनं कविवर्याय प्रदत्तम्। ततश्च कविर्भक्तमपृच्छत्, अये तवेदं काष्ठासनं सजीवं ननु। इति। भक्तस्तु कवेर्हृद्गतमनवबुध्य तस्य मुखे सन्न्यस्त-दृष्टिरक्तस्थे। तदानीं कविनोक्तम्, नैव बोद्धुं प्रभवसि? अहं तावत्पृच्छामि, सजीवमुत न? अत्र मत्कुणो वर्तते वा न वेति सरलार्थः।

ततश्च कवेर्वचनमाकर्ण्य भक्तो जहास।

---

## नामरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

तमायुर्वेदशास्त्रप्रवर्तकस्य धन्वन्तरेर्नाम? अद्यत्वेऽपि विकत्थनं भिषजं प्रति सोल्लुण्ठनोक्तिः श्रूयते, अहो त्वं किल धन्वन्तरिः! इति। रसिकराजेनेन्द्र-नाथवन्द्योपाध्यायमहोदयेनोक्तम् ( M. Dumas + M. Danteri ) दुमा दान्तेरि-नामद्वयस्य संयोगेन धन्वन्तरि-शब्दो निष्पन्न इति। वङ्गभाषामयपुस्तकेषु प्रायेण सर्वत्रैव तरिशब्दो दीर्घेकारान्त इति कृत्वा धन्वन्तरिशब्दगतोऽपीकारो दीर्घो विधीयते।

इदानीं धन्वन्तरिशब्दस्यार्थौ विचार्यते। विदेशीयैरभिधानकारैः प्रायेण ( moving in a curve ) धनुराकारेण भ्रमणशील इत्यर्थः क्रियते। यथास्माभिर्दृश्यते तथा धन्वनि मरुदेशे तरिरिति धन्वन्तरिशब्दो निष्पन्नः। सुपां सुलुक् इति पूर्वपदस्थस्य ङेर्लुक्। न ङिसम्बुद्ध्योरिति नकारस्य लुगभावः।

अत एव धन्वन्तरिशब्दस्यार्थः—the ship of the desert इति।

---

## वङ्गभाषायां संस्कृतशब्दः

"दैनिक-वसुमती" पत्रिकायां (९ भाद्र, मङ्गलवार, १३६५) दृष्टम्—हासपातालेर नाम हइते काम पर्यन्त—आब्रह्मस्तम्भपर्यन्त (-आरोग्यशालाया नामत आरभ्य कर्म यावत्—आब्रह्मस्तम्भपर्यन्तम् ) इति। किमिदम् आब्रह्मस्तम्भपर्यन्तं भोः? अभियुक्ताः खलु आब्रह्मस्तम्बपर्यन्तम् इति प्रयुञ्जते। स्तम्बशब्दस्तृणगुच्छार्थकः। तर्पणमन्त्रे वर्तते—"आब्रह्मस्तम्बपर्यन्तं जगत् तृप्यतु" इति। स्तम्बशब्दस्य विरलप्रचारत्वात् स्तम्भशब्दस्य च बहुलप्रचारत्वाद् बहवो लेखकाः प्रमादेन स्तम्बशब्दस्य स्थाने स्तम्भशब्दं प्रयुञ्जते।

---

## राजदन्तः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, सहस्रशो भवद्भिः श्रुतः स्याद्राजदन्तशब्दः, जागर्ति हि पाणिनीयं सूत्रं राजदन्तादिषु परम् [ २।२।३१ ] इति। परं को वास्य शब्दस्यार्थ इति कदापि विचारितं वा भवद्भिः? यथा वयं पश्यामस्तथायुर्वेदाध्यायिनो वर्जयित्वा प्रायेण केनापि नावबुध्यते को वा राजा दन्तानामिति। काश्यपसंहिताया दन्तजन्मिकाध्याये दृश्यते—इह खलु नृणां द्वात्रिंशद्दन्ताः। तत्राष्टौ सकृज्जाताः स्वरुढदन्ता भवन्ति, अतः शेषा द्विजाः। यावत्स्वेव च मासेषु दन्ता निषिच्यन्ते तावत्स्वहःसूद्भिद्यन्ते। यावत्स्वेव च मासेषु जातस्य सत उद्भिद्यन्ते तावत्स्वेव च वर्षेषु पतिताः पुनरुद्भिद्यन्ते। तत्र मध्ये द्वावुत्तरौ ( =उद्गततरौ ) राजदन्तसंज्ञौ, तौ पवित्रौ। तस्मात् ताभ्यां खण्डो ( =हीनः ) न श्राद्धमर्हति। अपवित्रो हि सः। इति। एतस्माच्च प्रतीयते न खलु सर्वे दन्ता द्विजशब्दवाच्या भवन्ति। परं प्राधान्येन व्यपदेशा भवन्तीति न्यायेन द्विजशब्दस्य सामान्यतो दन्तार्थत्वं सञ्जातम्। "दन्तविप्राण्डजा द्विजाः" इति हि कोषकाराः पठन्ति।

शब्दो मध्यमाभिधेयप्रधानमाचष्टे । अन्तरेणशब्दस्तु तच्च विनार्थं च । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः । अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते । युक्तग्रहणं किम् ? अन्तरा तक्षशिलां च पाटलिपुत्रं च स्रुघ्नस्य प्राकारः । इति ।

अन्तरशब्दस्य तृतीयैकवचने प्राचीनं रूपम् अन्तरा इति, यथा समयशब्दस्य तृतीयैकवचने प्राचीनं रूपं समया ( तु० निकषा उत्तरा दक्षिणा) इति । परवर्तिरूपमन्तरेणेति । यथा उत्तरेण दक्षिणेनेत्यादि । उत्तरेणदक्षिणेनेत्यादिवज्जघनेनान्तरेणप्रभृतयोऽप्येनप्प्रत्ययान्ता इति वक्तुं शक्यते । तथोत्तरा-दक्षिणेत्यादिवदन्तरासमयाशब्दावप्याच्प्रत्ययान्ताविति वक्तुं शक्यते । क्रमेणाधिकृत्यार्थेऽप्यन्तरेणशब्दः प्रयुज्यते स्म । तद्योगेऽपि द्वितीया भवति ।

सहृदयशिखामणिना राघवभट्टेनैतदननुमन्यमानेन बहुत्र कष्टकल्पनाश्रिता । तथाहि—अत्तभवन्तं अन्तरेण कीदिसो से दिट्ठिराओ (अत्रभवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः) इति शाकुन्तलस्य द्वितीयाङ्कगतं विदूषकवचनं व्याचक्षाणेन तेनोक्तम्—अत्रभवन्तमिति सप्तम्यर्थे द्वितीया !!! सप्तम्या द्वितीया [ हैं० ८।३।३७ ] इति सूत्रेण । उदाहरणं च विज्जुज्जोअं भरइ रत्तिं । विद्युद्द्योतं स्मरति रात्राविन्यर्थः । तेन अत्रभवन्तम् अत्रभवति पूज्ये* अन्तरेण विशेषेण कीदृशस्तस्या दृष्टिरागः । "अन्तरं रन्ध्रावकाशयोः । मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ" इति हैमः । अत्रान्तरेणात्रभवन्तमिति द्वितीयेति यत् स भ्रम एव । तस्यान्तरान्तरेणेत्यत्र सूत्रे निपातस्यैव ग्रहणात्, तेनार्थाऽसङ्गतेः । तथाहि तस्मिन् सूत्रे वृत्तिकारेण व्याख्यातम्—अन्तरान्तरेण-शब्दौ निपातौ साहचर्याद् गृह्येते । तत्रान्तराशब्दो मध्यमाभिधेयप्राधान्यमाचष्टे । द्वितीयस्तु तच्च विनार्थं च...इति । प्रकृत एतदर्थद्वयमप्यसङ्गतमेव । तथा चास्यैव कवेर्मालविकाग्निमित्रे नाटके प्रयोगः—अचिरप्पवुत्तोवदेशअं छलिअं णाम णट्टअं अन्तरेण कीदिसी मालविअत्ति अज्ज णट्टाअरिअं गणदासं पुच्छिदुं । इति । शाकुन्तलस्यैव पञ्चमाङ्कस्य प्रारम्भे वर्तते—तस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । इति । अत्र राघवभट्टः—तस्याः सकाशाद् देवीं वसुमतीम् अन्तरेण विना क्षणमपि न तिष्ठामीति मत्सम्बन्धमुपालम्भमवगतोऽस्मि । क्वचित् तदद्य देवीं वसुमतीमन्तरेणोपालम्भमुपाकृतोऽस्मीति पाठः सुबोध एव । इति । अन्यैष्टीकाकारैः सम्यगेव व्याख्यातम्—वसुमती दुष्यन्तस्य महिषी तामुद्दिश्येत्यर्थः । अन्तरान्तरेणेति द्वितीया इति ।

अन्तराशब्द ऋग्वेदेऽप्युपलभ्यते । Macdonell महोदयेनोक्तम्—This word

---

* मुद्रितग्रन्थेषु अत्रभवन्तं पूज्यम् इति पाठः ।

occurs five times in the RV. with a following accusative in the sense of 'between', e. g., अन्तरा दम्पती 'between husband and wife'. It also occurs a few times in the AV. and VS. before duals, e.g., अन्तरा द्यावापृथिवी 'between heaven and earth'.

क्वचिदन्तराशब्दयोगे षष्ठ्यपि दृश्यते, तथाच भाष्ये [१।१।७] प्रयोगः—द्वयोश्चैवान्तरा कश्चिद्ध्रियते वा न वेति, तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्तीति। अत्र कैयटेनेत्थं परिष्कृतम्—अन्तरान्तरेण युक्ते इति द्वितीया कस्मादत्र न भवति? उच्यते। यदा मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते 'त्वां च मां चान्तरा कमण्डलुः' 'अग्नी अन्तरा' 'धवखदिरावन्तरा' इति, तदा द्वितीया। यदा तु नियतावधित्वं न विवक्ष्यते, अपि तु सम्बन्धमात्रं तदा षष्ठ्येव भवति। तदा हि न ज्ञायते किं तयोरेवावधित्वमुतान्य-सहितयोरित्यवधिनियमाभावाद् द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः। इति।

---

## 'महान् हि शब्दस्य प्रयोगविषयः'

[ श्रीआशुतोषशर्मा विश्वासः ]

आङ्गलभाषायां 'Pseudo' इत्येतदुपपदरूपेण बहुत्र प्रयुज्यते यथा—pseudo-nym इत्यादि। अस्य ग्रीक् मूलं कोषेषु pseudos (lie) इति मिथ्यार्थकं प्रदीयते। वस्तुतस्तु पदमिदं मूलतः संस्कृतमेव—'छद' 'छद्म' वा। छद्मशब्दस्य व्युत्पत्तिश्छाद्य-त्येऽनेन इति छादिधातोः 'इसूमन्त्रन्क्विषु च' इति पाणिनिसूत्रेण (६।४।९७) मन्-प्रत्यययोगेन सिध्यति। छदस्तु तस्मादेव धातोर्घप्रत्ययेन संसाधितः। 'छादेर्घेऽ-द्व्युपसर्गस्य' इत्याकारस्य ह्रस्वः। यद्धि बहिराच्छादकं तत् प्रायः स्वरूपावरकत्वाद् वितथमेव भवतीत्येतद्धातुजानां सर्वत्रैव प्रायेण गौणः प्रयोगः। 'pseudo' इत्युपपद-युक्ताः समस्तशब्दाः कियन्तो वा नोपलभ्यन्ते सर्वत्राङ्गलभाषायामन्यत्र च। मूलं तु पूर्वप्रदर्शितरीत्यासंशयं संस्कृतमेव। एतेन गीर्वाणवाण्या वैश्वरूप्यं सुस्पष्टं प्रतीयते। उक्तञ्च महाभाष्यकारेण महर्षिणा पतञ्जलिना सर्वे खल्वप्येते शब्दा देशान्तरे प्रयुज्यन्ते, न चैवोपलभ्यन्ते। उपलब्धौ यत्नः क्रियताम्। महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती इत्यादि (१।१।१)।

[ ग्रीसीय-pseudos संस्कृतच्छद्म च सर्वथासम्बद्धे इति शाब्दिकाः। उभयोरेव मूलमविज्ञातम्। छद्धातोरर्थ आवरणम्, छत्रञ्चच्छर्दिश्चास्मादेव धातोर्निष्पन्ने। परं मूलार्य्ययूरोपीयभाषायां को धातुरस्य जनक इत्यधुनापि निर्णेतुं न शक्यते। pseudo धातोरर्थः प्रतारणं प्रवञ्चनम्। अस्यापि मूलं गुहाहितम्।

संस्कृतभाषागतश्छकारः प्रायेण ग्रीक्भाषायां sk अथवा skh रूपं बिभर्त्ति। छाया—skia, गच्छति—baskō, छिद्—skhid। ग्रीक्भाषागतः sp संस्कृते प्रायेण स्परूपेण स्फरूपेण वाविर्भवति। मञ्जूषा-सम्पादकः। ]

---

# गीष्पतिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

वङ्गेषु गीष्पति-शब्दस्य बहुलप्रचारो दृश्यते, परं शब्दस्यास्य साधुत्वे गरीयान् संशयो वर्तते। गिरां पतिः इति समासः, अहरादीनां पत्यादिषूपसंख्यानम् [ ८।२।७०।२ ] इति वार्त्तिकेन पाक्षिको रेफः। गीर्पतिः। पक्षे विसर्गोपध्मानीयौ। गीःपतिः। गी≍पतिः। रायमुकुटेनोक्तम् - गीष्पतिरित्यसाधुः [ इति ] केचित्। कस्कादित्वात् साधुरिति चान्द्राः। इति। चान्द्रवृत्तौ पुनरेतन्न दृश्यते। संक्षिप्तसारवृत्तावप्युक्तं गीष्पतिरित्यसाधु [ १।१६५ ] इति। टिप्पनीकारेणाभिरामविद्यालङ्कारेणोक्तम् - कस्कादित्वादहस्पतिः गीष्पतिरिति पुरुषोत्तमः [ भाषावृत्तिः ८।२।६९ ], कस्कादित्वात् तेषां विसर्गस्य विधानादिति। प्रयोगरत्नमालायां वा स्वरहर्गीर्धुरां पत्यौ [ १।१२७ ] इति सूत्रस्य वृत्तौ गीष्पतिः गीर्पतिरिति पदद्वयमुपलभ्यते। तत्र प्रभाप्रकाशिका—विसर्गपक्षे सत्वे अङ्गुलिषङ्गादित्वात् [ ४।५५३ ] षत्वं गीष्पतिर्धूष्पतिरिति सुभूतिः। भाष्यमते विसर्ग उपध्मानीयश्च पक्षे, तेन गीर्पतिः गीष्पतिः गी≍पतिरिति रूपत्रयमिति। हैमानुशासने वाहर्पत्यादयः [ १।३।५८ ] इति सूत्रस्य बृहद्वृत्तौ गीर्पतिः गीःपतिः गी≍पतिरित्युपलभ्यते। हेमचन्द्रन्यासकारेणोक्तम्—अत्र क्षीरस्वामिना भ्रातुष्पुत्रादित्वात् षत्वमिष्यते। इति।

मुग्धबोधव्याकरणे खपि वा [ ७५ ] इति सूत्रस्य वृत्तौ वोपदेवेनैव गीर्पतिः गीष्पतिः गीःपतिरित्युदाहरणत्रयमुपन्यस्तम्। अमरकोषटीकायां मुग्धबोधानुसारिणा भरतमल्लिकेनोक्तम्—गिरां पतिः गीष्पतिः। से तु कखपफे वा [ ६७ ] इति सः, मनीषादित्वात् [ ३४ ] षत्वम्। साभावपक्षे कखपफयोर्मून्यौ [ ६९ ] इत्युपध्मानीये गी≍पतिरिति। तदभावपक्षे खपि वा [ ७५ ] इति रेफे गीर्पतिः। तदभावपक्षे विसर्गस्य स्थितिरेव। एवं चातूरूप्यं चन्द्रक्षीरस्वामिवोपदेवसुभूत्यादीनां सम्मतमेव। अत एव गीष्पतिरित्यसाधु इति कस्यचिद्वचनं न हृद्यम्। इति।

सुपद्मेऽपि ग्रन्थकृता अहरादीनां पत्यादिषु [ १।३।१९ ] इति सूत्रस्य स्वोपज्ञवृत्तावुक्तम्—गीर्पतिः गीष्पतिरिति। सुपद्मविवरणपञ्जिकायां पद्मनाभेनैवोक्तम्—पक्षे कस्कादित्वमिति।

कातन्त्रसूत्रवृत्तिटीकासु गीष्पतिर्न स्वीकृतः। कातन्त्रपरिशिष्टे श्रीपतिना "वा गीर्धूरह्नां पत्यौ रः" [ १।७९ ] इति सूत्रं प्रणीय वृत्तावुक्तम्—एषां विसर्जनीयस्य पत्यौ वा रेफो भवति। गीर्पतिः गीष्पतिः, धूर्पतिः धूष्पतिः। गीष्पतिधूष्पत्योः कस्कआदित्वात् नाम्युपधविसृष्टस्य मूर्धन्यः। अपरे तु कस्कआदौ न पठन्ति। इति।

हरिनामामृतेऽपि अहरादीनां पत्यादौ रो वा [ ६।३३६ ] इति सूत्रस्य वृत्तौ ग्रन्थकृतोक्तम्—कस्कआदित्वात् गीष्पतिरिति।

सर्वस्मादेतस्मात् प्रतीयते—पाणिनि-कात्यायन-पतञ्जलिकाले गीष्पतिशब्दः शिष्टैर्न प्रयुज्यते स्म। क्रमेण च बृहस्पतिवाचस्पतिशब्दयोः सकारानुरोधेन कुम्भकर्णे भकारोऽस्तीति न्यायेनात्रापि सकारः समागतः। अतोऽर्वाचीनैर्वैयाकरणैः कस्कादिष्वस्यान्तर्भावमभ्युपगम्य शुद्धिर्व्यधायि।

---

## अश्नीतपिबता

मयूरव्यंसकादिगणे [ २।१।७२ ] दृश्यते सूत्रम्—आख्यातमाख्यातेन क्रियासातत्य इति। अश्नीतपिबता खादतमोदतेत्यादिकं तस्योदाहरणम्। आदावाख्यातद्वयमव्यवधानेन प्रयुज्यते स्म, क्रमेण च समस्तं सञ्जातम्। अव्यवधानप्रयोगोदाहरणं महाभारते [ द्रोण ५९।७ ] यथा—

त्रयः शब्दा न जीर्यन्ते खट्वाङ्गस्य निवेशने।
स्वाध्यायघोषो ज्याघोषः पिबताश्नीत खादत ॥" इति।

---

## श्वावराहः कलहः

यथा वराहस्य शुनश्च युध्यतोस्तयोरभावे श्वपचस्य लाभः।
मन्ये विद्वन् वासुदेवस्य तद्वद् युद्धे लाभः कर्णहैडिम्बयोर्वै ॥
घटोत्कचो यदि हन्याद्धि कर्णं परो लाभः स भवेत् पाण्डवानाम्।
वैकर्तनो वा यदि तं निहन्यात् तथापि कृत्यं शक्तिनाशात् कृतं स्यात् ॥

द्रोणपर्व, १८१।८-९।

इति प्राज्ञः प्रज्ञयैतद्विचिन्त्य घटोत्कचं सूतपुत्रेण युद्धे।
अघातयद्वासुदेवो नृसिंहः प्रियं कुर्वन् पाण्डवानां हितञ्च ॥ द्रोणपर्व १८०।८-१०

एतदनुसारेण कौटिल्येनोक्तम्—व्यसनमस्य श्वावराहयोरिव कलहे वा ( ६।१ ) इति। भट्टिकाव्येऽपि दृश्यते—शक्नोति यो न द्विषतो निहन्तुं विहन्यते नाप्यबलैर्द्विषद्भिः। स श्वावराहं कलहं विधायादासीत दुर्गादि विवर्धयंश्च ॥ [ १२।३३ ] इति।

---

## अनुरूपोक्तिः

महाभारते द्रोणपर्वणि [ ५।१७ ] दृश्यते—

वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा।
मा शुचस्तनयं भद्रे गतः स परमां गतिमिति ॥

हर्षचरिते पञ्चमोच्छ्वासे दृश्यते—वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्। इति।

---

## भारतरत्नमञ्जूषा

त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम्।
वल्कलाजिनवसंवेष्टं व्रतचर्याभिषेचनम् ॥
अग्निहोत्रं वने वासः शरीरपरिशोषणम्।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः ॥ वन० १९९।९६-९७
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥
अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च।
मनुष्या मानसैर्दुःखैर्युज्यन्ते चाल्पबुद्धयः ॥
न विषादे मनः कार्यं विषादो विषमुत्तमम्।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ वन० २१५

---

## अहो परिवर्तनम्

अहो ते परिवर्तनम्! पूर्वं ते निबिडो भ्रमरकृष्णः केशकलाप आसीत्। इदानीं त्वं खल्वाटः सञ्जातः। पूर्वं तव वदनकमलमरुणाभमासीत्, इदानीं तत्र पाण्डिम्ना कृतं पदम्। पूर्वं त्वं स्थूल आसीः, इदानीं कृशः सञ्जातः। अनेन परिवर्तनेन विस्मितोऽस्मि, विनोदमहोदय!

अहं तु विनोदो नास्मि।

अहो नामापि ते परिवर्तितम्!

---

## वासुदेवार्जुनाभ्याम्

वासुदेवार्जुनाभ्यां वुन्। पाणिनि ४।३।९८। वासुदेवार्जुनाभ्यां न्यूनतां नैच्छदात्मनि। महाभारत, कर्णपर्व २०१५

# शब्दार्थतत्त्वम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## १। इतर:

सहृदयाः, परिवर्तिनि संसारे किमपि न स्थिरं तिष्ठति, शब्दानां तथार्थानामपि भावान्तराणामिव नियतं परिवर्तनमुपलभ्यते। दुर्लभः प्रायेण तथाविधः शब्दो योऽत्यन्तायैवैकमेव रूपं बिभर्त्येकमेव चार्थं बोधयति। साम्प्रतमस्माकमितरशब्दस्यार्थपरिवृत्तिविचारपदवीमवतरति।

इदम्-शब्दात् तरप्रत्ययेनेतरशब्दो निष्पन्न इति दर्शनमात्रेणैव प्रतीयते। प्राचीनात् कालादारभ्यान्यार्थकः लातीन् iterum अस्यैव सपिण्डः, तस्यार्थः—पुनः, पुनर्वारमिति।

वङ्गभाषायामितरशब्दो नीचार्थकः। संस्कृतभाषायामप्ययमर्थ उपलभ्यते। अमरसिंहेनोक्तम्—इतरस्त्वन्यनीचयोरिति। महतामेव नामानि पूर्वमुपादायानन्तरमितरे चेत्युच्यते। अत एव क्रमेणेतरशब्दो नीचार्थकः संवृत्तः।

न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः [ रामायण ५।३९।३८ ] इति रामायणवचने इतरशब्दस्यायमर्थः स्फुट एव।

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः॥

इत्युद्भटश्लोके इतरशब्दस्यान्यार्थत्वं दृश्यते।

एकदा वृत्तान्तपत्रसम्पादकः स्वर्गतः पाँचकडिवन्द्योपाध्यायो भाषणदानार्थमभ्यर्थितः कतिभिश्चित् तरुणैः। तै-"हितवादि"-करणालयमागत्योक्तम्, आर्य, कालस्तावदतिवर्तते, शीघ्रमागम्यताम्। इति। वन्द्योपाध्यायमहोदयेन पृष्टम्—क्व वा वक्तृषु मम नाम मुद्रितमिति। तैरुक्तं दृश्यताम् अत्र and others ( इतरे च ) इति मुद्रितं वर्तते। पाँचकडिमहोदयेन क्रोधस्य परां काष्ठामधिरूढेनोक्तम्, न खलु पाँचकडिवन्द्योपाध्यायः and others इत्यत्रान्तर्भवति। इति।

---

## प्राप्तं पत्रम्

होशियारपुरस्थ"साधुआश्रमा"त् श्रीश्रुतिकान्तशर्ममहोदयो विज्ञापयति—

मञ्जूषाया जुलाई-अङ्के 'अधिकन्तु न दोषाय' इति शीर्षकतले श्रीमन्नारायण इत्यत्रात्रभवद्भिः 'श्रीमत्' इत्यस्य पुनरुक्तिरुद्भाविता। वस्तुतस्तु 'श्रीमन्नारायण' इत्येव नामधेयं, न तु 'नारायण' इति। तस्मान्न तत्र पुनरुक्तिः।

अथ मञ्जूषायां श्रीमद्भिर्या संस्कृतसेवा क्रियते तदर्थमनेकशो धन्यवादाः। इति।

---

# भारतीयसंस्कृतेरुद्गमः

[ श्रीसुनीतिकुमारचट्टोपाध्यायो भाषाचार्यः ]

पाश्चात्यविदुषां, तन्मतमङ्गीकुर्वतां भाषातत्त्वविदां भारतीयानाञ्च मतेन वैदिक-भाषा-भाषिणो जनाः कुतश्चिदन्यस्मात् स्थानाद् भारवर्षमागताः। भारतीयपरम्परानुसारेणापि मुनिप्रमुखाणां जनानां मूलजन्मभूमिर्हिमवतः पृथग् उत्तरकुरुनामधेयो जनपद आसीत्। तथापि भारतभूमौ वैदिकभाषाया भारतीयसंस्कृतेश्च पूर्णाङ्गो विकासोऽभूत्, वयञ्च भारतीयाः क्रमशः केवलां भारतभुवमेवात्मनो लोकं चिन्तयितुं प्रवृत्ताः। जानीमो वयं यदिमां भारतभूमिमार्यभाषाभाषिणः, तदितरभाषिणश्च पूर्वमध्यवात्सुः। वर्णानाम् अनुलोम-प्रतिलोम-विवाहवशाच्चानेकाः संकरजातयो भारतभुवि समुत्पन्नाः। ऋषीणां प्रेरणया सर्वा अपीमाः संकरजातयः स्वसंस्कृतिं प्रबन्धेषूपनिबबन्धुः, तत्र चोपादानत्वेनाभ्युपगता आर्यभाषाभाषिणामृषीणां तदितरभाषाभाषिणां जनानामुभयेषामपि मूलभूताः संस्काराः। एतेऽनार्यभाषाभाषिणः पुरा दस्यु-दास-शूद्र-निषाद-किरात-शबर-पुलिन्दप्रभृतिनामभिरभिहिता आसन्, पश्चादेत एव च भिल्ल-कोल्ल-कुवचादिनामभिः प्रख्याता बभूवुः। न खलु तेषां सर्वेऽपि सभ्यताया निम्नतमकोटिमाश्रिताः, परं कतिपये सभ्यतायाः समुन्नतकोटिमप्यारूढा इति वयं विद्मः। संस्कृतग्रन्थेषु सर्वत्रापि वैदिकर्षिनिर्मितसमाजबन्धनबहिर्भूतानामसुरदानव-राक्षसप्रभृतीनां समृद्धेः सभ्यतायाश्च प्रचुरं प्रशंसात्मकं वर्णनमुपलभ्यते, तच्च तेषां सभ्यतायाः समुच्चत्वं प्रमापयति। कतिपयेषु विषयेषु त आर्यभाषाभाषिणां शिक्षका अप्यभूवन्। यद्यप्यादावनयोरार्यानार्ययोर्जाति-सस्कृति-भाषा-निमित्तं पार्थक्यमदृश्यत, तथापीदं मौलिकं जातिकृतं पार्थक्यं क्रमशो ह्रासमुपगतं, ततश्चानयोरुभयोरपि योगेन समुद्भूता काचिन्नवीना सभ्यता भारतभुवि पदं चक्रे। अनन्तरञ्चोभयसामान्या सभ्यता समाजश्चाजायेताम्।

अत एव कतिपयैर्बुधैरित्थमभिधीयते, तेषां तथाभिधानञ्च युक्तियुक्तं प्रतिभाति, यद् भारते द्वौ धर्मसम्प्रदायावास्ताम्—एको नैगमिको वेदानाश्रित्य प्रवृत्तः, अपरश्चागमिको यः पुराणेषु तन्त्रेषु चोपवर्णितः। तथा चोक्तं कुल्लूकभट्टेन मनुसंहिताया-ष्टीकायाम्—"श्रुतिस्तु द्विविधा, वैदिकी तान्त्रिकी च" इति। वैदिकसम्प्रदायोऽग्नियाग-प्रधानः, तदनुष्ठाने च शुद्धार्यसन्ततीनां द्विजानामेवाधिकारो न शूद्राणामितरेषां वा। अस्मिन् वैदिक-याग-विधौ पौराणिकानां ब्राह्मणधर्मस्य च प्रधानदेवानां शिव-विष्णु-गणेश-प्रभृतीनाम्, उमा-लक्ष्मीप्रभृतीनां देवीनाञ्चाद्यत्वे यत् प्राधान्यं दृश्यते तन्नोपलभ्यते स्म। आगम-परम्परा वैदिक-परम्पराया एव विकासरूपा तत्पूरकरूपा च। गृहेषु मन्दिरेषु च क्रियमाणं साम्प्रतिकं मूर्तिपूजनं देवार्चनादिकं वागमिकम्। तद्धि

निषाद-भाषाभाषिणोऽपि संस्कृतस्य विकासकर्मणि किञ्चित् साहायकमाचरन्। अत एव, भारतवर्षमधिवसतां सर्वेषामेव जनानां संयुक्तरूपेण स्वस्वभाषाभिः प्रदत्तैः शब्दैः समन्वितं विकसितञ्च परवर्त्ति संस्कृतं सम्पूर्णभारतस्य शिष्टभाषा राष्ट्रभाषा च बभूव, यस्या भारते केनापि वर्गेण विरोधो न कृतो न वा प्रातिकूल्यमाचरितम्। सम्प्रति तु नितान्तं तत्प्रतिकूलैव परिस्थितिः, यद् दक्षिणभारतस्य महान् जनसमूहः संस्कृतं प्रति वैरं प्रदर्शयति। यदि ते संस्कृतस्य प्रकृतिं, भारतस्य संस्कृतेर्धर्मस्य राजनीतेश्चैक्य-सम्पादने महत्त्वमुपयोगित्वञ्चाकलयिष्यंस्तदा कथमपि तथाविधं वैरं न प्रादर्शयिष्यन्। भारतस्यानार्यभाषाभाषिण आर्यभाषाभाषिणो महर्षिवंशजास्तदितरे च सर्वेऽपि समभावेन संस्कृतस्य विकासकर्मणि साहायकमकुर्वन्।

---

## दैवोद्योगयोस्तारतम्यम्

[ उडुपि-वेङ्कट-कृष्णरायः ]

विषमेयं समस्या दैवपुरुषकारयोः कतरद् बलीय इति। कुन्ती च सनिर्वेदमुत्तरमित्थं जगाद—

भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्।
शूराश्च कृतविद्याश्च पुत्रा मे विपिनं गताः॥ इति।

नैतत् खल्वतिरोहितं विदुषां यत् समानपरिश्रमा निर्विशेषबुद्धिमन्तोऽपि बहवो दैनन्दिनं जीवनार्थमाहारमप्यलभमाना भृशं क्लिश्यन्तीति। केचिदविद्या अल्पव्यवसाया अपि भूरिधनाः सुखसंपत्सु निमग्नाः सन्दृश्यन्ते। दैवमहिम्ना दुस्संपादमपि सुखसाध्यं भवति, मोघमप्यमोघीभवति, असंभावितमपि संभाव्यते। एषाऽचिन्त्यप्रभावा शक्तिरेव दैवमिति व्यपदिश्यते, भाग्यं भवितव्यता वेति जनसामान्येन निर्दिश्यते। दार्शनिका अपीत्थं निर्णयन्ति—

यदभावि न तद्भावि भावि चेन्न तदन्यथा।
भवितव्यं भवत्येव नारिकेलफलाम्बुवत्॥ इति।

भर्तृहरिश्च दैवप्राबल्यं विवृणोति पेशलया कथया—

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
मुग्धाः पश्यत दैवमेव हि परं वृद्धौ क्षये कारणम्॥ इति।

इत्थमेवान्योऽपि दैवमाहात्म्यमेवोद्भावयति—दैवे निरुन्धति निबन्धनतां विहाय हन्त प्रयासपरुषाणि च पौरुषाणीति ॥

परं त्वत्र याथार्थ्यविवेचने दैवस्य सर्वात्मना प्राबल्यं नाभ्युपगन्तव्यमिति प्रतिभाति।

हितोपदेशे च समप्राधान्यमुभयोः प्रदर्श्यते रथचक्रसाम्यं प्रतिपाद्य—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ इति।

माघोऽपीममेवाशयं प्रकटयति—

नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ इति।

याज्ञवल्क्योऽप्यत्रैव सम्मतिं प्रदर्शयति—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ इति ॥

अस्य स्मृतिकारस्याभिप्रायेणास्माकं पूर्वदेहसम्बद्धं कर्मैव दैवमित्यभिधीयते, तथा च "लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ती"त्यभियुक्तोक्तिः समर्थिता भवति खलु। पौरुषं सर्वथोपेक्ष्य दैवपरायणैरस्माभिर्न कथञ्चिदपि स्थेयम्। यदि च तथा स्थीयते दीर्घसूत्रापराभिधं कातर्यमेवादृतं स्यात्। व्यतिरेकेण च पौरुषमेव परमवलम्बमाना दैवधिक्कारमपि न कुर्याम। कथं कदा वास्माकं कार्यसिद्धि र्भवेदित्यभ्यूहितुमपि वयं न शक्नुमः। उच्यते चाभियुक्तैः—

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ इति।

दैवं च पौर्वदेहिकसम्बद्धं कथं कदा वा परिपाकमुपेयादिति वयं नैव ज्ञातुं प्रभवामः। तथा चास्यादृष्टमिति नामसार्थक्यं प्रतिपादनीयम्। एवं च परस्परसाहाय्यार्थं शास्त्रसम्मतोऽयं पन्था आदरणीयोऽस्माभिः षड्भि र्मनुष्यचिन्तानां सप्तमं दैवचिन्तनमिति।

कविसार्वभौमेनादृतेयं सरणिः सर्वस्मृतिशास्त्रसंमतेति प्रदर्शयितुं शक्यते। कविश्रेष्ठोऽसौ स्वस्मिन् नाटकोत्तमे मुक्ताहारे मध्यमं मणिमिव श्लोकमिमं निवेशयति—

यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुणपुरस्सर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवात्मदशान्तरेषु ॥ इति।

अर्थात् मृतसंजीविन्यादयमोघानामोषधीनां निधिश्चन्द्रोऽपि भाग्यास्तमने अधः पतनं मृतिं चाप्नुयात्, अनूरुमसमर्थं सारथिमपि पुरस्कृत्य तदैव लोकप्रदीपः सूर्योऽपि

निषाद-भाषाभाषिणोऽपि संस्कृतस्य विकासकर्मणि किञ्चित् साहायकमाचरन्। अत एव, भारतवर्षमधिवसतां सर्वेषामेव जनानां संयुक्तरूपेण स्वस्वभाषाभिः प्रदत्तैः शब्दैः समन्वितं विकसितञ्च परवर्त्ति संस्कृतं सम्पूर्णभारतस्य शिष्टभाषा राष्ट्रभाषा च बभूव, यस्या भारते केनापि वर्गेण विरोधो न कृतो न वा प्रातिकूल्यमाचरितम्। सम्प्रति तु नितान्तं तत्प्रतिकूलैव परिस्थितिः, यद् दक्षिणभारतस्य महान् जनसमूहः संस्कृतं प्रति वैरं प्रदर्शयति। यदि ते संस्कृतस्य प्रकृतिं, भारतस्य संस्कृतेर्धर्मस्य राजनीतेश्चैक्य-सम्पादने महत्त्वमुपयोगित्वञ्चाकलयिष्यंस्तदा कथमपि तथाविधं वैरं न प्रादर्शयिष्यन्। भारतस्यानार्यभाषाभाषिण आर्यभाषाभाषिणो महर्षिवंशजास्तदितरे च सर्वेऽपि समभावेन संस्कृतस्य विकासकर्मणि साहायकमकुर्वन्।

———

## दैवोद्योगयोस्तारतम्यम्

[ उडुपि-वेङ्कट-कृष्णरायः ]

वैषमेयं समस्या दैवपुरुषकारयोः कतरद् बलीय इति। कुन्ती च सनिर्वेदमुत्तरमित्थं जगाद—

भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्।
शूराश्च कृतविद्याश्च पुत्रा मे विपिनं गताः॥ इति।

नैतत् खल्वतिरोहितं विदुषां यत् समानपरिश्रमा निर्विशेषबुद्धिमन्तोऽपि बहवो दैनन्दिनं जीवनार्थमाहारमप्यलभमाना भृशं क्लिश्यन्तीति। केचिदविद्या अल्पव्यवसाया अपि भूरिधनाः सुखसंपत्सु निमग्नाः सन्दृश्यन्ते। दैवमहिम्ना दुस्संपादमपि सुखसाध्यं भवति, मोघमप्यमोघीभवति, असंभावितमपि संभाव्यते। एषाऽचिन्त्यप्रभावा शक्तिरेव दैवमिति व्यपदिश्यते, भाग्यं भवितव्यता वेति जनसामान्येन निर्दिश्यते। दार्शनिका अपीत्थं निर्णयन्ति—

यदभावि न तद्भावि भावि चेन्न तदन्यथा।
भवितव्यं भवत्येव नारिकेलफलाम्बुवत्॥ इति।

भर्तृहरिश्च दैवप्राबल्यं विवृणोति पेशलया कथया—

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुविवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
मुग्धाः पश्यत दैवमेव हि परं वृद्धौ क्षये कारणम्॥ इति।

इत्थमेवान्योऽपि दैवमाहात्म्यमेवोद्भावयति—दैवं निरुणद्धि निबन्धनतां विहाय हन्त प्रयासपरुषाणि च पौरुषाणीति ॥

परं त्वत्र याथार्थ्यविवेचने दैवस्य सर्वात्मना प्राबल्यं नाभ्युपगन्तव्यमिति प्रतिभाति। हितोपदेशे च समप्राधान्यमुभयोः प्रदर्श्यते रथचक्रसाम्यं प्रतिपाद्य—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ इति।

माघोऽपीममेवाशयं प्रकटयति—

नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ इति।

याज्ञवल्क्योऽप्यत्रैव सम्मतिं प्रदर्शयति—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ इति ॥

अस्य स्मृतिकारस्याभिप्रायेणास्माकं पूर्वदेहसम्बद्धं कर्मैव दैवमित्यभिधीयते, तथा च "लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ती"त्यभियुक्तोक्तिः समर्थिता भवति खलु। पौरुषं सर्वथोपेक्ष्य दैवपरायणैरस्माभिर्न कथञ्चिदपि स्थेयम्। यदि च तथा स्थीयते दीर्घसूत्रापराभिधं कातर्यमेवादृतं स्यात्। व्यतिरेकेण च पौरुषमेव परमवलम्बमाना दैवधिक्कारमपि न कुर्याम। कथं कदा वास्माकं कार्यसिद्धि र्भवेदित्यभ्यूहितुमपि वयं न शक्नुमः। उच्यते चाभियुक्तैः—

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ इति।

दैवं च पौर्वदेहिकसम्बद्धं कथं कदा वा परिपाकमुपेयादिति वयं नैव ज्ञातुं प्रभवामः। तथा चास्यादृष्टमिति नामसार्थक्यं प्रतिपादनीयम्। एवं च परस्परसाहाय्यार्थं शास्त्रसम्मतोऽयं पन्था आदरणीयोऽस्माभिः षड्भि र्मनुष्यचिन्तानां सप्तमं दैवचिन्तनमिति।

कविसार्वभौमेनादृतेयं सरणिः सर्वस्मृतिशास्त्रसंमतेति प्रदर्शयितुं शक्यते। कविश्रेष्ठोऽसौ स्वस्मिन् नाटकोत्तमे मुक्ताहारे मध्यमं मणिमिव श्लोकमिमं निवेशयति—

यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुणपुरस्सर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवात्मदशान्तरेषु ॥ इति।

अर्थात् मृतसंजीविन्याद्यमोघानामोषधीनां निधिश्चन्द्रोऽपि भाग्यास्तमने अधः पतनं मृतिं चाप्नुयात्, अनूरुमसमर्थं सारथिमपि पुरस्कृत्य तदैव लोकप्रदीपः सूर्योऽपि

स्वोद्यममहिम्ना सर्वोत्कर्षसमन्वितो भवतीति दैनन्दिनी लोकयात्रा। जनानामस्माकं च दशाः सुखदुःखात्मिका इत्थमेव लोके नियम्यन्ते। दैवेन हस्तावलम्बे दीयमाने विरसापि दशानन्दावहा भवति। इष्टप्रवासजनितं शकुन्तलाया दुःखमतिमात्र-सुदुस्सहमभवत्। पञ्चमाङ्कान्ते सा पत्या तिरस्कृता शाङ्र्गरवादिभिः परित्यक्ता दुःखाद् दुःखतरां दशां गमिता प्रतिपत्तिमूढा दृश्यते। तदानीं च हस्तावलम्बः प्रदीयते-ऽनुकम्पिना दैवेन मेनकाद्वारा। सप्तमेऽङ्केऽपि अनिरीक्षितेनैव पथा दुष्यन्तो मातलिना मारीचाश्रमं प्राप्य पुत्रपत्नीसंगमं लब्ध्वा सुतरां संप्रीतो भवति। रघुवंश-काव्यस्योपदेशामृतमपि सीतापरित्यागानन्तरं दुःखाभिभूतायास्तस्या अव्याजबन्धुना वाल्मीकिना यथोचितमापन्नार्तिप्रशमनफलाहरणम्। शकुन्तैर्ऌतां शकुन्तलाशिशुं लक्ष्मणपरित्यक्तां च सीतां गृहमानयन्तौ कण्ववाल्मीकी एव परमार्थतो विश्वमित्रे। यदि वयं कविहृदयमालोच्य पश्यामस्तर्हि विश्वामित्रः सर्वथा विश्वस्यामित्र इत्येव वक्तव्यमिति प्रतिभाति। विश्वामित्रस्य च नाम सप्तस्वङ्केषु न कुत्रापि पठ्यते महा-कविना। प्रथमेऽङ्के कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः इति शकुन्तला-जन्मकथासंकीर्तनसमये परिदृश्यते। द्वितीयेऽङ्केऽपि सुरयुवतिसंभवं किल मुनेरपत्यमिति सामान्येन मुनिपदेनैव व्यपदिश्यते।

षष्ठेऽङ्के (अष्टमे श्लोके) मुनिसुताप्रणयस्मृतिरोधिनेति वदता नामसंकीर्तनं परिहृतम्। अन्ततश्च सप्तमेऽङ्के धर्मपत्न्या धर्मपुत्र्याश्चोभयोः परित्यागेन महापात-किनो नामसंकीर्तनं धर्मदारपरित्यागिनो नामसंकीर्तनादपि घोरतरं पापमिति कृत्वा परिह्रियते। उपसंहारेऽपि तत्रैव प्रायश्चित्तमाचरितवत्या मेनकया दुष्यन्तस्य पत्नीपुत्र-समागमवृत्तान्तो ज्ञात इति कृत्वाकाशमार्गेण गत्वा परमार्थतो विश्वमित्राय कण्वमहर्षये निवेदयाय गालवः प्रणोद्यते। विश्वामित्राय वार्तासंप्रेषणमपि नैव स्मर्यते। अन्योऽपि नीतिपाठोऽवधेयोऽस्माभिस्तत्र। समर्थस्यापि दैवस्य कुत्रचित् मानुषसाहाय्यमपेक्षितमेव स्यात्। अदृष्टोऽपीन्द्रो मातलिद्वारा दुष्यन्तापरनाम्नः पुरुषकारस्य साहाय्यं याचते। साहाय्यप्रार्थनार्थं प्रेषयंश्च मातलिं प्रतिनिवर्तनसमये मारीचाश्रममार्गेण दुष्यन्तं नीत्वा सर्वथाविचिन्तितं पत्नीपुत्रसमागमं कारयेति सन्दिश्यैव प्रहिणोति। वैराग्यसंपन्नोऽपि कण्वो दुहितृप्रीतिपरिपूर्णहृदयः शकुन्तलाया भाविनं दौर्भाग्यं ग्रहशान्त्यादिभिः परि-मार्ष्टुकामो धूमाकुलितदृष्टिर्भवति, तस्या विवाहसमये चासन्निहितो भवति। अक्षान्ति-सारसर्वस्वस्य दुर्वाससः आगमनेऽप्यसन्निहित एव। यावदसौ प्रतिनिवर्तते, तावद् दुष्यन्त-परिणीतामापन्नसत्त्वां शकुन्तलां ज्ञात्वा भर्तृमत्या भर्तुः समीपे प्रापणमात्मनः कर्तव्यं मनुते। अत्रापि दुर्वाससः आगमनं दुष्यन्तनिर्गमनदिनेऽपराह्णे तदनन्तरदिने

प्रातर्वा संवृत्तमिति प्रतिभाति। यतो राजधान्या आश्रमप्रापणाय दिनत्रयगमनीयोऽध्वा संक्रमितव्य आसीत्। अत्र चास्माभिः सम्यगवधेयोऽयमंशो यद् दुष्यन्तस्य राजधानी-प्रापणात्पूर्वमेव दुर्वासस आश्रमागमनमासीत्, तथाच दुष्यन्तावरोधगृहानयनकारयिता जनस्तेन न प्रेषित आसीत्। सार्धस्य दिनस्य प्रयाणानन्तरमेवाश्रमः प्राप्यो राज्ञा तस्य सेवकेन वा। भवतु नामैषोऽवान्तरः सन्दर्भः। यस्मिन् दिवसे कण्वो न्यवर्तत, तदा तिथिः पूर्णिमेति सुस्पष्टं प्रतीयते, यतोऽर्कचन्द्रयोर्युगपदेवोदयास्तमये भवत इति ऋषिकुमारश्लोकात्पूर्वोदाहृताज्जानीमः। तथा च प्रातः प्रथमा तिथिरतीवाप्रशस्ता प्रयाणार्थं सर्वथा निषिद्धा च। तथापि धूमाकुलितदृष्टिः कण्व इदं नाजानादेव। ज्ञानचक्षुषा समतीतं भवद्भावि च सर्वं द्रष्टुं समर्थस्यापि देवकल्पस्यापि पुत्रीविषये मानुष्यसहजमज्ञत्वमेव प्रतिपाद्यतेऽत्र कण्वमहर्षेः। ज्ञातिकुलैकसंश्रयां भर्तृमतीं जनोऽन्यथा विशङ्कत इति धर्मशास्त्रसम्मतमेव मार्गमनुरुन्धानो महर्षिर्गौतमीसहितां स्वशिष्यपुरस्कृतां शकुन्तलां पतिकुलं प्रेषयामास, परन्तु विपद्विपदमन्वबध्नात्, अङ्गुलीयकं सरसि च्युतमभवत्, शकुन्तला च शापव्यवहितस्मृतिना भर्त्रा तिरस्कृता। अत्र च पति-व्रतया पत्युः संस्मरणं युक्तमेव, तथाच दुर्वाससा दत्तः शापोऽतिघोर इति वदन्ति केचन। अभ्युपगच्छामः, परन्त्वत्र शकुन्तलैव सप्तमेऽङ्के समीचीनमुत्तरं ददाति, नूनं मे सुचरित-प्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरक्तः। अमुमेवार्थं सीतापि "ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः" इत्यभ्युपगच्छति।

संस्कृतसाहित्ये वेदान्तशास्त्रेऽयमेव मार्गोऽनुस्रियते। भासनाटकेषु मार्गममुमेवा-न्वयव्यतिरेकमुखेणादृतं पश्यामः। दैवानुग्रहेणोदयनः स्वप्नवासवदत्तनाटके "मृता"-मपि वासवदत्तां लब्धवान्। बालचरितनाटके तु कंसो दैवधिक्कारे प्रवृत्तः "दैवं पुरुष-कारेण वञ्चयिष्याम्यहं ध्रुवमि"ति प्रतिज्ञां चकार, परन्तु स्वयमेव निधनं प्रापेत्य-स्माभिर्ज्ञायते। अविमारके चेदं पठामः—

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः, को वा न सिध्यति ममेति करोति कार्यम्।
यत्नैः कृतैः पुरुषता भवतीह नृणां दैवं विधानमनुगच्छति कार्यसिद्धिः॥

वाल्मीकिव्यासावपि मार्गमिममेवाद्रियेते। अस्माकं दैनन्दिनव्यवहारे कुत्रचित् क्वचित्कैकेयीशूर्पणखासदृशा दुष्टा जनाः सन्दृश्यन्ते। यावच्छक्ति प्रयत्यैतेषां दुष्टः प्रभावः परिहर्तव्योऽस्माभिः। ऋष्यश्रृङ्गविश्वामित्रहनूमत्सदृशान् सज्जनानपि निर्व्या-जानापद्बन्धूंस्तत्र तत्र सन्धास्यामः। एतेषां यथोचितमनुग्रहं संपादनीयमिति सन्देश-मुपनयतीव भगवान्वाल्मीकिः। इममेवार्थमन्यः कविः पुरस्करोति—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ इति ।

सदा धर्म्यं पन्थानमेवानुसरन्तः पाण्डवाः श्रीकृष्णमेव भगवन्तं सहायं प्राप्य सुबहून्क्लेशानप्यविगणय्यान्ततः सात्त्विकेन सुखेन सम्पन्ना बभूवुरिति भगवतो व्यास-महर्षेः सन्देशः। संसारभयेन व्याकुलीभूतानामस्माकं धर्म एव तारक इति गीतायां भगवतोद्घुष्यते—स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति। अन्यत्रापि भगवता प्रतिज्ञायते—न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छतीति। परस्परं विवदमानानां वेदान्ताचार्याणामप्यत्रैव संप्रतिपत्तिः सन्दृश्यते। भगवाञ्छङ्करो भज गोविन्दादिषु स्वोपज्ञेषु स्तोत्रेषु भगवत्पारतन्त्र्यमस्माकमुद्घोषयति। भगवतो रामानुजस्य सन्देशः संगृह्यते वेदान्तदेशिकैरित्थं—

न्यस्य त्वत्पादपद्मे निजभरमतुलं निर्भरो निर्भयोऽस्मि। इति।

भगवतो मध्वापरनाम्न आनन्दतीर्थस्योपदेशसारोऽस्मिन् श्लोके दृश्यते—

कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम्।
हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥ इति।

इत्थं च समस्याया उत्तरं समादध्मः। एतयोर्द्वयोः परस्परसम्मेलनेनैव कार्यसिद्धिः। दैवं स्वर्गवासेन सर्वात्मना विरसमपि भूत्वा ( उर्वश्याः पुरूरवसोऽन्वेषणमत्राद्रियते ) पुरुषकारमेवाकाङ्क्षति। पुरुषकारोऽपि ब्रह्मार्पणबुद्ध्यैव सर्वेषु कार्येषु प्रवर्तेत। अयमेव मार्गः कविसार्वभौमेन रतिमुभयप्रार्थना कुरुते इति वदताभ्युपगतः। तथा चान्येनोच्यते—

परस्परतपःसंपत्फलायितपरस्परौ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥ इति।

एतावेव दैवपुरुषकाराविति व्याख्यामः ॥

---

कवीन्द्र-रवीन्द्रनाथस्य

# भिक्षुकन्या ('काङालिनी')

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

आनन्दमय्या जगतो जनन्या समागमेनैव ननन्द देशः।
अमूं तु पश्याद्य निकेतबाह्य-द्वारान्तरालस्थितभिक्षुकन्याम् ॥१॥
पूजाङ्गनोत्थो मुरलीनिनादो विवेश तस्या अपि कर्णरन्ध्रम्।
विषादपूर्णे नयने बभासे स्वप्नो दुराशासुखसम्भवोऽतः ॥२॥

प्रभातदीप्तिर्विततता समन्ताद् विभाति नेत्रे मधुरं स्म नणाम् ।
रराज विष्णोः पदमध्यवर्ती मेषान्त-चामीकरवर्णभानुः ॥३॥
गतागतं तत्र नृणां बभूव हास्येन गीतैर्मुखरा दिशश्च ।
विचित्रवर्णाद्भुतवेषजातैर्बभुश्च रत्नाचितहेमभूषाः ॥४॥
दास्यः कियत्यः कति किङ्कराश्च रङ्गं विचेरुर्निजकर्मबद्धाः ।
प्रसूनसज्जाक्षणि बालिकायाः सर्वा दिदीपे मृगतृष्णिकेव ॥५॥
अहो वितष्ठे हृदयेन शून्या स्थिरं पुरस्तात् प्रहितेक्षणासौ ।
हा भिक्षुकन्या मलिनाम्बरा सा न्यस्येत् पदं तत्र कथं सुदीना ॥६॥
श्रुतं तया यज्जननी समेता हर्षाप्लुतं तत् सफलं हि विश्वम् ।
स्नेहेन मातुश्चिरवञ्चिता सा समागतातो जननीं दिदृक्षुः ॥७॥
मन्ये ततोऽस्या गलदश्रुनेत्रे बभूवतुर्बाष्पविलुप्ततारे ।
निधाय दृष्टिं प्रतिमामुखे सा प्रोवाच बाला करुणाभिमानात् ॥८॥
"का रीतिरेषा तव सर्वगात्रे रत्नोज्ज्वलान्यम्ब ! विभूषणानि ।
सत्यं यदि त्वं जननी मदीया वासः कथं मे मलिनं वदाद्य" ॥९॥
अमी हि सर्वे शिशवश्च बाला अन्योऽन्यकण्ठप्रतिदत्तहस्ताः ।
पूजाङ्गने तत्र कलस्वरेण हर्षेण कीदृङ् नन्तृतुः समन्तात् ॥१०॥
द्वारैकदेशं करतोऽवलम्ब्य सा भिक्षुकन्या सकलान् ददर्श ।
विमुच्य दीर्घं श्वसितं च दुःखात् तत्र स्थितैवं मनसाचचक्षे ॥११॥
"एषां समाजे न पदं ममास्ति यतः प्रभातेऽद्य कयापि मात्रा ।
स्वमङ्कमारोप्य विचुम्ब्य चास्यं मया पिधानं परिधापितं न" ॥१२॥
भ्राता स्वकोऽस्या यदि नास्ति सत्यमाह्वास्यतीमां न हि कोऽपि किंचित् ।
अन्यस्य कस्यापि समेत्य मात्रा स्नेहः किमस्यै न निवेदनीयः ॥१३॥
धृत्वा कवाटं प्रतिहारभूमौ किं रङ्गशोभासु निबद्धदृष्टिः ।
विशून्यचित्ता रहिता सहायैरेकाकिनी स्थास्यति केवलं सा ॥१४॥
चित्तं यदास्यास्तमसा प्रपूर्णं वंशीध्वनिर्वै विरसं श्रुतः स्यात् ।
द्वारे स्थितं चेत् सजलाक्षियुग्मं भवेत् कठोरो ननु हास्यराशिः ॥१५॥
बालाननाथानुरसि ग्रहीतुं भो भो जनन्यः ! सकलाः समेत ।
विन्दन्ति नाम्बा यदि मातृहीनाः किमर्थमायोजनमुत्सवस्य ॥१६॥
तिष्ठेदुपान्ते यदि शुष्कमत्र विषादलुप्तद्युति वक्त्रमेकम् ।
वृथा तदानीं सहकारशाखा वृथा च सर्वे कलशाः शुभाय ॥१७॥

---

# वेदान्तविमर्शः

[ श्रीचारुकृष्णदर्शनाचार्यः ]

न च कार्यब्रह्मोपासकानामेवोर्ध्वगत्या ब्रह्मलोकप्राप्तिः, "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" इत्यादिब्रह्मलोकगतिप्रकरणेषु कार्यब्रह्मोपासनमुक्तं श्रुतिषु, परं "ये चारण्ये श्रद्धां तप इत्युपासते" "ये चामी अरण्ये श्रद्धां सत्यमित्युपासते" "कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्" अक्षिपुरुषं चाभिधाय अर्चिष-मेवाभिसंभवतीत्युक्तम्। अतोऽर्चिरादिगतया परब्रह्मप्राप्तिरेव न कार्यब्रह्मप्राप्तिः, "यथाक्रतुरस्मिल्लँोके पुरुषो भवती"ति श्रुतेः। भगवतापि "यत्र काले त्वनावृत्ति-मावृत्तिं चैव योगिनः" इति प्रतिज्ञाय—

"अग्निर्ज्योतिरहः शुक्लः षन्मासा उत्तरायणम्।
अत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥"
"धूमो रात्रिस्तथा कृष्णः षन्मासा दक्षिणायनम्।
अत्र चन्द्रमसं ज्योति र्योगी प्राप्य निवर्त्तते॥" इत्युक्तम्।

श्रुतिश्चार्चिरादिगामिनां ब्रह्मप्राप्तिमभिधाय धूमादिगामिनां पुनरावृत्तिमुवाच। "तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते" इति। सांख्याश्च तार्कि-कास्तर्केणैव सिद्धान्तं स्थापयन्तः स्वनयेनैव यथाकामं श्रुतीर्व्याचक्षाणास्तर्कातीतं ब्रह्मलोकमेवासहमाना यथाकथञ्चित् कार्यब्रह्मलोकपरतया व्याकुर्वन्ति स्म। तत्र "कार्यं बादरिरस्य गत्युपपत्ते"रित्युल्लिख्य "अप्रतीकालम्बनान्नयतीति बादरायण" इति निराकृत्य परब्रह्मलोकगतिमेव सिद्धान्तितवान् भगवानाचार्यः। पञ्चाग्निविद्यायामेव गतिश्रुतावपि सा सर्वेष्वेवोपासनेषून्नेया, तदेतत् सूत्रितम् "अनियमः सर्वेषामि"ति। मायिकाश्च सिद्धान्तसूत्रहीनमेवाधिकरणं बलादवकल्प्य यथाकामं व्याचक्रुः। कार्य-ब्रह्मपक्षे "स एनान् ब्रह्म गमयतीति" श्रुतिं व्याकुप्येत् क्लीबलिङ्गब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्म ब्रह्मविदो जनाः" इत्यादौ तथा दर्शनात्, न हि ब्रह्मविदः कार्यं ब्रह्म गच्छन्ति "ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिविरोधात्। "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इति श्रुत्यन्तराच्च। अमृताव्ययपुरुषपदस्य परब्रह्मण्येव मुख्यत्वात् "पुरुषान्न परं किञ्चित्" "पुरुष एवेदं सर्वम्" "पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" इत्यादौ पुरुषपदस्य परब्रह्मपरत्वाच्च।

"भगवानित्ययं शब्दस्तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवेऽखिलात्मनि"॥ इति स्मृतेश्च।

हिरण्यगर्भलोकगतिश्च नार्चिरादिमार्गेण किन्तु मार्गान्तरेणैव। यथाह याज्ञवल्क्यः—

"यदस्यान्यद् रश्मिशतमूर्ध्वमेव व्यवस्थितम्।
तेन देवशरीराणि स धामानि प्रपद्यते ॥" इति।

एतदतिरिक्तेनैव चैकेन रश्मिना हिरण्यगर्भलोकमतिक्रम्य याति ब्रह्मलोकम्। तदप्याह स एव—

"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥" इति।

सूर्यलोकं हिरण्यगर्भलोकं चातिक्रम्य यो रश्मिर्वर्त्तते तेन याति पारमेश्वरं धामेत्यर्थः। तस्मादर्चिरादिगत्या याति मुक्तो ब्रह्मलोकमेव न हिरण्यगर्भलोकमिति स्थितम्।

मुक्तेश्च फलत्वम् "एवं मुक्तिफलानियम" इति सूत्रयताचार्येणैव कण्ठतः प्रोक्तम्। प्राप्तप्राप्तिपरिहृतपरिहारवच्च मुक्ति र्न वेदान्तेषूक्ता। यदि नाम मदीयत्वज्ञानमेव प्राप्तिस्तर्हि नष्टस्य प्राप्तत्वमेव नास्ति, यदि च स्वकीयत्वमेव प्राप्तिस्तर्हि नष्टस्यापि प्राप्तत्वात् तज्ज्ञानेऽपि प्राप्ति र्न भवति सिद्धत्वात्, किन्तु ज्ञानमेव भवतीति प्राप्तप्राप्तिरित्यपार्थमेव। एवं परिहृतपरिहारोऽपि ज्ञेयः। अतः श्रुतिषु सर्वत्र मुक्तिरेवोच्यते न तु मुक्तस्य मुक्तिरिति। यथा—

"यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति।"
"तेन धीरा अपि यन्ति स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥"

"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" "गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवती"ति "विमुक्तश्च विमुच्यते" इति परमात्मपरमेव प्रकरणादिति प्रागेवोक्तम्। भगवताप्युक्तं "मुच्यन्ते तेऽपि कर्मभिः" 'सुखं बन्धात् प्रमुच्यते" इति। सूत्रे च पारमर्षे "मुक्तः प्रतिज्ञानात्" "आत्मा प्रकरणात्" इति। सांख्यैरेवोच्यते आत्माकर्तृत्वादिभिः प्रकृतेरेव मुक्तिर्नात्मन इति। तथाचेश्वरकृष्णः—

न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
बध्यते मुच्यते संसरति च नानाश्रयप्रकृतिः ॥ इति।

अतो "मोक्षं प्राप्त इव स्वयं विजयते विष्णुविकल्पोज्झित" इति रिक्तं वचः।

"तत्त्वमस्यादिवाक्योत्थं मोक्षस्य साधकमि"ति च नवीनमेव केनचिन्मायिकेन प्रणीतं न प्रमाणम्।

---

## प्रतिवचनम्

[ वाराणसेयः श्रीरघुनाथशर्मा ]

१। इमे वचसी परस्परं व्याघ्नाते इत्ययुक्तमेव, कर्तरि कर्मव्यतिहार इत्यस्यापवादभूतेन परस्परोपपदाच्चेति वक्तव्यमिति वार्त्तिकेनात्र परस्मैपदविधानादिति।

उत्सर्गापवादयोरुभयोरपि कर्मव्यतिहारविषयत्वात्। अत्र परस्परपदेन कर्मव्यतिहारस्य स्फुटं प्रतीयमानत्वात्। आङो यमहन इति सूत्रन्तु केवल आङि कर्मव्यतिहाराविषयेऽकर्मके स्वाङ्गकर्मके वा हन्तौ प्रवर्तते। अत्र तु कर्मव्यतिहारविषये नाकर्मकत्वं न वा स्वाङ्गकर्मकत्वमिति न प्रवर्तते। तस्मादत्र व्याहत इत्येव युक्तम्।

२। अथ तां सर्वोपायविरहप्रदर्शनेन भीषयते। अत्र यद्यपि कुञ्चिकयैनं भाययति इत्यत्रेव षुगात्मनेपदाभाव एव युक्तस्तथापि हेतोः ( प्रयोजकस्य ) अपि भयहेतुत्वे व्याघ्रो मुखव्यादानेन भीषयते इतिवत् सर्वेषां संमतः, प्रयोजकस्यापि भयहेतुत्वात्। सूत्रे च प्रयोजकमात्रस्य भयहेतुत्वं न विवक्षितं मानाभावात्, तथाऽत्रापि महासाहसिकः सर्वोपायविरहप्रदर्शनेन तां भीषयते इति युक्तमेव। हेतोः स्वरूपतो भयजनकत्वाभावे तु न। साधुस्तां सर्वोपायविरहप्रदर्शनेन भाययति।

३। आदरातिशयजननार्थं स्वाभिमतमर्थं भङ्ग्या निषेधति इत्येव युक्तम्। प्रेरणाया अविवक्षणात्। तदविवक्षा च भङ्गीपदसंनिधानेन प्रतीयते। भङ्ग्या हि स्वयं निषेधति न तु मात्रादिना निषेधयति। निषेधं करोतीति प्रातिपदिकाण्णिचि तु वृत्तिरेव दुर्लभा। सविशेषणत्वात्, अर्थे षष्ठीप्रसङ्गाच्च।

४। श्रोतारः कामदुघा गिरः प्रयोक्तणामिष्टानर्थान् दुहन्ति इति युक्तम्। गां दोग्धि पय इतिवत्। अत्र गिरामकथितकर्मत्वम्, अर्थानां तु मुख्यं तत्। कामदुघानां कर्मकर्तृत्वे तु न दुहस्नुनमां यक्चिणौ इतिशास्त्रात् कामदुघाः प्रयोक्तणामिष्टानर्थान् दुहते इति युक्तम्।

---

## समाधानम्

[ वाराणसेयः श्रीरघुनाथशर्मा ]

उद्योगे प्रजागरपर्वणोऽन्ते बहुविधराजनीतिमुपदिशन् विदुरो राज्ञा परतत्त्वविषयकसंशयान् पृष्टः, शूद्रयोनावहं जातो नातोऽन्यद् वक्तुमुत्सहे इति स्वस्य प्रत्युत्तरदानेऽनर्हतां प्रतिपाद्य सनत्सुजातं स्मृत्वा तेन चोपस्थितेन प्रत्युत्तरं दापयामासेति कथा। परमारण्यके कौशिकब्राह्मणं प्रति मिथिलास्थो धर्मव्याधः शूद्रयोनावुत्पन्नः कथं सर्वानपि धर्मान् व्याचष्टे ति न वयं प्रतीम इति कस्यचिज्जिज्ञासा प्रकाशिता।

अत्रेदं समाधानं प्रतीयते—शूद्रयोनौ जातो विदुरो धृतराष्ट्राय परतत्त्वं नोपदिदेश, अपशूद्राधिकरणे हि वेदान्तसूत्रेषु शूद्रस्य वेदानधिकारः प्रतिपादितः। वेदान्तेषु च ब्रह्मण उपनिषन्मात्रवेद्यत्वरूपमौपनिषदत्वं प्रतिपादितम्, तन्त्वौपनिषदं पुरुषं पृच्छामि इत्यादिषु। अतोऽनधिकाराच्च विदुरकर्तृकपरतत्त्वोपदेशो धृतराष्ट्राय। धर्मस्तु

श्रुतिस्मृतिभ्यां पुराणैश्चाधिगम्यते। पुराणश्रवणे च शूद्रस्याप्यधिकार उक्तः। श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत इत्यादिविधिभ्यः। अतः शूद्रकर्तृकपरतत्त्वोपदेशाभावस्य शूद्रकर्तृकधर्मतत्त्वोपदेशेन सह को विरोधः, भिन्नविषयकत्वात् ?

अष्टविधान् विवाहान् प्रतिपादयन्ति धर्मशास्त्राणि। कन्याः परिणिनीषतामेव तान् धर्म्यानधर्म्यान्वा प्रत्यपादयन्निति ज्ञायते। राजकन्या राक्षसविधिनाऽपहरन्तः सर्वेऽपि तासां परिणेतार एवासन्निति बहवः कथाः श्रूयन्ते। भगवानपि वासुदेवः स्वयमेव भीष्मकस्य कन्यां रुक्मिणीमपजहार पर्यणैष्ट च। एकस्य विवाहार्थमन्येन कन्यापहरणमदृष्टश्रुतचरम्। एवं स्थिते काशिराजकन्या अपहर्तुं विचित्रवीर्यमप्रेष्य स्वयं तत्र किमिति प्रावृतद् गाङ्गेय इति। एतादृश्या विचित्रतरकथाया अन्यत्र क्वाप्युपलम्भो विद्यते वेति। इत्यपरा जिज्ञासा तत्रैव। अत्रेदं समाधानम्। यत्र खलु राक्षसविवाहविधिस्तत्र राक्षसो युद्धहरणादिति स्मर्यते। न हि तत्र कन्याकर्मकं स्वकर्तृकं युद्धे युद्धेन वा हरणं शब्दतो लभ्यते। तत्र हरणे स्वकर्तृकत्वेन संकोचे मानाभावः। अतः स्वकर्तृकं स्वीयकर्तृकं वा युद्धे युद्धेन वा कन्याहरणं राक्षसविवाहनिमित्तं भवत्येवेति।"

---

# इमे वचसी परस्परं व्याघाते

[ श्रीकृष्णस्वामी आर्यः ]

ननु परस्परोपपदाच्चेति वार्त्तिकेन [ १।३।१६ ] अत्र कर्तरि कर्मव्यतिहारे [ १।३।१४ ] इति सूत्रस्य बाधात् कथमत्राऽऽत्मनेपदमिति चेत्, न, वाक्येऽत्र परस्परमित्यस्य कर्मकारकतया, उपपदत्वेनाऽस्वीकारात्। नापि क्रियाविशेषणतयोपपदत्वम् तत्प्रत्ययनुपूर्वमीपलोमकूलम् [४।४।२८ ] इत्यस्य प्रामाण्येन क्रियाविशेषणानां कर्मत्वेन स्वीकारात्।

उपपदस्य कथमपि कारकविभक्तित्वं न भवति, भवति चेद् विशेषविधानेन, तदपि विभक्त्या न तु कारकतया। यथा स्वामीश्वरेति [ २।३।३९ ] षष्ठीसप्तम्यौ—गवां गोषु वा स्वामी। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् इति चात्र भट्टोजिः।

तथा च सहयुक्तेऽप्रधाने [ २।३।१९ ] इत्यत्र "सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिबलीयस्त्वाद् अन्यत्रापि" इति वार्त्तिकमुपन्यस्य "क्वान्यत्र ? गाः स्वामी व्रजति" इति भाष्यम्। "अत्रापि व्रजिक्रियायां गवां कर्मत्वात् तन्निबन्धना द्वितीया स्वामीश्वरेति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते" इति चात्र कैयटः।

इदमप्यत्रोपोद्बलकम्—

परस्परोपपदाच्चेति वार्त्तिकोपरि भाष्ये, काशिकायाम्, कौमुद्यां च परस्परस्य व्यतिलुनन्ति इति षष्ठ्यन्तस्यैव प्रयोगः, द्वितीयेतरा वा कारकविभक्तिर्न दृश्यते।

अन्योन्यं स्म व्यतियुतः शब्दाञ्छब्दैस्तु भीषणान्।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी॥ [ ८।६ ]

इत्यत्र 'अन्योन्यम्' इति प्रयोगश्चिन्त्यः। अन्योन्यस्येत्यर्थेऽन्योन्यमिति प्रयोगः कृत इति प्रतीयते। एवं सति अन्योन्याम् इति भाव्यम्। तदपि न, स्त्रीनपुंसकयोरभावात्। क्रियाविशेषणत्वे सति पूर्वोक्तरीत्योपपदत्वं न भवति।

प्रकारे गुणवचनस्य [ ८।१।१२ ] इत्यस्य भाष्ये कर्मव्यतिहारे सर्वनाम्नो द्वित्वप्रदर्शने "अन्योन्यमिमे ब्राह्मणा भोजयन्ति, अन्योन्यस्य भोजयन्ति" इति षष्ठीद्वितीययोः प्रयोगः। अन्योन्यस्येत्यत्र "कर्मणः शेषत्वविवक्षायां षष्ठी" इति नागेशः।

एवम्—

(१) इमे वचसी परस्परं व्याघ्नाते। (२) इमे वचसी परस्परस्य व्याहतः।

नन्वत्रोत्तरस्मिन् वाक्ये आङो यमहनः [ १।३।२८ ] इत्यात्मनेपदं स्यादिति चेन्न, यथोत्तरं मुनीनां प्रामाण्यमिति वचनेन, अपवादभूतेन वार्त्तिकेन परसूत्रस्यापि बाधात्। "आहते पद्भ्यां देवदत्तः" इत्यादौ च सूत्रं चरितार्थम्॥

अपरं च—द्वितीयान्तस्य ( कारकस्य क्रियाविशेषणस्य वा ) उपपदत्वेन गणनायां परस्परं व्याघ्नाते इत्यत्र आघ्नाने इति कृदन्तप्रकृतिकसुबन्तेन साधुत्वमुपपादनीयम्। अत्र ताच्छील्यवयोवचनशक्तिषु चानश् [ ३।२।१२९ ] इत्यनेन शक्त्यर्थे चानशि, न लोकेत्यत्र तृन्निति प्रत्याहारेण षष्ठीनिषेधे परस्परम् इत्यत्र कर्मणि द्वितीया। एवम् "इमे वचसी परस्परं व्याघ्नाते" इत्यत्रानुपपदत्वेन, "इमे वचसी परस्परं व्याघ्नाने" इति सुबन्तत्वेन वा साधुत्वोपपत्तिः।

## वातव्याधेर्निदानम्

वातव्याधिरतीव क्लेशकरः। एतस्य मूलं विषमद्यावध्यनाविष्कृतमेवासीत्। साम्प्रतं नभोसिविरिस्कचिकित्साभवनस्याध्यापकाभ्यां जालेस्कि-भोरोवियेवाभ्यामस्य निदानं विषमाविष्कृतम्। इतः परं प्रतीकारपथाविष्करणमपि सुकरं स्यात्।

———

## नियतिः केन बाध्यते

पञ्चसप्ततिवर्षवया माइकेल लिङ्कन् साधारणस्नानसरोवरे सन्तरन् निद्रानिलीढनेत्रः सलिलनिमज्जनेन पञ्चत्वमुपगतः। रयटारः (२७।८।१९५८)।

---

## पुष्पस्य भाषा

भूविज्ञानविदां केषाञ्चन कर्णे कुसुमेन भुवि वज्रस्य सद्भावः कथित इव प्रतिभाति। चेरेपाखापर्वतसन्निधाने परिभ्राम्यता उजवेकराष्ट्रीयविश्वविद्यालयस्य वज्ञानिकेन इयेजदाकोफ-महोदयेन यदृच्छया टिउलिपपुष्पगुच्छमेकं समासादितम्। पुष्पाणां दलेषु घनलोहितवर्णा रेखा विराजन्ते स्म। वर्णानां विश्लेषणेन तत्रत्यायां भूम्यां स्फटिकप्रस्तरखण्डानां वज्रादीनां च सद्भावो विज्ञातः।

---

## रसमञ्जरी

### अपूर्वा पतिभक्तिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

पतिः। प्रिये लवङ्गलतिके! बलवदस्वस्थोऽस्मि। ज्वरो मां भृशं बाधते। पाणिपादं मेऽवसीदति। तत् क्षणं पादौ मे संवाहय।

पत्नी। कः कोऽत्र भोः?

परिचारकः। आर्ये, अहं रामदासः।

पत्नी। अरे रामदास, प्रभुस्ते पीडितः, तच्चरणावस्य संवाहय।

पतिः। अनुगृहीतोऽस्मि। अनुगृहीतोऽस्मि। अहो मे भाग्यम्! मां वर्जयित्वा कस्य वान्यस्येदृशी पतिसेवापरायणा पत्नी विद्यते? मम प्रियया मीमांसाप्यनुशीलिता। जानात्येव सा "यः कारयति स करोत्येव" (Qui facit per alium facit per se) इति। परं पुरुषाः प्रायेण यथावत् परिचरितुं न पारयन्ति। सेवा-शुश्रूषा-परिचर्या-प्रभृतयः शब्दाः स्त्रीलिङ्गा एव। आरोग्यशालास्वपि स्त्रिय एव nurse-पदेषु नियुज्यन्ते, nurse-शब्दोऽपि स्त्रीलिङ्गलातीन-nutricia-शब्दतो निष्पन्नः। अत एव काचन सुन्दरी तरुणी परिचारिका चेत् कर्मण्यस्मिन् न्ययोजयिष्यत सम्यगभविष्यत्। किं वात्र कर्तव्यम्? "प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः।"

इदमप्यत्रोपोद्बलकम्—

परस्परोपपदाच्चेति वार्त्तिकोपरि भाष्ये, काशिकायाम्, कौमुद्यां च परस्परस्य व्यतिलुनन्ति इति षष्ठ्यन्तस्यैव प्रयोगः, द्वितीयेतरा वा कारकविभक्तिर्न दृश्यते।

अन्योन्यं स्म व्यतियुतः शब्दाञ्छब्दैस्तु भीषणान्।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ [ ८।६ ]

इत्यत्र 'अन्योन्यम्' इति प्रयोगश्चिन्त्यः। अन्योन्यस्येत्यर्थेऽन्योन्यमिति प्रयोगः कृत इति प्रतीयते। एवं सति अन्योन्याम् इति भाव्यम्। तदपि न, स्त्रीनपुंसकयोरभावात्। क्रियाविशेषणत्वे सति पूर्वोक्तरीत्योपपदत्वं न भवति।

प्रकारे गुणवचनस्य [ ८।१।१२ ] इत्यस्य भाष्ये कर्मव्यतिहारे सर्वनाम्नो द्वित्वप्रदर्शने "अन्योन्यमिमे ब्राह्मणा भोजयन्ति, अन्योन्यस्य भोजयन्ति" इति षष्ठीद्वितीययोः प्रयोगः। अन्योन्यस्येत्यत्र "कर्मणः शेषत्वविवक्षायां षष्ठी" इति नागेशः।

एवम्—

(१) इमे वचसी परस्परं व्याघ्नाते। (२) इमे वचसी परस्परस्य व्याहतः।

नन्वत्रोत्तरस्मिन् वाक्ये आङो यमहनः [ १।३।२८ ] इत्यात्मनेपदं स्यादिति चेन्न, यथोत्तरं मुनीनां प्रामाण्यमिति वचनेन, अपवादभूतेन वार्त्तिकेन परसूत्रस्यापि बाधात्। "आहते पद्भ्यां देवदत्तः" इत्यादौ च सूत्रं चरितार्थम् ॥

अपरं च—द्वितीयान्तस्य ( कारकस्य क्रियाविशेषणस्य वा ) उपपदत्वेन गणनायां परस्परं व्याघ्नाते इत्यत्र आघ्नाने इति कृदन्तप्रकृतिकसुबन्तेन साधुत्वमुपपादनीयम्। अत्र ताच्छील्यवयोवचनशक्तिषु चानश् [ ३।२।१२९ ] इत्यनेन शक्त्यर्थे चानशि, न लोकेत्यत्र तृन्निति प्रत्याहारेण षष्ठीनिषेधे परस्परम् इत्यत्र कर्मणि द्वितीया। एवम् "इमे वचसी परस्परं व्याघ्नाते" इत्यत्रानुपपदत्वेन, "इमे वचसी परस्परं व्याघ्नाने" इति सुबन्तत्वेन वा साधुत्वोपपत्तिः।

---

# वातव्याधेर्निदानम्

वातव्याधिरतीव क्लेशकरः। एतस्य मूलं विषमद्यावध्यनाविष्कृतमेवासीत्। साम्प्रतं नभोसिविरिस्कचिकित्साभवनस्याध्यापकाभ्यां जालेस्कि-भोरोवियेवाभ्यामस्य निदानं विष्माविष्कृतम्। इतः परं प्रतीकारपथाविष्करणमपि सुकरं स्यात्।

---

## नियतिः केन बाध्यते

पञ्चसप्ततिवर्षवया माइकेल लिङ्कन् साधारणस्नानसरोवरे सन्तरन् निद्रानिलीढनेत्रः सलिलनिमज्जनेन पञ्चत्वमुपगतः। रयटारः (२७।८।१९५८)।

---

## पुष्पस्य भाषा

भूविज्ञानविदां केषाञ्चन कर्णे कुसुमेन भुवि वज्रस्य सद्भावः कथित इव प्रतिभाति। चेरेपाखापर्वतसन्निधाने परिभ्राम्यता उजवेकराष्ट्रीयविश्वविद्यालयस्य वज्ञानिकेन इयेजदाकोफ-महोदयेन यदृच्छया टिउलिपपुष्पगुच्छमेकं समासादितम्। पुष्पाणां दलेषु घनलोहितवर्णा रेखा विराजन्ते स्म। वर्णानां विश्लेषणेन तत्रत्यायां भूम्यां स्फटिकप्रस्तरखण्डानां वज्रादीनां च सद्भावो विज्ञातः।

---

## रसमञ्जरी

### *अपूर्वा पतिभक्तिः*

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

पतिः। प्रिये लवङ्गलतिके! बलवदस्वस्थोऽस्मि। ज्वरो मां भृशं बाधते। पाणिपादं मेऽवसीदति। तत् क्षणं पादौ मे संवाहय।

पत्नी। कः कोऽत्र भोः?

परिचारकः। आर्ये, अहं रामदासः।

पत्नी। अरे रामदास, प्रभुस्ते पीडितः, तच्चरणावस्य संवाहय।

पतिः। अनुगृहीतोऽस्मि। अनुगृहीतोऽस्मि। अहो मे भाग्यम्! मां वर्जयित्वा कस्य वान्यस्येदृशी पतिसेवापरायणा पत्नी विद्यते? मम प्रियया मीमांसाप्यनुशीलिता। जानात्येव सा "यः कारयति स करोत्येव" (Qui facit per alium facit per se) इति। परं पुरुषाः प्रायेण यथावत् परिचरितुं न पारयन्ति। सेवा-शुश्रूषा-परिचर्या-प्रभृतयः शब्दाः स्त्रीलिङ्गा एव। आरोग्यशालास्वपि स्त्रिय एव nurse-पदेषु नियुज्यन्ते, nurse-शब्दोऽपि स्त्रीलिङ्गलातीन-nutricia-शब्दतो निष्पन्नः। अत एव काचन सुन्दरी तरुणी परिचारिका चेत् कर्मण्यस्मिन् न्ययोजयिष्यत सम्यगभविष्यत्। किं वात्र कर्तव्यम्? "प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः।"

# पुस्तक-परिचयः

**BELLES HISTOIRES** par la Mère. Sri Aurobindo Ashram, Pondicherry. Rs. 2.

**कथामञ्जरी** श्रीमातुः। श्रीअरविन्दाश्रमः, पण्डिच्चेरी। मूल्यं रूप्यकत्रयम्।

कस्य वा न विदितः पण्डिचेरीप्रदेशस्थितः श्रीअरविन्दाश्रमः, "तस्य च साक्षादात्मभूताचार्याध्यात्मविदां वन्दनीया मिराभिधाना श्रीमाता ?" सर्वभूतहिताय विशेषतो बालकानां विनयनाय विरचितं मातृदेव्या Belles Histoires समाख्यं पुस्तकम्। अत्रत्या खलु फरासीसभाषा सरला च सुललिता च। विषयाश्च—आत्मसंयमः, सत्त्वम्, प्रफुल्लता, स्वावलम्बनम्, धैर्यं प्रारब्धपरिसमापकत्वं च, सरलजीवनम्, दूरदर्शिता, सत्यनिष्ठा, यथार्थनिर्णयः, व्यवस्था विरचनञ्च विनाशनञ्चेति। पुस्तकस्यास्यानुशीलनेनात्रत्यानुशासनानां पालनेन च च्छात्राः परमार्थत एव मननशीला मनुष्या भवेयुः, ध्रुवमेव तेषामैहिकं पारत्रिकं च मङ्गलं स्यात्। यैः फरासीसभाषा विज्ञायते तैर्मूलमध्येयम्, यैः सुललितेयं भाषा बोद्धुमिष्यते तैः "कथामञ्जरी"-साहायकेन Belles Histoires अनुशीलनीयम्।

कथामञ्जरीयं सर्वेष्वेव भारतवर्षीयविद्यालयेष्ववश्यमध्येयतया निर्धारणीयम्। अत्र प्रथमतः संस्कृतभाषामयोऽनुवादो वर्तते, ततश्चानुवादगतानां विषमपदानां विशदव्याख्यानं ततश्च तेभ्यस्तेभ्योऽभिधानकोषेभ्यः पर्याया नानार्थाश्च सन्निविष्टाः। अत एवैतस्याध्ययनायच्छात्राणां व्याख्यापुस्तकस्यापेक्षा न स्यात्।

अत्र पाश्चात्य-प्रस्तूय-वेत्तु-प्रभृतयः केचनापशब्दा दृश्यन्ते, बाध्य-सत्साहसाऽध्यवासायादयः केचन शब्दाः प्रादेशिकभाषागतेष्वर्थेषु प्रयुक्ता उपलभ्यन्ते, निपातानां च किञ्चिदाधिक्यं नयनपथमुपयाति। एतानि चान्यानि च स्खलितानि पुनर्मुद्रणावसरे निराकरिष्यन्त इत्यत्र नास्ति नः स्तोकोऽपि संशयः। विरलानि खल्वीदृशानि ग्रन्थरत्नानि साम्प्रतं सञ्जातानि। अवश्यमेवेदमनुशीलनीयं छात्रैः।

## सप्रमोदाङ्गीकारः

सफरसप्तमायम्। खण्डकाव्यम्। श्रीहेमन्तकुमारतर्कतीर्थेन प्रणीतम्। काँथीगवर्मेण्ट संस्कृतकलेज मेदिनीपुर (West Bengal) इत्यतो ग्रन्थकारस्य सकाशाल्लभ्यम्। Double Crown 16 vo. ११६ पृष्ठात्मकस्य मूल्यं रूप्यकपञ्चकम्।

ग्रन्थकारस्य संस्कृतभाषायां पाटवं वर्तते, वृत्तान्तानामुपवर्णने शक्तिरपि समस्ति।

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| October, 1958. | १८८०-शकीयकार्त्तिकस्य १३श-वर्षस्य द्वितीया संख्या | Vol. XIII No. 2 |
|---|---|---|


## देवीस्तुतिः

सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥

---

## संवननसूक्तम् [ ऋ० सं० १०।१९१ ]

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥

सायणकृतमृग्वेदभाष्यम् । संसमिति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षम् । समानो मन्त्र इति तृतीया त्रिष्टुप्, शिष्टास्तिस्रोऽनुष्टुभः । प्रथमाया अग्निर्देवता । शिष्टानां संज्ञानम् । अनुक्रम्यते च—संसं चतुष्कं संवननः संज्ञानम् आद्याग्नेयी तृतीया त्रिष्टुप् तृतीया त्रिष्टुबिति । आनुष्टुभं तु इति पूर्वमुक्तत्वादवशिष्टानामनुष्टुप्त्वम् । सूक्तविनियोगो लैङ्गिकः ।

काश्यपक्षितीशचन्द्रकृतपरिष्कारः । ऋग्वेदस्य दशममण्डलस्य द्वादशोऽनुवाके चत्वारिंशत्सूक्तानि । तत्र प्रकृतं सूक्तं चत्वारिंशत्तमम् । ऋग्वेदस्य चेदमन्तिमं सूक्तं सर्वेषामैक्यापादकम् । तथाच बृहद्देवता—"संसं संज्ञानमित्येतत्परं संवननं

स्मृतम्" इति। तृतीया त्रिष्टुबित्यस्य द्विरुपादानं ग्रन्थसमाप्तिसूचकम्। पूर्वं सूक्तमधिकृत्यानुक्रमण्यामुक्तम्—"आनुष्टुभं तु" इति। जागर्ति च परिभाषा "तु-ह्नि-ह-वै-तच्छन्दविशिष्टान्यृषिदैवतच्छन्दांसि द्वि-त्रि-चतुः-पञ्च-षट्-सूक्तभाञ्जि यथासंख्यम्" इति। अत एव पूर्वस्मिन् सूक्ते प्रकृते चानुष्टुप् छन्दः। केवलं तृतीयायामृचि त्रिष्टुप् छन्दः, तृतीया त्रिष्टुबित्युक्तत्वात्। लिङ्गं नाम शब्दसामर्थ्यम्। अत्रत्यानां शब्दानां सामर्थ्यानुसारेण सूक्तस्य विनियोगो बोद्धव्यः। अत एवास्य परमं संवननत्वं प्रतिपादितं बृहद्देवताकारेण।

सा० भा०। हे वृषन् कामानां वर्षितरग्ने अर्यः ईश्वरस्त्वम्। अर्यः स्वामिवैश्ययोः [३।१।१०३] इति यत्प्रत्ययान्तो निपातितः। अर्यः स्वाम्याख्यायाम् [फिट्सूत्र १।१८] इत्यन्तोदात्तत्वम्। स त्वं विश्वानि सर्वाणि भूतजातानि। संसम्। प्रसमुपोदः पादपूरणे [८।१।६] इति समो द्विर्वचनम्। इच्छब्दोऽत्रधारणे। आ समन्तात् संयुवसे मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः। किञ्च इळः इळायाः पृथिव्याः पदे स्थान उत्तरवेदिलक्षणे। एतद्वा इळायास्पदं यदुत्तरवेदिनाभिः [ऐ० ब्रा० ५।२] इति ब्राह्मणम्। तत्र त्वं समिध्यसे ऋत्विग्भिः सन्दीप्यसे। सः तादृशस्त्वं नः अस्माकं वसूनि धनानि आ भर आहर ॥१॥

काश्यपक्षितीशचन्द्रकृतपरिष्कारः। देवेषु मध्ये—देवानां मध्ये + देवेषु=देवेषु मध्ये। इळायास्पदे—अजमध्यस्थडकारस्य ळकारं बह्वृचा जगुः इति डस्य ळत्वम्। आतो धातोः [६।४।१४०] इत्यत्रात इति योगविभागाद् इडा-शब्दस्याकारलोपः। "इळाया ना नमसो देवयुद्ध्हो मातुरिळस्तानि पदप्रवादे" इति प्रातिशाख्यसूत्रेण [ऋ० प्रा० ४।४९] विसर्जनीयस्य सत्वम्। आ भर। हृग्रहोर्भश्छन्दसि हस्य [८।२।३२।१] इति हकारस्य भत्वम्।

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥

सायणभाष्यम्। हे स्तोतारो यूयं संगच्छध्वम् संगताः सम्पृक्ता भवत। समो गम्यृच्छीत्यादिना [काशिका १।३।२९] गमेरात्मनेपदम्। तथा संवदध्वम् सह वदत। व्यक्तवाचां समुच्चारणे [१।३।४८] इति वदेरात्मनेपदम्। वः युष्माकं मनांसि संजानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। संप्रतिभ्यामनाध्याने [१।३।४६] इति जानातेरात्मनेपदम्। यथा पूर्वे पुरातना देवाः संजानाना ऐकमत्यं

प्राप्ता हविर्भागम् उपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति ।

काश्यप-परिष्कारः । आथर्वणे प्रथमपादस्य पाठः— सं जानीध्वं सं पृच्यध्वम् इति । व्याख्यातञ्चेदं भाष्यकृता—हे साम्मनस्यकामा जना यूयं संजानीध्वं समानज्ञानयुक्ता भवत । ज्ञानस्य सर्वव्यवहारमूलत्वात् तद्विगानाभावः प्रथमं प्रार्थ्यते ।...एवं समानज्ञानाः सन्तस्ततः सं पृच्यध्वम् संसृष्टकार्या भवत । पृची सम्पर्के । समानज्ञानत्वसिद्धये तत्करणस्याप्येकविषयतां प्रार्थयते । वः युष्माकं मनांसि ज्ञानोत्पत्तिनिमित्तान्यन्तःकरणानि सं जानताम् । समानमेकविधमर्थं जानन्तु । परस्परविरुद्धज्ञानजनकानि मा भूवन्नित्यर्थः । उक्तमर्थं दृष्टान्तेन द्रढयति—देवा भागमिति । यथा खलु देवा इन्द्रादयः संजानानाः समानकार्यज्ञानाः सन्तः पूर्वे असुरेभ्यः पूर्वभाविनः भागम् यजमानैः परिकल्पितं हविर्भागम् उपासते प्राप्नुवन्ति । अतो यूयमपि तद्वद् विद्वेषपरिहारेण सञ्जानाना इष्टफलं भजतेति भावः । इति ।

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥३॥

सायणभाष्यम् । पूर्वोऽर्धर्चः परोक्षकृत उत्तरः प्रत्यक्षकृतः । एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मिका गुप्तभाषणं वा समानः एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समानी एकरूपास्तु । केवलमामकेत्यादिना [ ४।१।३० ] समान-शब्दान् ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तथा मनः मननसाधनम् अन्तःकरणं चैषां समानम् एकविधम् । तथा चित्तम् विचारजं ज्ञानं सह सहितं परस्परस्यैकार्थ्येनैकीभूतमस्तु । अहं च वः समानम् एकविधं मन्त्रम् अभिमन्त्रये ऐकविध्याय संस्करोमि । तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिनाहं जुहोमि । तृतीया च होश्छन्दसि [ २।३।३ ] इति कर्मणि कारके तृतीया । वषट्कारेण हविः प्रक्षिपामीत्यर्थः ।

काश्यप-परिष्कारः । निरुक्ते भगवता यास्केनोक्तम्—तास्त्रिविधा ऋचः—परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य ।...अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना । ...अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्नेति । "मन्त्रः गुप्तभाषणं कार्याकार्यपर्यालोचनात्मकं तदपि समान एकरूपो भवतु । मत्रि गुप्तभाषणे । अस्माद् भावे घञ् । ञ्नित्यादिर्नित्यम् [ ६।१।१९७ ] इत्यादिरुदात्तः । तथा समितिः

सङ्गतिः कार्येषु प्रवृत्तिः ॥" केवलमामकेति । केवलमामकभागधेयपापापरसमाना- र्यकृतसुमङ्गलभेषजाच्च इति समग्रं सूत्रम् । उदात्तनिवृत्तिस्वरेण । अनुदात्तस्य यत्रोदात्तलोपः [ ६।१।१६१ ] इति सूत्रेणेत्यर्थः । समानशब्दः फिट्स्वरेणान्तोदात्तः । ङीप् चानुदात्तौ सुप्पितौ [ ३।१।४ ] इति पित्त्वादनुदात्तः । यस्येति च [ ६।४।१४८ ] इति समानस्योदात्ताकारस्य लोपेऽनुदात्तस्य ङीप ईकारस्योदात्तत्वम् । एवं च समानीशब्दोऽन्तोदात्तः । समितिः सङ्गतिः कार्येषु प्रवृत्तिरित्याथर्वणभाष्ये सायणः । समितिः समानी अन्योन्यसंगमोऽप्येकरूपोऽस्तु इति तैत्तिरीय-ब्राह्मण-व्याख्यायां सायणः । ऊहापोहस्थमन्तःकरणं मनः, वस्तुज्ञानावस्थितमन्तःकरणं चित्तम् । इति च तत्रैव ।

मुद्रितसायणभाष्ये स्तुतिः शस्त्राद्यात्मकेत्युपलभ्यते, स च पाठो व्यक्तमेव प्रामादिकः । प्रक्षिपामीत्यत्र प्रक्षेपयामीति दृश्यते ।

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥४॥

सायणभाष्यम् । हे ऋत्विग्यजमाना वः युष्माकम् आकूतिः सङ्कल्पोऽध्यवसायः समानी एकविधास्तु । तथा वः युष्माकं हृदयानि समाना समानान्येकविधानि सन्तु । तथा वः युष्माकं मनः अन्तःकरणम् । प्रत्येकापेक्षयैकवचनम् । तदपि समानमस्तु । यथा वः युष्माकं सुसह शोभनं साहित्यम् असति भवति तथा समानमस्त्वित्यन्वयः । अस्तेर्लेटि बहुलं छन्दसि [ २।४।७३ ] इति शपो लुगभावः ।

अथर्ववेदे सायणभाष्यम् । हे साम्मनस्यकामाः वः युष्माकम् आकूतिः सङ्कल्पः समानी एकरूपा भवतु । तथा वः युष्मदीयानि हृदयानि सङ्कल्पजनकानि हृत्पुण्डरीक-मध्यवर्तीन्यन्तःकरणानि समाना समानान्येकरूपाणि भवन्तु । शेश्छन्दसि बहुलम् [ ६।१।७० ] इति शेर्लोपः । तथा वः युष्माकं मनः एतत्सञ्ज्ञकं सुखाद्या-परोक्ष्यजनकम् इन्द्रियं समानम् एकरूपमस्तु । यथा येन प्रकारेण वः युष्माकं सर्वं कार्यं सुष्ठु सह असति भवति तथा साम्मनस्यं करोमीत्यर्थः । बहुलं छन्दसीत्यस्तेः परस्य शपो लुगभावः ।

तैत्तिरीयब्राह्मणगतं सायणभाष्यम् । वः युष्माकम् आकूतिः समानी सङ्कल्प एक-रूपोऽस्तु । वः युष्माकं हृदयानि कार्यनिश्चायकान्यन्तःकरणानि समाना एकरूपाणि भवन्तु । वः युष्माकं मन ऊहापोहरूपं मननसामर्थ्यं च समानमेकरूपमस्तु, किं बहुना वः युष्माकं सर्वं कार्यं सुसहा सुखेन सहावस्थितं यथा असति अतिशयेन प्रकारेण भवति तथास्तु ।

काश्यपक्षितीशचन्द्रकृतपरिष्कारः। वैदिकशिरोमणेर्वेदचतुष्टयभाष्यकृतः सायणाचार्यस्यात्र स्खलितं विस्मयविमूढं विदधाति नो मानसम्। असतीति लेटि प्रथमपुरुषैकवचने रूपम्। अदिप्रभृतिभ्यः शपः [ २।४।७२ ] इति शपो लुक्यपि लेटोऽडाटौ [ ३।४।९४ ] इत्यडागमः। यावद्यथाभ्याम् [ ८।१।३६ ] इति निघाताभावः। आगमानामनुदात्तत्वात् तिपश्च पित्त्वाद्धातुस्वर एव शिष्यते। अत एव 'असति'-पदस्य भवेद् इत्यर्थो न पुनर्भवतीति।

सुसहेति पदं निपातद्वयस्य समासेन निष्पन्नम्। शोभनमेकत्रावस्थानमित्यर्थः। तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इत्यव्ययपूर्वपदप्रकृतिस्वरत्वम्।

उपसर्गद्वयसंयोगेन निष्पन्नः संप्रतिशब्दः साम्प्रतमपि देशभाषास्वपि सन्दृश्यते।

ऋग्वेदीयसायणभाष्ये दृश्यते—"समानी एकविधोऽस्तु" इति।

---

# आभाणकमाला

१। A god or a brute.

Greek. ē thērion, ē theos.

Latin. Deus aut bestia.

"नृपशुरथवासौ पशुपतिः।"

स देवो ह्यथवा पशुः।

२। Latin. Diis aliter visum.

देवैरन्यथा निर्णीतम्।

French. L'homme propose, le ciel (Dieu) dispose.

Man proposes, God disposes.

Latin. Homo proponit, sed Deus disponit.
Homo cogitat, Deus ordinat (iudicat).

German. Der Mensch denkt, aber Gott lenkt.

Greek. Kai ta dokēthent' ouk etelesthē,
tōn d' adokētōn poron heure theos.

That which we expected is not accomplished, while for the unexpected God finds out a way.

"चिन्तयत्यन्यथा जीवो हर्षापूरितमानसः।
विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा॥"

"अन्यथा चिन्तिता ह्यर्था नरैस्तात महात्मभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥"

महाभारत, द्रोणपर्व १०।५०

"अन्यथा चिन्तितं कर्म अन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥"

महाभारत, कर्णपर्व ९।२०

अन्यन्मानुषेण विभाव्यते, अन्यदेव च प्रस्तूयते कुटिलप्रवृत्तिना दैवेन । अप्पाशास्त्री ।

Latin. Homo semper aliud, Fortuna aliud cogitat.

यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिपचक्रवर्ती सायं व्रजामि ( स एव ) विपिने जटिलस्तपस्वी ॥

[ "इत्थं विधेर्विधिविपर्ययमाकलय्य सन्तः सदा सुरसरित्तटमाश्रयन्ति" इति द्वितीयार्धस्य पाठान्तरम् । तृतीयचरणे–"सायं स एव विपिने जटिलस्तपस्वी"त्यपि पाठ उपलभ्यते । ]

Latin. Cor hominis disponit viam suam, sed Domini est dirigere gressus eius.

A man's heart deviseth his way, but the Lord directeth his steps.

मनुजस्य चित्तं पन्थानं परिचिन्तयति, परमेश्वरः पुनस्तस्य पदानि परिचालयति ।

---

## अनुरूपोक्तयः

### *गगनकुसुमचयनम् ।*

( द्वादशवर्षस्य ३१५तमपृष्ठतोऽनुवर्तते )

अस्ति देवीकोटनगरे देवशर्मा नाम ब्राह्मणः । तेन विषुवसमये शक्तुभृतशराव एकः प्राप्तः । ततस्तमादायासौ भाण्डपूर्णकुम्भकारमण्डपिकैकदेशे सुप्तः सन्नचिन्तयत् । यद्यहमिमं शक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि तदा तैरिह समये घटशरावानुपक्रीय विक्रीयानेकधा वृद्धैस्तैर्धनैः पुनः पूगवस्त्रादिकमुपक्रीय लक्षसंख्यातानि धनान्युत्पाद्य विवाहचतुष्टयं करोमि । ततस्तासु पत्नीषु या रूपयौवनवती तस्यामधिकमनुरागं करोमि । अनन्तरं सञ्जातेर्ष्यास्तत्सपत्न्यो यदा द्वन्द्वं कुर्वन्ति तदा कोपाकुलोऽहं ताः सपत्नीरित्थं लगुडेन ताडयिष्यामि । इत्यभिधाय तेन लगुडः क्षिप्तः । अथ स शक्तुशरावश्चूर्णितो भाण्डानि च भग्नानि । ततो भग्नभाण्डशब्देनागतकुम्भकारेण दृष्ट्वा स ब्राह्मणस्तिरस्कृतो मण्डपिकागर्भाद् बहिष्कृतः । हितोपदेशः ।

# La Laitière et le pot au lait

1. Perrette, sur sa tête ayant un pot au lait
Bien posé sur un coussinet,
Prétendait arriver sans encombre à la ville.
Légère et court vêtue, elle allait à grands pas,
Ayant mis, ce jour-là, pour être plus agile,
Cotillon simple et souliers plats.

2. Notre laitière, ainsi troussée,
Comptait déjà dans sa pensée
Tout le prix de son lait, en employait l'argent,
Achetait un cent d'œufs, faisait triple couvée,
La chose allait à bien par son soin diligent.

3. "Il m'est, disait-elle, facile
D'élever des poulets autour de ma maison ;
Le renard sera bien habile
S'il ne m'en laisse assez pour avoir un cochon.
Le porc, à s'engraisser, coûtera peu de son ;
Il était, quand je l'eus, de grosseur raisonnable ;
J'aurai, le revendant, de l'argent bel et bon.
Et qui m'empêchera de mettre en notre étable,
Vu le prix dont il est, une vache et son veau,
Que je verrai sauter au milieu du troupeau ?"
Perrette là-dessus saute aussi, transportée :
Le lait tombe ; adieu veau, vache, cochon, couvée.
La dame de ces biens, quittant d'un œil marri
Sa fortune ainsi répandue,
Va s'excuser à son mari,
Et grand danger d'être battue.
Le récit en farce en fut fait :
On l'appela *le pot au lait*. LA FONTAINE.

## दुग्धविक्रेत्री

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

कार्पासपीठोपरि दुग्धभाण्डं निधाय शीर्षे सुदृढं स्वकीये ।
गोपप्रिया कापि विनान्तरायमियेष गन्तुं नगरं कदाचित् ॥१॥

"अन्यथा चिन्तिता ह्यर्था नरैस्तात महात्मभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥"

महाभारत, द्रोणपर्व १०।५०

"अन्यथा चिन्तितं कर्म अन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥"

महाभारत, कर्णपर्व ९।२०

अन्यन्मानुषेण विभाव्यते, अन्यदेव च प्रस्तूयते कुटिलप्रवृत्तिना दैवेन । अप्पाशास्त्री ।

Latin. Homo semper aliud, Fortuna aliud cogitat.

यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिपचक्रवर्ती सायं व्रजामि ( स एव ) विपिने जटिलस्तपस्वी ॥

[ "इत्थं विधेर्विधिविपर्ययमाकलय्य सन्तः सदा सुरसरित्तटमाश्रयन्ति" इति द्वितीयार्धस्य पाठान्तरम् । तृतीयचरणे–"सायं स एव विपिने जटिलस्तपस्वी"त्यपि पाठ उपलभ्यते । ]

Latin. Cor hominis disponit viam suam, sed Domini est dirigere gressus eius.

A man's heart deviseth his way, but the Lord directeth his steps.

मनुजस्य चित्तं पन्थानं परिचिन्तयति, परमेश्वरः पुनस्तस्य पदानि परिचालयति ।

---

# अनुरूपोक्तयः

## *गगनकुसुमचयनम् ।*

( द्वादशवर्षस्य ३१५तमपृष्ठतोऽनुवर्तते )

अस्ति देवीकोटनगरे देवशर्मा नाम ब्राह्मणः । तेन विषुवसमये शक्तुभृतशराव एकः प्राप्तः । ततस्तमादायासौ भाण्डपूर्णकुम्भकारमण्डपिकैकदेशे सुप्तः सन्नचिन्तयत् । यद्यहमिमं शक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि तदा तैरिह समये घटशरावानुपक्रीय विक्रीयानेकधा वृद्धैस्तैर्धनैः पुनः पूगवस्त्रादिकमुपक्रीय लक्षसंख्यातानि धनान्युत्पाद्य विवाहचतुष्टयं करोमि । ततस्तासु पत्नीषु या रूपयौवनवती तस्यामधिकमनुरागं करोमि । अनन्तरं सञ्जातेर्ष्यास्तत्सपत्न्यो यदा द्वन्द्वं कुर्वन्ति तदा कोपाकुलोऽहं ताः सपत्नीरित्थं लगुडेन ताडयिष्यामि । इत्यभिधाय तेन लगुडः क्षिप्तः । अथ स शक्तुशरावश्चूर्णितो भाण्डानि च भग्नानि । ततो भग्नभाण्डशब्देनागतकुम्भकारेण दृष्ट्वा स ब्राह्मणस्तिरस्कृतो मण्डपिकागर्भाद् बहिष्कृतः । हितोपदेशः ।

# La Laitière et le pot au lait

1. Perrette, sur sa tête ayant un pot au lait
Bien posé sur un coussinet,
Prétendait arriver sans encombre à la ville.
Légère et court vêtue, elle allait à grands pas,
Ayant mis, ce jour-là, pour être plus agile,
Cotillon simple et souliers plats.

2. Notre laitière, ainsi troussée,
Comptait déjà dans sa pensée
Tout le prix de son lait, en employait l'argent,
Achetait un cent d'œufs, faisait triple couvée,
La chose allait à bien par son soin diligent.

3. "Il m'est, disait-elle, facile
D'élever des poulets autour de ma maison ;
Le renard sera bien habile
S'il ne m'en laisse assez pour avoir un cochon.
Le porc, à s'engraisser, coûtera peu de son ;
Il était, quand je l'eus, de grosseur raisonnable ;
J'aurai, le revendant, de l'argent bel et bon.
Et qui m'empêchera de mettre en notre étable,
Vu le prix dont il est, une vache et son veau,
Que je verrai sauter au milieu du troupeau ?"
Perrette là-dessus saute aussi, transportée :
Le lait tombe ; adieu veau, vache, cochon, couvée.
La dame de ces biens, quittant d'un œil marri
Sa fortune ainsi répandue,
Va s'excuser à son mari,
Et grand danger d'être battue.
Le récit en farce en fut fait :
On l'appela *le pot au lait*. LA FONTAINE.

## दुग्धविक्रेत्री

[ श्रीफटिकलालदासकृततात्पर्यानुवादः ]

कार्पासपीठोपरि दुग्धभाण्डं निधाय शीर्षे सुदृढं स्वकीये ।
गोपप्रिया कापि विनान्तरायमियेष गन्तुं नगरं कदाचित् ॥१॥

क्षिप्रं प्रयातुं दिवसे हि तस्मिन् हृस्वाम्बरं सा परिधाय तन्वी ।
नीचैरुपानद्युगनद्धपादा चकार दीर्घं चरणाभिपातम् ॥२॥
एवंविधा सा कृतवेषभूषा मार्गे चलन्ती पयसोऽस्य मूल्यम् ।
विचिन्त्य हस्तागतमेव सद्यः संख्यातुमेतन्मनसा रताभूत् ॥३॥
चिक्राय तद्वित्तपणेन वित्ते सा कुक्कुटीनां शतसंख्यडिम्बान् ।
उत्पाद्य शावांस्तत एव यत्नाद् वारत्रयेणापि बहून् क्रमेण ॥४॥
वचस्ततः सा स्वगतं बभाषे "मन्ये निकेतं परितः स्वकीयम् ।
यथेच्छमुत्पादनमण्डजानां सदैव नूनं सुकरं मया स्यात् ॥५॥
यदा शिवाभ्यो विहिताभिरक्षा पर्याप्तसंख्या ह्यवशिष्यते मे ।
क्रेष्याम्यहं तत्पणनेन कौलं यत्पोषणे मे न पृथुर्व्ययः स्यात् ॥६॥
वृद्धिं यथेष्टां गतमेतमेव विक्रीय वित्तं प्रचुरं लभेय ।
सवत्सधेनुं यदि गोव्रजार्थं क्रीणीय को मे प्रतिबन्धकः स्यात्" ॥७॥
तं धेनुवत्सं मनसाथ दृष्ट्वा नृत्यन्तमुच्चैर्दलमध्ययातम् ।
तद्भावनाभावितचित्तवृत्तिर्लम्फं ददौ सापि विवृद्धहर्षात् ॥८॥
बभञ्ज भाण्डं स्खलितं पयश्च शून्ये विलीनं च गवादि सर्वम् ।
तत्स्वामिनी गोप्यनुतप्तदृष्ट्या ददर्श खिन्नाखिलभाग्यनाशम् ॥९॥
विनष्टमित्थं परिवर्ज्य रिक्थं भर्तुः समीपे कृतदोषशुद्धौ ।
तस्मात् प्रहारानपि नाम लब्धुं त्वरान्विता सा निलयं प्रतस्थे ॥१०॥
वृत्तं यदीदं हृदये गृहीत्वा ग्रथ्नाति कश्चित् सरसं हि नाट्यम् ।
मन्येऽहमेतत् स कविर्वरेण्यः कुर्वीत नाम्ना ननु "दुग्धभाण्डम्" ॥११॥

---

कवीन्द्र-रवीन्द्रनाथस्य

## भाषाच्छन्दसी

[ अनुवादक :—श्रीदुर्गादास-गोस्वामी ]

यस्मिन्नह्नि हिमाद्रिमूर्ध्नि निपतत्यासन्नधारा मह-
त्याषाढस्य महानदः सुविपुलः स ब्रह्मपुत्रः क्षणात् ।
दुर्वारोद्धतदुःसहेन रभसेनोन्मूल्य रोधस्तरू-
पकूलंकूलनिकरं भ्राम्यत्यशान्तोन्मदः ॥१॥

तीरारण्यतले तरङ्गडमरुं स्वच्छन्दतो वादयन्
क्षिप्तो धूर्जटिवत् तथा स तमसानद्याः प्रसर्पद्रुतेः।
शीर्णस्वच्छतनो गंभीरगहनच्छाये किमप्युन्मनाः
सोद्वेगं रहसि भ्रमत्यपि मुहु र्वाल्मीकिराद्यः कविः ॥२॥
आवर्त्यात्ममुखे सशब्दमसकृज्जीमूतमन्द्रस्वनैः
सद्योजातमहो ! स शोकवशतश्छन्दः स्वतः स्पन्दितम्।
रक्तोच्छ्वासतरङ्गितोच्छलदुरोभित्ति र्महर्षिः कविः
कुर्वन् क्लिष्टमनाः शनै र्वनपथे पादप्रचारं रहः ॥३॥
सद्यो वेदनया विदार्य हृदयं सञ्जातमासीदहो !
सङ्गीतं परिपूर्णरूपमिह यद् वाचः किमेतेन सः।
कार्यं भूरि महत् करिष्यति तदुद्देश्यश्च किं सम्भवे-
दित्यारूढबहुप्रतर्कविधुरः पर्याकुलः संस्थितः ॥४॥
जातो यो गरुडोपमो नववयाः सङ्गीतमन्द्रध्वनिः
कीदृक् पीडयति क्षुधा सुमहतावेशेन तं सन्ततम्।
कीदृग् वास्य महत्यहो ! भुवि भवेदभ्यर्थना कुत्र वा
दिव्यः पक्षिशिशुः स्वनीडममितं विश्वे (?) विनिर्मास्यति ॥५॥
यस्मै नूनमलौकिकस्य विपुलानन्दस्य भारोऽर्पितः
स्वेच्छातो विधिना भवेत् तदुरसि ध्वस्तावधिर्वेदना।
नित्यं जागृतिरप्यमुष्य च तथा देवप्रसादोऽग्निवत्
प्रज्वाल्योर्ध्वशिखां मनस्यहरहः प्राणान् दहत्युद्धतः ॥६॥
यातोऽस्तं द्युमणिः क्षणात् सचकितं कुर्वञ्जटारश्मिभिः
शाखासुप्तममुं द्विजव्रजमथाकाण्डे स विस्माययन्।
किञ्च व्याकुलयन् मधुव्रतकुलं श्रान्तं दिवो नन्दन-
प्रौढामोदभरैस्तपोवनमितः सायं मुनिर्नारदः ॥७॥
पप्रच्छ प्रणमन् स तं खलु कविस्तस्मै समर्प्यासनं
कस्मात् ते गुरुदैवकार्यवशतो ब्रह्मन्निह स्वागतम्।
यच्छन्दः करुणामुखात् समुदितं श्रुत्वा तदप्याह्वयन्
ब्रह्माह स्म च मां स्वधाम्नि तमिति स्मित्वावदन्नारदः ॥८॥
देवर्षे ! त्वमितः प्रयाहि तमसातीरं यथेच्छं मुदा
तत्र त्वं नचिरादुपेत्य भगवन् ! हे कामचारिन् ! मुने !

क्षिप्रं प्रयातुं दिवसे हि तस्मिन् ह्रस्वाम्बरं सा परिधाय तन्वी ।
नीचैरुपानद् युगनद्धपादा चकार दीर्घं चरणाभिपातम् ॥२॥
एवंविधा सा कृतवेषभूषा मार्गे चलन्ती पयसोऽस्य मूल्यम् ।
विचिन्त्य हस्तागतमेव सद्यः संख्यातुमेतन्मनसा रताभूत् ॥३॥
चिक्राय तद्वित्तपणेन चित्ते सा कुक्कुटीनां शतसंख्यडिम्बान् ।
उत्पाद्य शावांस्तत एव यत्नाद् वारत्रयेणापि बहून् क्रमेण ॥४॥
वचस्ततः सा स्वगतं बभाषे "मन्ये निकेतं परितः स्वकीयम् ।
यथेच्छमुत्पादनमण्डजानां सदैव नूनं सुकरं मया स्यात् ॥५॥
यदा शिवाभ्यो विहिताभिरक्षा पर्याप्तसंख्या ह्यवशिष्यते मे ।
क्रेष्याम्यहं तत्पणनेन कोलं यत्पोषणे मे न पृथुर्व्ययः स्यात् ॥६॥
वृद्धिं यथेष्टां गतमेतमेव विक्रीय वित्तं प्रचुरं लभेय ।
सवत्सधेनुं यदि गोव्रजार्थं क्रीणीय को मे प्रतिबन्धकः स्यात्" ॥७॥
तं धेनुवत्सं मनसाथ दृष्ट्वा नृत्यन्तमुच्चैर्दलमध्ययातम् ।
तद्भावनाभावितचित्तवृत्तिर्लम्फं ददौ सापि विवृद्धहर्षात् ॥८॥
बभञ्ज भाण्डं स्खलितं पयश्च शून्ये विलीनं च गवादि सर्वम् ।
तत्स्वामिनी गोप्यनुतप्तहृष्ट्या ददर्श खिन्नाखिलभाग्यनाशम् ॥९॥
विनष्टमित्थं परिवर्ज्य रिकथं भर्तुः समीपे कृतदोषशुद्धौ ।
तस्मात् प्रहारानपि नाम लब्धुं त्वरान्विता सा निलयं प्रतस्थे ॥१०॥
वृत्तं यदीदं हृदये गृहीत्वा ग्रथ्नाति कश्चित् सरसं हि नाट्यम् ।
मन्येऽहमेतत् स कविर्विरेण्यः कुर्वीत नाम्ना ननु "दुग्धभाण्डम्" ॥११॥

कवीन्द्र-रवीन्द्रनाथस्य

## भाषाच्छन्दसी

[ अनुवादकः—श्रीदुर्गादास-गोस्वामी

यस्मिन्नह्नि हिमाद्रिमूर्ध्नि निपतत्यासन्नधारा मह-
त्याषाढस्य महानदः सुविपुलः स ब्रह्मपुत्रः क्षणात् ।
दुर्वारोद्धतदुःसहेन रभसेनोन्मूल्य रोधस्तरू-
नन्विष्यन्नुपकूलकूलनिकरं भ्राम्यत्ययान्तोन्मदः ॥१॥

तीरारण्यतले तरङ्गडमरुं स्वच्छन्दतो वादयन्
क्षिप्तो धूर्जटिवत् तथा स तमसानद्याः प्रसर्पद्द्रुतेः ।
शीर्णस्वच्छतनो गभीरगहनच्छाये किमप्युन्मनाः
सोद्वेगं रहसि भ्रमत्यपि मुहु र्वाल्मीकिराद्यः कविः ॥२॥

आवर्त्यात्ममुखे सशब्दमसकृज्जीमूतमन्द्रस्वनैः
सद्योजातमहो ! स शोकवशतश्छन्दः स्वतः स्पन्दितम् ।
रक्तोच्छ्वासतरङ्गितोच्छलदुरोभित्ति र्महर्षिः कविः
कुर्वन् क्लिष्टमनाः शनै र्वनपथे पादप्रचारं रहः ॥३॥

सद्यो वेदनया विदार्य हृदयं सञ्जातमासीदहो !
सङ्गीतं परिपूर्णरूपमिह यद् वाचः किमेतेन सः ।
कार्यं भूरि महत् करिष्यति तदुद्देश्यश्च किं सम्भवे-
दित्यारूढबहुप्रतर्कविधुरः पर्याकुलः संस्थितः ॥४॥

जातो यो गरुडोपमो नवव्याः सङ्गीतमन्द्रध्वनिः
कीदृक् पीडयति क्षुधा सुमहतावेशेन तं सन्ततम् ।
कीदृग् वास्य महत्यहो ! भुवि भवेदभ्यर्थना कुत्र वा
दिव्यः पक्षिशिशुः स्वनीडममितं विश्वे (?) विनिर्मास्यति ॥५॥

यस्मै नूनमलौकिकस्य विपुलानन्दस्य भारोऽर्पितः
स्वेच्छातो विधिना भवेत् तदुरसि ध्वस्तावधिर्वेदना ।
नित्यं जागृतिरप्यमुष्य च तथा देवप्रसादोऽग्निवत्
प्रज्वाल्योर्ध्वशिखां मनस्यहरहः प्राणान् दहत्युद्धतः ॥६॥

यातोऽस्तं द्युमणिः क्षणात् सचकितं कुर्वञ्जटारश्मिभिः
शाखासुप्तममुं द्विजव्रजमथाकाण्डे स विस्माययन् ।
किञ्च व्याकुलयन् मधुव्रतकुलं श्रान्तं दिवो नन्दन-
प्रौढामोदभरैस्तपोवनमितः सायं मुनिर्नारदः ॥७॥

पप्रच्छ प्रणमन् स तं खलु कविस्तस्मै समर्प्यासनं
कस्मात् ते गुरुदैवकार्यवशतो ब्रह्मन्निह स्वागतम् ।
यच्छन्दः करुणामुखात् समुदितं श्रुत्वा तदप्याह्वयन्
ब्रह्माह स्म च मां स्वधाम्नि तमिति स्मित्वावदन्नारदः ॥८॥

देवर्षे ! त्वमितः प्रयाहि तमसातीरं यथेच्छं मुदा
तत्र त्वं नचिरादुपेत्य भगवन् ! हे कामचारिन् ! मुने !

वाल्मीकिं करुणारसार्द्रमपि तं वाणीतडिद्भास्वरं
छन्दःस्पन्दशरप्रविद्धमपि भोः ! स्वच्छन्दमानन्दतः ॥९॥
जिज्ञासस्व कविं तदा त्वमयि भोः ! सौभाग्यशालिन् ! भवे-
देतद् गीतधनं महत् कविमुने ! कस्मै निवेद्यं नु ते ।
एतच्छन्दसि संनिबध्य सुयशोगाथां पुनः कस्य वा
देवस्यामरता त्वया ननु दिवो मर्त्ये विधेयाधुना ॥१०॥
भावोन्मत्तमना महर्षिरपि तं प्रत्यब्रवीत् कम्पयन्
मूर्धानं स जगच्चराचरमिदं भाषार्थशून्यं सदा ।
गायत्यत्र दिवौकसामहरहः सामानि नित्यं मुने !
किञ्च स्तौति सुरानुदङ्गुलिरसौ वह्निर्महानिङ्गितैः ॥११॥
उत्क्षिप्योर्मिभुजान् किमाह जलधिर्द्यौरेव जानाति त-
च्छाखालक्ष्मदः प्रसार्य च महामन्त्रं कलैर्मर्मरैः ।
अश्रान्तं प्रजपत्यरण्यमपि सा झञ्झा समुत्थाप्य भोः !
पश्चान् भीमतमान् सगर्जनरवं सङ्गीतमभ्यस्यति ॥१२॥
आ नक्षत्रगणाश्रमैःसंमुदितादक्षौहिणीलक्षिता-
दारण्यप्रकृतौ निरन्तरमिलद्गुञ्जत्पतङ्गावधि ।
एकस्मिन् मिलति प्रवाहसलिले वैकुण्ठशान्त्यम्बुधेः
पारे गीतितरङ्गिणी कलकलैः कृत्स्नापि नानागतिः ॥१३॥
बद्धार्थैः परितो नृणामिह हि वागावर्तयन्ती स्थिता
तानेवाविरतं प्रयोजनवशात् पुंसां हि रात्रिन्दिवम् ।
क्षीणप्राणबला परिस्फुटतमं तत्त्वं गिरः सन्ततं
सीमां भावपदे पुनर्मुनिवर ! प्रत्यर्पयत्यञ्जसा ॥१४॥
हित्वा धूलिमसावनन्तगगने भाषा नितान्तोन्मुखी
शक्ता नोड्डयितुं वितत्य तरसा मुक्तार्थभारान् स्वयम् ।
पश्चान् सप्त लघून् विचित्ररचनान् सप्तस्वरैर्लक्षितान्
स्वाधीनप्रकृतिः सुगीतिरिव भोः ! स्वछन्दमानन्दतः ॥१५॥
प्रत्यक्षा विरवा मरीचिरमला प्राभातिकी भारती
मर्मद्वारमहो ! मुहूर्तसमयादुद्घाट्य विश्वस्य सा ।
कोषागारमपावृणोति सहसा गीतेस्त्रिलोक्यास्तथा
रात्रेः शान्तिगिरः क्षितिं निरवधिं प्रच्छादयन्ति क्षणात् ॥१६॥

किञ्चिन्मन्त्रबलैरिवास्य जगतः कोलाहलं कर्मणा-
मुच्छिन्दन् कुहकी पुमानिव महान् निर्वाङ् निषेधः परः ।
खेदं सर्वमपि प्रयासमखिलं निर्वापयत्यादरा-
न्मृत्योरानयति क्षितिञ्च विपुलाभासं निमेषात् पुनः ॥१७॥
वाङ् नक्षत्रतते र्भ्रुवा पुनरनिर्वाणा कृशानोः कणा
व्योम्नि व्यञ्जयतः स्वरूपमनिशं ज्योतिष्कराजेर्भृशम् ।
सूचीपत्रचये प्रबोधयति भोः ! कुञ्जे नवाशां तथा
भाषा द्राङ् मलयानिलस्य नियतं निश्वासमात्रेण सा ॥१८॥
किञ्चैषा विशति प्रवालगहनारण्यान्तरालं क्षणाद्
दूराद् यौवनगानमञ्चति तथा वाञ्चि प्रकाशो नृणाम् ।
प्रत्यक्षः क नु स क सोऽपि विपुलाभासः क गीतेरसा-
वुच्छ्वासोऽर्थनभोऽतिगः क च गुरुः श्वासः स हृन्मर्मकृत् ॥१९॥
जीर्यद्वाञ्चि नृणां स्वरानभिनवान् संयोजयिष्यत्यहो !
छन्दो नेष्यति मे कियद्व्यवहितं तामर्थबन्धात् तथा ।
भावानां भुवनं स्वतन्त्रमपि तद् द्राक् पक्षवानश्वराट
सौम्योद्दामगति र्यथा ननु तदाश्वासोच्छ्वसन्मे मनः ॥२०॥
पारापारमसौ विधाय च नभोनीलाम्बुधेः प्रत्यहं
दिव्या वह्नितरीः प्रधावति यथा सूर्यं वहन्ती चिरम् ।
छन्दोऽग्निप्रतिमं मया ननु मुने ! वाक्यार्पितं सत् तथा-
निर्बाधं प्रतरिष्यति ध्रुवमिह द्राङ् मर्त्यसीमामदः ॥२१॥
किञ्चैतन्महतीमनन्तविभवां चित्रामुदाराकृति
नानादुःखसुखोत्तरङ्गविचलज्जीवालयां मेदिनीम् ।
गुर्वीमूर्ध्वदिशं स्वयं पृथुजवान्नेष्यत्यपि च्छन्दतो
भावस्वर्गमहो ! कथामपि नरान् गीर्वाणपीठास्पदम् ॥२२॥
पर्यंति स्तिमितध्वनिं वसुमतीं नित्यं महाब्धिर्यथा
नृत्योद्गीतिचयैस्तथा खलु मम च्छन्दोऽपि भाषां सजत् ।
उद्वास्यत्यतिमानवस्तवचयानाशासु मन्द्रस्वरैः
सम्मानं क्षणभङ्गुरे नरजनुष्याधाय नानायुगे ॥२३॥
देवर्षे ! ननु ते पितामहपदे हे देवदूत ! क्रमा-
दावेद्यं न हि तद् दिवं प्रतिनये यद्धयागतं स्वर्गतः ।

देवान् मानवयत्यहो सुरमुने ! देवार्थगीतस्तव-
श्छन्दोगीतचयै र्ममेह सुरयाम्यध्वा त्वहं मानवान् ॥२४॥
प्रत्यक्षं भगवन् ! विभाति ननु वस्त्रैलोक्यमाख्याहि मे
वीणाच्छन्दसि चामरे ध्वनति भोः ! कस्याभिधानं महत् ।
कस्यात्येति तथा क्षमां न हि बलं प्राप्तश्च कान्तिं परां
माणिक्याङ्गदवत् परीत्य चरितं धर्मस्य कृच्छ्रो विधिः ॥२५॥
आस्ते नम्रतमः सदा खलु महैश्वर्येऽपि कः प्रश्रयात्
कश्चिच्छत्यनतो महत्यपि निजे दैन्ये च विश्रम्भतः ।
भीतः सम्पदि कस्तथा विपदि कश्चैकान्ततो निर्भयः
केनात्तं सकलाधिकं तदधिकं दत्तञ्च केन प्रभो ॥२६॥
लब्धं गौरवतस्तथा विनयतो दुःखं महत् केन च
क्षौण्यां स्नेहवशात् स्वमूर्ध्नि नृपते मौलौ किरीटोपमम् ।
देवर्षे ! कथयानघां तदभिधां मे सर्वदर्शिन् ! मुने !
सोऽयोध्यापतिरेव राम इति तं ब्रूते शनै र्नारदः ॥२७॥
कीर्तिस्तस्य मया श्रुता ननु च तं जानामि जानाम्यहं
जाने तस्य न तु प्रवृत्तिमखिलां तथ्यानि सर्वाण्यपि ।
पुण्यात्मन् ! रचयाम्यहं कथमहो ! तस्येतिवृत्तं पुरा
सत्यभ्रंशभयं सदास्ति हृदि मे वाल्मीकिरित्यब्रवीत् ॥२८॥
स्मित्वासौ कृपयाददे प्रतिवचः सद्यस्ततो नारदः
सत्यं सत्यमये ! तदेव रचयिष्यस्यां भुवि त्वं तु यत् ।
सत्यो यो घटते न स व्यतिकरः सर्वोऽपि हे सत्कवे !
साकेतादपि सत्तरं तव मनः श्रीरामजन्मस्थलात् ॥२९॥
एतद्भन्त ! वदन्नलीयत तदा प्राग् देवदूतः क्षणा-
द्दिव्यः स्वप्न इव स्वयं व्यवहिते सप्तर्षिलोके मुदा ।
वाल्मीकिः श्रितवान् समाधिमचलं ध्यानासने मौनितां
प्रापत् सा तमसा तपोवनतले चाजागरीत् स्तब्धता ॥३०॥

---

इच्छेच्चेद्विपुलां प्रीतिं त्रीणि तत्र न कारयेत् ।
वाग्वादमर्थसम्बन्धं तत्पत्नीपरिभाषणम् ॥

# भारतेतरदेशेषु संस्कृतभाषायाः प्रभावः

[ श्रीसुनीतिकुमारचट्टोपाध्यायो भाषाचार्यः ]

भारतस्य सांस्कृतिकैक्यसम्पादने संस्कृतस्योपयोगित्वं नाविदितं विदुषाम्। भारते यो धर्मो या वा संस्कृतिः सम्प्रति वर्त्तते, सा संस्कृतस्यैव हेतोः। प्राचीनकाले यदा भारतवर्षं स्वकृत्यजातं समपादयत्, तदा तत् सर्वासां जातीनां जनानाञ्च विशिष्टांश-मुपादाय तत्समन्वितरूपां महतीं संस्कृतिं निर्ममे, तदानीं तद् यथार्थचिन्तने यथार्था-नुष्ठाने च सर्वेषामेव राष्ट्राणां पथिप्रदर्शनाय प्रकाशायतनमभूत्। भारतवर्षं स्वोन्नति-समये स्वस्योत्कृष्टतमं ज्ञानरत्नं चतुर्दिगवस्थितदेशवासिभ्यः सुहृद्भ्यो बन्धुभ्यः प्रातिवेशिकेभ्यश्च प्रददौ। संसारेऽस्मिन् मनुष्यत्वजनने सभ्यतासम्पादने सद्भावविवर्धने च यद् यत् साधनमासीत्, तेष्वन्यतमं संस्कृतमपि। सस्कृतस्येदं महत्त्वं पूर्णरूपेण भारतवर्षादेव नावगन्तुं शक्यते, यतः केन्द्रावस्थितायाः शक्तेः पूर्णतयाऽवधारणविषये परिधेरपि सम्यक् पर्यालोचनाऽपेक्ष्यते।

पूर्वमेवास्माभिः प्रतिपादितं यत् संस्कृतं बौद्धमाध्यात्मिकञ्च तद् योजकं सूत्रं यद् भारतमन्यदेशैः साकं योजयति। संस्कृतं नानुपेक्ष्यं तद्योजकसूत्रं, यन्मध्यासियास्थदेशैः सुदूर-प्राच्यावस्थितदेशैः, प्रतर-भारतेन, आसियामहादेशस्याग्निकोणस्थदेशैः, द्वीपमय-भारतापरपर्यायेण इन्दोनेशियादेशेन च सहास्मानुबध्नाति। एतद्देशवासिनो भारतीयेभ्यो भाषायामितिहासे संस्कृतौ च सर्वथा भिन्नाः, तथापि ब्राह्मणबौद्धाम्नाय-रूपेण भारतीयधर्मस्य तेषु देशेषु प्रचारहेतोस्तत्तद्देशवासिभिस्तदङ्गीकारहेतोश्च तेऽप्यस्माकमतिनिकटवर्त्तिनः सन्ति संवृत्ताः। भूतले चीनदेशो न केवलं सततं महान् परं भारतेतरेषु सर्वेषु महत्तमः। चीनदेशवासिनां स्वीया स्वतन्त्रा संस्कृतिरस्ति, या द्विसहस्रवर्षेभ्यः प्रागपि स्वात्मनि परिपूर्णासीत्। चीनदेशो लौत्सु-सदृशान् मुनीन् महर्षींश्च जनयामास, ये तावदस्माकमुपनिषदो मुनिभिः साकं तुल्यतां धारयन्ति। तत्प्रणीतः "ताओ-तेः-किंग"नामधेय ऋतधर्मशास्त्रापरपर्यायो ग्रन्थश्चास्माकमुपनिषद्भिः साकमर्धासनमधिरोहति। लौत्सोः समये वर्तमानः "खुङ्ग फू-त्सु"-नामधेयः "कोन्फूशियुस्"-नामधेयो वा महांस्तत्त्वदर्शी बभूव, यः स्वदर्शनशास्त्रेण सार्धद्विसहस्र-वर्षाणि यावच्चीनदेशवासिनां जीवननियमान् निरधारयत्। अन्येऽपि बहवो महर्षयस्त-त्रासन्, यथा "मोत्सुः", य एव प्रथमं मानवजीवने मार्गप्रदर्शकसिद्धान्तरूपेण मैत्रीवादस्य प्रचारमकरोत्। भौतिकसभ्यतायां संस्कृतावाध्यात्मिकतत्त्वप्राप्तौ च प्राधान्यमावहन्तोऽपि चीनदेशवासिनो जना भारतीयविचारसरणौ जीवने च किञ्चिन्महत्त्वं स्वनिमित्तं प्राप्नुवन्। अत एव ते बौद्धधर्ममङ्गीकृतवन्तः, यो धर्मस्तद्देशं प्रथमं द्विसहस्रवर्षेभ्यः प्राक् प्राप्नोत्। मानवानामुत्कर्षाधाने बौद्धधर्मो विशेषतः सामर्थ्याधायको

बभूव, चीनदेशवासिनश्च स्वविचारशैल्याः स्वसंस्कृतिपद्धतेश्च बहून् साम्यापादकान् विषयान् भारतस्य बौद्धधर्मेणोपस्थापितेषु सिद्धान्तेष्वपश्यन्। ते च बौद्धधर्मं प्रसारिताभ्यां बाहुभ्यामालिलिङ्गुः, तं चात्मीयत्वेन जगृहुः। बौद्धधर्मेण सह बहुसंख्याकाः संस्कृतप्राकृतग्रन्था अपि चीनदेशङ्गताः, ये भारतीयविपश्चितां साहायकेन चीनदेशीयैर्विद्वद्भिश्चीनभाषयाऽनूदिताः। तेन चीनभाषायां सर्वमपि बौद्धसाहित्यमुपलभ्यं बभूव। पुरा चीनदेशवासिनो विद्वांसो बौद्धधर्मस्याध्ययनार्थं भारतदेशमागच्छन्, तैश्च बौद्धधर्मं जिज्ञासमानैरपि स्वभावतः संस्कृतमप्यधीतम्। एवमेव संस्कृतं चीनदेशस्य वातावरणे किमपि स्वात्मनः स्थानमरचयत्। चीनदेशे लौत्सुदर्शनशास्त्रानुयायिनोऽपि संस्कृतमशिक्षन्त। चीनदेशवासिनोऽनेकाः कलाः शिल्पानि विज्ञानानि भेषजादिशास्त्राणि च भारतादशिक्षन्त। संस्कृतव्याकरणस्य संस्कृतशिक्षाशास्त्रस्य चाध्ययनानन्तरं चीनदेशवासिनः प्रथमं स्वभाषायाश्चिरोपेक्षितायां ध्वनिपद्धतौ विशेषतो दृष्टिं निचिक्षिपुः। परं दुर्भाग्यतोऽस्माकं चीनदेशवासिनः संस्कृतग्रन्थान् स्वभाषयानुवदन्तः संस्कृतनामानि भारतीयनामानि चापि स्वभाषामयाणि चक्रुः। संस्कृतग्रन्थेषु यानि नामानि ते प्राप्नुवंस्तेषु कानिचिद् विहाय सर्वाण्यपि स्वभाषामयाणि चक्रुः, येनेदानीं "झू-लाई" इति तथागतार्थबोधकः, "मा-हेङ्ग्" इत्यस्यार्थोऽश्वघोषः, "क्वान्-यिन्" इति शब्दः अवलोकित-स्वर-वाचकः, "ती-क्वौ" इति पदञ्च धृतराष्ट्रस्य नामेति सम्प्रति न वयं बोद्धुं पारयामः। परन्तथापि बौद्धधर्मस्य सर्वा अपि दार्शनिकतत्त्वोपलब्धयोऽन्ये च भारतीयविचाराश्चीनदेशवासिभिः स्वभाषायामधीताः, चीनदेशश्च भारतं कल्याणमित्रत्वेनाङ्गीचकार। एवमेवासिया-महादेशस्य द्वयोरप्यनयोर्विशालदेशयोर्यथार्थमाध्यात्मिकं ज्ञानं समृद्धं बभूव। अस्माकं संस्कृतभाषायाः कार्यं सततं गुरुत्वपूर्णमासीत्। अधुनाऽपि चीनदेशे सन्ति तादृशा विद्वांसो ये संस्कृतभाषाध्ययने धृतरुचयः। कतिपयीषु बौद्धधर्मस्य तान्त्रिकपङ्क्तिषु ख्रिष्टीय-सप्तमशतके विद्यमानायां सिद्धमातृकाभिधायां भारतीयप्राचीनवर्णमालायां लिखितान् संस्कृत-बीजमन्त्रांश्चीनदेशीयाः परतश्च कोरिया-जापान-वियेत्नम्-देशवासिनोऽपि सम्यगवगच्छन्ति, येषां त्रयाणामपि देशानां संस्कृतयश्चीनदेशे प्रसृतया बौद्धसंस्कृत्या सहितया चीनदेशस्य संस्कृत्याऽपि प्रभाविताः। चीन-कोरिया-जापान-वियेत्नम्नामकेषु सकलेष्वपि बौद्धदेशेषु भूयःपरिवर्त्तितोच्चारणपद्धत्या संस्कृतधारणयः कवचमन्त्राश्च संस्कृतभाषायामेवोच्चार्यन्ते। कोरियावासिनो जापानवासिनश्चापि चीनभाषायां स्वभाषायाञ्च निबद्धेभ्यो ग्रन्थेभ्यो बौद्धधर्ममशिक्षन्त। जापान-देशीयभाषायामपि संस्कृतं स्वप्रभावं प्रासारयत्, यस्यां चीनभाषायामिव प्रायेण बौद्धधर्मसम्बद्धान् बहुसंख्याकान् ग्रन्थान् वयमुपलभामहे।

---

# कोकिलः

[ शिरोमणिः सन्निधानम् – सूर्यनारायण-शास्त्री ]

स्वागतं भोः सखे ! तुभ्यं वसन्तास्थानगायक !
बहोस्तु कालाद् दृष्टोऽसि त्वया कुत्र गतं स्थितम् ॥१॥
किं विनेतुं गतोऽसि त्वं किन्नरीर्दिव्यगायनीः ।
अभ्यस्तं नूतनं गीतं गीयतां कर्णपेशलम् ॥२॥
परुच्छ्रुतं मया गानमुपचूतं स्थितेन भोः !
अद्य यावत् पुनर्नैव श्रुतं तादृक् क्वचित्सखे ॥३॥
यदा यदा स माकन्दो मया दृष्टस्तदा तदा ।
त्वद्गीतं स्मर्यते स्वादूद्गाराश्चोद्यन्ति मे भृशम् ॥४॥
चूतासनसमासीने त्वयि गायति किं भवेत् ।
गीतामृतं तवाऽऽस्यानं मधुरं तत्फलं यतः ॥५॥
किं तत्पीतं वल्लरीभिर्यतः पुष्पाण्यधुर्मधु ।
किं मग्ना मारुतास्तस्मिन् न चेत्ते शीतलाः कथम् ॥६॥
श्रुते श्रुते भवद्गीते प्रतिभासि च मे पिक !
अपूर्वभाषाकाव्यस्थरसघट्टान् पठन्निव ॥७॥
ऋतुस्त्वया विना मन्ये विदेशस्थप्रिया वधूः ।
देशस्त्वया विना विद्वान् कुतोऽपि हृतवाक्कृतः ॥८॥

---

# समालोचनविपर्ययः

जगुमहोदयो लिखितपत्रगुच्छकण्ठेकरणे भृशमभिनिविष्टः ।

जगुः । ( दोलायमानः ) मेकले जन् ष्टुयार्ट मिल् हार्बार्ट् स्पेन्सार, मेकले जन् ष्टुयार्ट् मिल् हार्बार्ट् स्पेन्सार, मेकले हार्बार्ट् मिल् जन् ष्टुयार्ट् स्पेन्स् अहो हो ध्वंसन्ताम् ! जाल्मानां नामानि तथावद्यानि यथा कण्ठेकरणसमकालमेवौत्तराधर्यं भजमानान्येकाकाराणि सम्पद्यन्ते । दग्धकालश्च तथाविधः समापतितो यद् एवं लेखनकुशलोऽप्येवं वचनकुशलोऽप्येवं विमर्शनकुशलोऽप्येवं सर्वविषयकुशलोऽपि, आङ्गलभाषामयाण्येकद्वानि वचनानि, एकद्वानां पुस्तकानां नामानि, एकद्वानां पुरुषाणां नामानि कर्तुं न पारयति चेन्न खलु जनाः साधुवादान् वितरीतुमीहन्ते ।

ततः प्रविशति रघुः ।

आगम्यतां रघुमहोदय ! कविना साकं पूर्णानि त्रीणि दिनान्यसाक्षात्कारमतीव दुर्लक्षणमेवाहमाकलयम् ।

रघुः । ( उपविश्य ) यदि मनस्यकरिष्यस्तर्हि दुर्लक्षणमिदं परिहर्तुं न खलु न प्राभविष्य इति तर्कयामि ।

ततः प्रविशति कृष्णः ।

कृष्णः । अहो शोभनमापतितम् ! अद्य खलूभावेव भवन्तौ समुपस्थितौ । मम पुस्तकस्य साधुर्वासाधुर्वा चरमनिष्पत्तिर्विधीयताम् ।

जगुः । आं ज्ञातम् ! काममद्यैवागन्तव्यमिति भवतेऽभिहितम्, तथापि जानाति भवान् किं वा मम संवृत्तम् ? साम्प्रतं मेऽवकाशः स्वल्प एव । बहु खलु लेखनमावश्यकीभवति, बहु खलु चिन्तनम्, बहूनां चाङ्गलपुस्तकानां पठनमावश्यकीभवति । कदा वा भवतः पुस्तकं पश्येयम् ?

रघुः । ( कृष्णं प्रति ) किं पुस्तकम् ? अपि नाम तस्मिन् दिने याख्यायिकानीता सैव ?

कृष्णः । आर्य, अथ किम् । सैव । तद् दृश्यतामद्योभावेव भवन्तावुपस्थितौ । एवंविधः शोभनो योगो न खलु सर्वदा समुपनमति ।

जगुः । भवतु । यावत्पर्यन्तं भवेद् भवतु नाम । तद् भवानेव वाचयतु, आवां शृणुवः ।

कृष्णः । ( पुस्तकमुद्घाट्य वाचयति ) विजयग्रामस्य कस्याश्चित् पर्णशालायां काचन जरती प्रतिवसति स्म—

जगुः । नैतत् सम्यग् जातम् । आख्यायिकायाः सूत्रमेव न धृतम् ।

रघुः । नैतत् सम्यक्, नैतत् सम्यक् !

कृष्णः । तर्हि कथं वा धरिष्यामि ? उच्यताम् ।

जगुः । भद्रमुख, अपि नामाख्यायिकाविरचनं सुकरं मन्यते भवान् ? अपि न वाचितं भवता मेकल्मेमहोदयस्यैतत् ?

कृष्णः । उच्यतां किमिति ।

जगुः । अहो एतत् ! नाम तावच्छोभनं परं न स्मृतिपथमापतति । तद् यत् किमपि भवतु, अपि न वाचितं तद् भवता ?

कृष्णः । न खलु सम्यग् विभावयामि किमुद्दिश्य ब्रवीति भवान् इति । तत् प्रकृते को वा दोषः सञ्जातः कृपया कथ्यतां ननु ।

जगुः । को वा दोषः सञ्जात इति । ज्ञायतां भो दोषस्तावदयमेव—आख्यायिकायाः

सूत्रमेव न धृतमिति। (क्षणं विमृश्य) भवतु। अपि नाम जरतीममूं वर्जयित्वा तेषां गृहे कोऽप्यपरो नासीत्?

कृष्णः। बाढमासीत्। तत्त्वनुपदमेव ज्ञास्यति भवान्।

जगुः। कस्तावदासीत्?

कृष्णः। अष्टादशवर्षा युवतिः कन्यका—दुःखावसरे वृद्धाया एकमेवालम्बनम्।

जगुः। सम्यगेवासीत्। भवत आख्यायिकायां वस्तु वर्तते परं न प्राभवद् भवान् तत् सम्यक् संयोजयितुम्।

कृष्णः। सम्यक्। कथं वा समीचीनं स्यादुच्यतां ननु।

रघुः। अमुत एव प्रारभ्यतामाख्यायिका।

कृष्णः। कुतः?

रघुः। अतो यद्—दुःखावसर एकमेवावलम्बनमिति।

कृष्णः। इदानीं कथं तत् सम्भवेत्?

जगुः। कथं न सम्भवेत्? प्रारभ्यताम्—विजयग्रामे कस्यचन प्रासादस्य वातायने ज्योत्स्नालोके समुपविष्टाष्टादशवर्षा बालिकाद्य किं चिन्तयति स्म? इति।

कृष्णः। प्रासादस्तु नैवासीत्। कुतो वा प्रासादमधिगच्छेयुरेते? नन्वब्रवमेव भवन्तम् एकस्मिन् पर्णकुटीरे इति।

रघुः। धिग् धिग् धिक्। भवान् कविः सन्नेवं जल्पति! प्रासादः—स तु करस्थ एव भवतः। विशेषतो यदा तावत्तत्र व्ययादिकं किमपि नास्ति किमिति तत्र सङ्कोचमनुभवति भवान्?

कृष्णः। सङ्कोच इति। तत्र कारणमेतदेव। पुस्तकं मया विरचय्य समाप्तिं नीतम्। इदानीमनर्थकं मध्यभागमुत्तोल्य प्रारम्भे समासज्ज्य—तत् किं वा स्यात्?

जगुः। तदेव। तदेव नावबुद्धमित्येतावान् विपर्ययः। न खलु सर्वेऽवबुध्यन्ते तुच्छाख्यानारम्भत आख्यायिकारम्भे किञ्चित् कौशलं किञ्चिन्नैपुण्यमपेक्ष्यत इति।

कृष्णः। व्याख्यातमपि नावभोत्स्ये?

जगुः। अहं तावद् बोधयामि। भवान् आरभताम्—भवतु, अलं तेन—क्षुद्रमेव पुस्तकमवलम्ब्य भवन्तं बोधयामि। आख्यानं कीदृशं जानासि? यथा—

"यादवो नाम कश्चन बालक आसीत्। तस्य वयो नव वर्षाणि। स पथिषु *क्रीडमानो विचचार। विद्यालयात् सतीर्थ्यानां पत्रं लेखनीं क्षुरिकां चापहृत्य गृहं

मयति स्म। अनेन च दोषेण शिक्षकमहोदयस्तस्य नाम निकृत्य तं विद्यालयाद् अपसारयामास।*" इति। बुद्धं वा ?

कृष्णः। बाढं बुद्धम्। इदानीमेतदवलम्ब्य केन वा कौशलेनाख्यायिका प्रारभ्येत तदुच्यताम्।

जगुः। आख्यायिकास्थले न खलु पित्र्यानुशासनानुसारेण 'यादवो नामे'त्यादित आरम्भः कर्तुं शक्यते।

कृष्णः। तर्हि किं वा कर्तव्यम् ?

जगुः। तदानीं भवतापहरणत एव सूत्रं धर्तव्यम्। ततश्च यादवं गृहीत्वा पथि पथि क्रीडयित्वा विचारणमावश्यकम्, ततश्च तस्य वयो नववर्षं भविष्यति, ततश्च स यादवो भविष्यति। अन्ततश्च यदा द्रक्ष्यति भवान् स यादवः सम्पन्नस्तदा यथैवोपसंहारे वर्तते तथा नामनिकर्तनपुरःसरं विद्यालयतोऽपसारणेनैवानुत्तमाख्यायिका स्यात्।

रघुः। एतदेव तावद्विजानामि। ( मुहूर्तं विचिन्त्य मृदुस्वरेण ) परं जगुमहोदय यादवश्चौर्याद् दण्डेन योज्येत वा ? योज्यते चेदाख्यायिकायां धर्मप्रतिपादनं समापतेत्।

जगुः। अहो सम्यक् स्मारितोऽस्मि भवता ! सम्यक् ! सम्यक् ! न खलु नामनिकर्तनपुरःसरमसावपसारणीयः।

कृष्णः। किं तर्हि तं क्रोडे कृत्वा नर्तितव्यम् ?

जगुः। किमिति किमिति क्रोडे कृत्वा नर्तिष्यसि ? नहि नहि, कथं वा तत् ? किं वा त्वं मन्यसे रघुमहोदय ?

रघुः। भवतु। न खलु तावता किमपि रुध्यते। तत् खलु भवत इदानीमेवाभिधास्यामि।

कृष्णः। उच्यतां किं तत्।

रघुः। भवतु भवतु। का वा तत्र त्वरा ? अपरमपि स्थानं तावद् वाच्यताम्। शृणोमि।

कृष्णः। ( किञ्चिद्विरक्तिसहकारेण स्थानान्तरमुद्घाट्य ) श्रूयताम्। निदाघनिशीथिन्या निशीथचन्द्रिकालोकेन वसुन्धरा हसति। मलयानिलः शनैः शनैः प्रवहति। निःशब्दा दश दिशः। केवलं पर्णशालायाः पुरतस्तिन्तिडीपादपस्याधस्तात् काचन पलायिता सौरभेयी रोमन्थायमानान्तरान्तरा हम्बारवं कुर्वाणा निशीथिन्या नैःशब्द्यस्य मूले कुठारमर्पयति।

* सर्वमेतच्छिशूनामक्षरपरिचयग्रन्थतो गृहीतम्।

जगुः। पश्य भद्र, सम्यग् न जातम्।

रघुः। पश्य भद्र, अन्यत्कुर्वाणेनान्यत् कृतं भवता। विनायकं प्रकुर्वाणेन वानरो विरचितः।

कृष्णः। किमिति भद्रमुख! को वात्र दोषो जातः?

जगुः। उक्तमेव मया पूर्वं भवान् सर्वाणि वस्तूनि गृहीत्वा समाकर्षति सज्जयितुं तु न पारयति।

कृष्णः। केन कृतेन तत्सज्जितमभविष्यत्? उच्यताम्।

जगुः। सज्जितमभविष्यदिति। ननु वदामि गौस्तावत् तत्र किमिति? अपि नामामुष्मिन् विजयग्रामे कोकिलो नासीत्?

कृष्णः। कथं वा न स्यात्?

जगुः। किं तर्हि मृत एवासीत्?

रघुः। किं वा तेन स्थितेन यद्येवंविधे ज्योत्स्नालोके स न समासाद्येत। तथाविधस्य कोकिलस्य पिता निर्वंशो भवतु नाम।

कृष्णः। भवतु। एतदेव केवलम्। अन्योऽपि वा कोऽपि भ्रमो वर्तते?

जगुः। भ्रम इति। अयमेव तावद्विषमो भ्रमः। गौस्तत्र कथमपि न तिष्ठेत्।

रघुः। अपि तस्याः पितुः शक्तिरस्ति यत् कुहूकुहूरवं कुर्यात्?

कृष्णः। तदिदानीं किं वा करणीयमित्युपदिशति भवान्?

जगुः। इदानीमेव सौरभेयीं निकृत्य तस्य स्थाने कोकिलः क्रियताम्।

रघुः। हम्बारवं निकृत्य कुहूकुहूः क्रियताम्।

कृष्णः। सम्यक्। अपरं किमपि कर्तव्यं वा?

रघुः। पादपोऽसौ परिवर्तयितव्यः।

कृष्णः। परिवर्त्य किं विधास्यामि?

रघुः। तमालः क्रियताम्।

कृष्णः। तदपि सञ्जातम्।

जगुः। इदानीं सकृत्तावत् पश्यताम्।

कृष्णः। निदाघनिशीथिन्या निशीथचन्द्रिकालोकेन वसुन्धरा हसति। मलयानिलः शनैः शनैः प्रवहति। निःशब्दा दश दिशः। केवलं पर्णशालायाः पुरतस्तमालपादपस्याधस्तात् कश्चन पलायितः कोकिलो रोमन्थायमानोऽन्तरान्तरा कुहूकुहूरवं कुर्वाणो निशीथिन्या नैःशब्द्यस्य मूले कुठारमर्पयति।

जगुः। बाढम्! प्रायेण संवृत्तमिदानीम्।

रघुः। प्रायेण। किन्तु कोकिलः किं कदापि निशीथिन्या नैःशब्द्यस्य मूले कुठारमर्पयति ?

जगुः। सम्यक् सम्यक्। नैःशब्द्यस्य मूले कुठारं नार्पयतीति विधातव्यम्।

कृष्णः। तथास्तु। अद्य तद्ध्येतावदेव शोभनम्। सत्यामपेक्षायामितरेद्युः समागम्य सम्यक्तया सर्वं ज्ञास्यामि।

रघुः। नहि नहि। कथं वा तद्भवेत्! क्व वा गमिष्यति भवान् ? उपविश्यताम् उपविश्यताम्। अदस्तावत् कवितेव किं वा दृश्यते ?

कृष्णः। तत् तावत्तस्या एवाख्यायिकायाः पद्यस्य कतिचिच्चरणानि।

रघुः। साधु! कृपया तत् पठ्यताम्।

कृष्णः। भवतु। निर्बन्धश्चेच्छ यताम्—

उत्सवेर हासि गियाछे फुराये
हाहा रव शुधु निशिदिन।
श्याम बिने आज आँधार सकल
गोकुल येन प्राणहीन॥

हा हन्तावसितो हास उत्सवस्य महीयसः।
केवलं दिनयामिन्यो हाहाकारः प्रवर्तते॥
श्यामेन रहितं सर्वमन्धकारमयं जगत्।
गोकुलं नर्मणः क्षेत्रं प्राणहीनं प्रतीयते॥

रघुः। तिष्ठतु तिष्ठतु। नात ऊर्ध्वं वक्तव्यम्। बुद्धमेव बुद्धमेव!

कृष्णः। कथमेवम्? किं वा संवृत्तं भद्र? समाप्तिं यावत् प्रतीक्षस्व। इयन्मात्रेण किं वा बुद्धम्?

जगुः। न खल्वीदृशी शैली पद्यस्य। (रघोरभिमुखो भूत्वा) किं वा त्वं मन्यसे रघुमहोदय ?

कृष्णः। एतत्तु पद्यमेव न भवति। 'भामिनी' नास्ति, 'कौमुदी' नास्ति, 'वंशी' नास्ति, 'स्वपनं' नास्ति, 'न जानामि किं वा' नास्ति। किञ्च सर्वमेवैतद् बोद्धुं प्रभवामि।

कृष्णः। बोद्धुं प्रभवसीति को दोषस्तावता ? स तु मन्ये गुण एव संवृत्तः।

रघुः। नहि नहि भद्र। पारमार्थिकं पद्यं—हृदयस्य पद्यं—किं तल्लेशतोऽपि नावगच्छन्ति भवन्तः, अतः खल्वेवमुच्यते।

कृष्णः। तर्हि किं विवक्षितं भवता—यत् खलु बोद्धुं न शक्यते तदेव शोभनं काव्यमिति।

जगुः। प्रायेण तदेव। ( रघुमहोदयं प्रति ) किं वा मन्यसे त्वं रघुभद्र ?

रघुः। नूनं तदेव। मन्ये न भवानाधिक्येनाङ्गलानि काव्यानि पठति। सन्ति खल्वाङ्गलभाषायां तथाविधानि बहूनि शोभनानि पद्यानि यानि खलु न केवलं वयमेवेदानीमपि बोद्धुं न प्रभवामः, अपि च शिक्षकमहोदयेनोक्तं येषां खलु जातिभाषा सा ते आङ्गला अपि बोद्धुं न प्रभवन्ति।

कृष्णः। भवतु। तदेव चेत् सत्यं तर्हि किं तावतैतत् सिध्यति यद् यदेव सरलं यदेव बोद्धुं शक्यते तत् पद्यं न भवेदिति।

रघुः। सत्यम्, परं न खलु सर्वथैवम्। सन्ति खल्वाङ्गलभाषायां तथाविधानि बहूनि सरलानि काव्यानि येषां श्रवणेन विस्मयविमूढभावमुपयाति मानसम्। एवं-विधान्यनेकानि काव्यानि मम कण्ठे वर्तन्ते।

कृष्णः। अपि नामैकं शृणुयाम् ?

रघुः। इदानीमप्यलमस्मि वक्तुम्, अद्याप्यलमस्मि, अन्यदाप्यलमस्मि, यस्मिन्नेव दिने यस्मिन्नेव काले श्रोतुमिच्छेद् भवांस्तदैव शृणुयात्।

कृष्णः। तर्हीदानीमेवैकमुच्यताम्।

रघुः। कथं वा तद् वक्तुं न शक्नुयाम् ? इदानीमेव शक्नोमि, अद्य शक्नोमि, श्वः शक्तास्मि। अपि सम्भावयति भवान् मिथ्यावचनमिदमिति ?

कृष्णः। शान्तं पापम्! कथं वा मिथ्यावचनमिति सम्भावयेयम् ? एकं श्रोष्यामीत्येव भवन्तं निर्बध्नामि।

रघुः। भवतु वदामि। डाण्टेकवेस्तत् पठितं भवता ?

कृष्णः। किम् ?

रघुः। भवतु, अलं तेन। तुच्छादेव पुस्तकादेकं भवन्तं श्रावयामि। पश्यतु भवान् चमत्कारितामस्य काव्यस्य। इदं तत् काव्यम्—

Thirty days hath September,
April, June and November ;
February hath twenty-eight alone
And all the rest have thirty-one.

मासे सेप्तेम्बरे वत्सा दिवसास्त्रिंशदेव हि।
तथैव चैप्रिले मासि जूने नवेम्बरे तथा ॥
केवलं फेब्रुयार्यां वै दिवसान्यष्टविंशतिः।
शेषाणां सर्वमासानामेकत्रिंशद्धि वासराः ॥ इति।

कृष्णः। ( सोल्लासम् ) अपि नामेदमतीव शोभनं काव्यम्?

रघुः। न खल्ववबुध्यते भवान्?

जगुः। ( कृष्णं प्रति ) किं वा ब्रवीति भवान् भद्रमुख—अपि नामेदं तुच्छं काव्यम्? अपि न पश्यत्यत्र कवित्वं भवान्? अस्य खल्वक्षरेऽक्षरे कवित्वम्, विशेषतस्तृतीयं चरणं तावत् पश्यताम्—February hath twenty-eight alone. अहो गभीरतास्य मर्मोच्छ्वासस्य! असारेऽस्मिन् संसारे क्षणभङ्गुरेऽस्मिन् मानवजीवने फेब्रुयार्याः परमायुः कियदल्पम्! यदा तावत् फेब्रुयारीं स्मरामि तदा सीदति मे हृदयम्। अहो विचिन्त्यतां तावत् साम्प्रतं—कियद्वा कवित्वमत्र, कियान् बोच्छ्वासः, कियान् वाध्यात्मिकभावः! एतस्य लेखने कियद् वा फिलजफ्यपेक्ष्यते।

कृष्णः। सम्यक्। इत ऊर्ध्वं तथाविधमेव लेखितुं प्रयतिष्ये। अद्य तर्ह्यहं प्रतिष्ठे भद्रौ। ( कृष्णः प्रस्थितः। )

रघुः। अहमपि तर्हीदानीं साधयामि। ( रघुः प्रस्थितः। )

जगुः। ( कञ्चुककोषाद्धस्तलिखितां पुस्तिकां निर्गमय्य दोलायमानः ) मेकले जन् ष्टुयार्ट् मिल् हार्बार्ट् स्पेन्सर ( इत्यादि कण्ठे करोति )।*

---

# प्राचीनभारते प्रजातन्त्रम्

[ श्रीराधाकुमुद-मुखोपाध्यायः ]

सहृदयाः, अद्यत्वे खल्वाबालवनितं सर्वेषामेव वदनकमलेषु विहरति प्रजातन्त्रार्थकः democracy-शब्दः। प्राचीनग्रीक्भाषातोऽनुप्रविष्टोऽयं शब्द आङ्गलभाषाम्, अत एव ग्रीक्राष्ट्रमेव प्रजातन्त्रस्य प्रसूतिरित्येव साम्प्रतिकानामभिमानः। परं गणिते शून्याङ्क इव, व्याकरणे प्रकृतिप्रत्ययाविव, प्रजातन्त्रमपि भारतवर्षोपज्ञमित्यत्र नास्ति संशयलेशोऽपि। पुण्या भारतभूमिरेव प्रजातन्त्रस्य प्रसूतिः।

नीतिशास्त्रस्य मूर्धाभिषिक्तौ सभासमितिशब्दावृग्वेद एवेदंप्रथमतयोपलभ्येते। स्थानतः कर्मतश्चानयोः सभासमित्योर्महद्वैलक्षण्यं वर्तते। सभा तावत् प्रवयसां संसत्, प्राज्ञानां संसद्, अभिज्ञानां संसत्। साम्प्रतिक-House of Elders इत्यस्यानुरूपैवासीत् सभा। समितिः पुनर्जनानां साधारणी संसत्। उभे एवैते राष्ट्राधिपस्य राज्ञो बहुमते आस्ताम्। स च सदैव वाचोयुक्तिबलेनेमे स्वपक्षे समाक्रष्टुं प्रायतत, वाचोयुक्तेश्च कृते देवादीन् प्रार्थयत।

* अधुनाऽस्माद् वङ्गभाषामयात् "प्रचार"पत्राद् भाषान्तरमारोपितः।

आथर्वणे श्रूयते—

सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने ।
येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः सङ्गतेषु ॥ इति ।

अत्र विश्वस्य स्रष्टुः प्रजापतेर्यमजदुहितृत्वेन सभा समितिश्चोपवर्णिते । प्रजापतिः खलु स्वसृष्टेः पूर्णतापादानार्थं स्वप्रतिनिधिरूपेण ते प्रेषयति । प्राचीनेऽपि तस्मिन्नवसरे भारतवर्षे जनसंसदाविमे प्रजातन्त्रस्य प्राथमिकसहायरूपेण, मानुष्यकस्य समुन्नतेः प्रबलतमशक्तिरूपेण च स्वीकृते । ऋग्वेदस्यान्तिमेऽपि सूक्ते प्रजातन्त्रस्य चरमो भाव आत्मानं प्रादुष्करोति । तच्च सूक्तं संज्ञानं देवतामुद्दिश्य प्रवृत्तम् । संज्ञानं नाम प्रजातन्त्रदैवतं सार्वजनीनराजनीतिकज्ञानरूपम् । एतद् राष्ट्रियं मानसं यत् खलु वैयक्तिकमानसेन स्वप्रभावस्य च प्रभवत्वेनोपस्थानीयम् । सूक्तस्यास्य मन्त्रेषु प्रजातन्त्रचिन्तायाश्चरितस्य चान्तरं प्रोत्साहनं राष्ट्रियसमवायार्थं प्रणोदनं तन्मूलकं वचनैक्यं मन्त्रणैक्यं समित्यैक्यं हृदयैक्यं चित्तैक्यं सङ्कल्पैक्यम् आकूत्यैक्यं वरीवर्ति । अधुनातनेषु विधानसभादिदलेष्विव तदानीमपि वर्गीयसदस्यैः पूर्वत एव सम्मन्त्रणेन सभायामैकमत्यमर्जनीयमासीत् । ( क्रमशः )

---

# गुरुलाघवम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शाकुन्तलस्य पञ्चमेऽङ्के राज्ञो वचनं दृश्यते—भवन्तमेवात्र गुरुलाघवं पृच्छामीति । गुरुलाघवशब्दश्च न सिध्यति, उत्तरपदवृद्धेर्विधानानुपलम्भात् । रामायणमहाभारतादिषु वैद्यकग्रन्थेषु च सुप्रचारोऽयं शब्दः ।

गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति ह्येच्यते ॥

रामायण, अयोध्या ६३।७

[ तुलनीयम्—दोषाणाञ्च गुणानाञ्च सम्प्रधार्य बलाबलम् । रा० ३।३७।२४ ]

चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् ।
सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ रा० किष्किन्ध्या २।४
सचिवानब्रवीद् वाक्यं निश्चित्य गुरुलाघवम् । रा० कि० ३२।२
विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥

गुरुलाघवमादाय धर्माधर्मविनिश्चये।
यतो भूयांस्ततो राजन् कुरुष्व धर्मनिश्चयम्॥

महाभारत, वन० १३१।१२-१३

दानाद्वा सर्व सत्याद्वा किमतो गुरु दृश्यते।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम्॥
दानञ्च सत्यं तत्त्वं वाप्यहिंसा प्रियमेव च।
एषां कार्यगरीयस्त्वाद् दृश्यते गुरुलाघवम्॥

महाभारत, वन०, १८१।३-४

तस्मात् पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना।
दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित्॥

श्रीमद्भागवत ६।१।८

गुरुलाघवविद् वैद्यो नराणां वर्धयत्यसून्।
तस्मादेवं विजानीयाद् द्रव्याणां गुरुलाघवम्॥ भेलसंहिता।

न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत। चरकसंहिता, सूत्रस्थान ५।६

मात्रा द्रव्याणि मात्रां च संश्रित्य गुरुलाघवम्। सू० ५।१०५
खिन्नभक्ष्यास्तु ये केचित्सौप्यगौधूमयाविकाः।
भिषक् तेषां यथाद्रव्यमादिशेद् गुरुलाघवम्। २७।२६१
भक्ष्याणामादिशेद् बुद्ध्वा यथास्वं गुरुलाघवम्। २७।२७६
मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे। २७।३४०
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति। २८।३४३
दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम्॥ २७।३४४
सगुणान्यनुपानानि गुरुलाघवसंग्रहः।
अन्नपानविधावुक्तं तत्परीक्ष्यं विशेषतः॥ २७।३५२

यच्चान्यदप्यविरुद्धं मन्येत तदप्यवचारयेद्विभज्य गुरुलाघवम्, गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेजघन्यमितरान्। निदानस्थान ३।१७

तयोरकुशलाः केवलं चक्षुषैव रूपं दृष्ट्वाध्यवस्यन्तो व्याधिगुरुलाघवे विप्रतिपद्यन्ते। विमानस्थान ७।३

बुद्धिमानात्मनः कार्यगुरुलाघवं कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद्भिषग् बभूषुः शास्त्रमेवादितः परीक्षेत। विमान ८।३

प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु गुरुलाघवं सम्प्रधार्य सम्यगध्यवस्येदन्यतरनिष्ठायाम्। ८।१३४

तस्माद् गुरुलाघवं सम्प्रधार्य सम्यगध्यवस्येदित्युक्तम्। ८।२३४

साध्यमसाध्यं कृच्छ्रं कुष्ठं कुष्ठापहाश्च ये योगाः।
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं तथा शान्तिः॥ चिकित्सा ७।१७९

निरुक्तं नामभेदाश्च दोषा दूष्याणि हेतवः।
आश्रयो मार्गतश्चैव विसर्पगुरुलाघवम्॥ २१।१४४

स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः। सुश्रुतसंहिता, सूत्रस्थान ४६।१३०

द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च तत्त्वतः।
पानकानां यथायोगं गुरुलाघवमादिशेत्॥ सु० सू० ४६।३९१

गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते। ४६।४४२

धन्वानूपमहीध्राणां सामीप्याद् गुरुलाघवम्। अष्टाङ्गसंग्रहे सू० १।६

क्षीणपादत्रिभागार्धं देशतु गुरुलाघवात्।
क्वथितं फेनरहितमवेगममलं हितम्॥ अष्टाङ्गसंग्रह सू० अ० ६

देशकालवयोमात्रासर्वरुग्गुरुलाघवैः। काश्यपसंहिता सू० स्था० २३।३२

शारीरं तु ज्वरं ज्ञात्वा वातपित्तकफात्मकम्।
मध्यां क्रियां प्रयुञ्जीत सञ्चिन्त्य गुरुलाघवम्॥ खिल १०।१२

पीडनानि च सर्वाणि व्यसनानि तथैव च।
आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम्॥ मनुसंहिता ९।२९९

काशकृत्स्नं गुरुलाघवम्। काशिका ४।३।११५, सरस्वतीकण्ठाभरण ४।३।२४५

पुरुषं चापराधं च कारणं गुरुलाघवम्।
अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च।
उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि।
राज्ञश्च प्रकृतीनां च कल्पयेदन्तरास्थितम्॥ कौटिलीयमर्थशास्त्रम् ८६

भाष्यकारो गुरुलाघवमनादृत्य यथान्यासं समर्थयितुमाह। कैयटः ६।४।५५

पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते। सीरदेवीय-परिभाषावृत्तिः। पृ० १२५
परिभाषेन्दुशेखरे दृश्यते—पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते (१२३) इति। ]

इदानीं वैयाकरणानां वचनान्युद्ध्रियन्ते।

भाषावृत्तिः। उत्तरपदस्य च [ ७।३।१० ]। अधिकारोऽयम्। उत्तरपदवृद्धिर्वाच्या हनस्तात् [ ७।३।३२ ] प्राक्। लक्षणमप्येतत्। गुरुलाघवम्। पितृपैतामहम्।

मुग्धबोधे दुर्गादासटीका। सुपश्चालादिस्तु [ ४१७ ] सुपश्चाल अर्धपश्चाल सर्वपश्चाल दक्षिणपश्चाल उत्तरपश्चाल गुरुलघु संहतपरार्थ पितृपितामह वातपित्त वातश्लेष्म एकपुरुष पूर्वपुरुष पूर्वहायन...इत्यादि। [ ४३२ ]

हरिनामामृतम्। गुरुलघ्वादेः। ७१९

गुरुलाघवम्। पितृपैतामहम्। वातपैत्तिकम्। वातश्लैष्मिकम्। एकपौरुष्यम् इत्यादि।

शाकुन्तलस्य प्राचीनव्याख्याकृतः प्रायेण गुरुलाघवव्युत्पत्तावौदासीन्यमवलम्बन्ते। नव्येषु र-महोदयेन दुर्घटवृत्तिमनुसृत्योक्तम्—

"गुरुलाघवम्—An irregular form, because अण् should cause आदि-वृद्धि resulting in गुरुलघु+अण्=गौरुलघवम्। But गुरुलाघव is common with older writers such as वाल्मीकि, व्यास, मनु etc. The form, however, is not inadmissible. In the Vritti we find काशकृत्स्नं गुरुलाघवम्; the Bhashya has पर्यायशब्दानां गुरुलाघवचिन्ता नास्ति। Some suppose गुरु=गौरव by transference of epithets ( लक्षणा ), and then गुरु च लाघवञ्च, द्वन्द्व which is optionally singular (see दुर्घटवृत्ति)। Such defence are quite uncalled for, the adoption of the form by the भाष्यकार being defence enough." इति।

रं प्रति श्रद्धाजाड्येन ग-महोदयेनोक्तम्—

"गुरुलाघव has been used broadcast by both ancient and classical authors such as व्यास, वाल्मीकि, मनु, श्रीहर्ष, and above all by पतञ्जलि himself in his महाभाष्य and hence no grammarian dares find fault with it." इति।

रगयोः सरणिमनुसृत्य व-महोदयेनोक्तम्—"In any case the formation of the word cannot be questioned as it has been used by *Patañjali* & others." इति।

वस्तुतस्तु महाभाष्ये क्वापि पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति वचनं नोपलभ्यते। महाभाष्यतोऽपि पूर्ववर्तिनीयं परिभाषेति सम्भाव्यते, प्राचीनपरिभाषाग्रन्थेषूपलम्भात्। नागेशभट्टेन भाष्यानुसारिणा गुरुलाघवचर्चेत्यत्र लाघवगौरवचर्चेति पठ्यते। यथा "अस्ति भागीरथीतीरे विशालः शाल्मलीतरुः" इति वाक्यमृग्वेदे वर्तते तथैव "पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते" इति वचनं महाभाष्ये वर्तते !!! (क्रमशः)

भाषावृत्तिटिप्पनी। वस्तुतस्तु गुरुलाघवमित्यत्र परिमाणान्तस्यासंज्ञाशाणयो-रित्यनेनैवोत्तरपदवृद्धिः। लघुशब्दस्य परिमाणवाचित्वात्। न चात्र सर्वथा संख्याया इत्यस्यानुवृत्तिर्मन्तव्या। काशिकादावुक्तमनैष्किकः परमनैष्किक इत्यादिषूत्तरपद-वृद्धेरनेनैव समर्थनात्। भट्टोजिग्रन्थेऽप्येवम्। पितृपैतामहादयस्तु षष्ठीसमासादिभिः सिद्धा इत्येके।

दुर्घटवृत्तिः। ५।१।१३३। कथं गुरुलाघवम्? उच्यते। पर्यायशब्दानां गुरु-लाघवचिन्ता नास्तीति भाष्यकारवचनप्रामाण्यात् पूर्वविप्रतिषेधेन इगन्ताच्च [ ५।१। १३१ ] इत्यण्। उत्तरपदस्य चेत्यस्य वृद्धेस्तत्र स्वीकारात् सिद्धिः। गुरुशब्देन धर्म-वचनेन लाघवशब्दस्य वा द्वन्द्वः।

संक्षिप्तसारम्। गुरुलघ्वादेरुत्तरपदस्य १।३७।

वृत्तिः। गुरुलाघवम्। संहतपारार्थ्यम्। पितृपैतामहम्। वात-पित्तस्य संयोगो निमित्तं वा वातपैत्तिकम्। वातश्लैष्मिकम्। एकपौरुष्यमित्यादि।

टीका। तद्धिते णिति परे गुरुलघ्वादेरुत्तरपदस्यादौ वृद्धिर्भवति। गुरुलाघवमिति द्वन्द्वात् स्त्रियाम् [ त० ८९८ ] णकं बाधित्वा लघूपान्तादिगन्ताट्टण् [ त० ८९२ ] इति टण्।

टिप्पनी। कश्चित्तु गुरुपूर्वो लघुरिति समासमाह।···वृत्तावादिपदेन—

भक्तिः सा पौरुषी ज्ञेया द्विगुणा तु द्विपौरुषी।

त्रिपौरुषी तु त्रिगुणा न तत्रान्वेष्य आगमः॥ इत्यादि।

सुपद्मम्। गुरुलघ्वादेरुत्तरपदस्य। ५।१।७

वृत्तिः। गुरुलघुप्रभृतेरुत्तरपदस्य वृद्धिः स्यात्। गुरुलाघवम्। एकपौरुषम्। पितृपैतामहम्।

मकरन्दः। गुरुलघ्वोर्भावः। इगन्ताच्च लघुपूर्वादित्यण्। एकपौरुष्यम्। संहत-पारार्थ्यम्।...वातपैत्तिकम्। वातश्लैष्मिकम्।...ऊर्ध्वमौहूर्तिकः।

सरस्वतीकण्ठाभरणम्। गुरुलघुसंहतपरार्थोर्ध्वमुहूर्तादीनामुत्तरपदस्य। ७।१।२४

प्रक्रियासर्वस्वम्। इगन्ताच्च लघुपूर्वात्। ५।१।१३१

इगन्तादुपान्तलघुकाच्छब्दाद् भावकर्मणोरण्।...गुरुलघ्वादेरुत्तरपदवृद्धिमाह भोजः। दोषस्य गुरुलाघवम्।

हेमचन्द्रबृहद्वृत्तिः। गुरुलाघवमिति गुरोर्लाघवम्। गुरुश्च गुरुत्वं लाघवं चेति वा। संहतपारार्थ्यमिति संहते पारार्थ्यम् इति सिद्धम्। अतो नार्थ उत्तरपदवृद्धिविधानेन॥ ७।४।१३

मुग्धबोधे दुर्गादासटीका। सुपञ्चालादिस्तु [ ४१७ ] सुपञ्चाल अर्धपञ्चाल सर्वपञ्चाल दक्षिणपञ्चाल उत्तरपञ्चाल गुरुलघु संहतपरार्थ पितृपितामह वातपित्त वातश्लेष्म एकपुरुष पूर्वपुरुष पूर्वहायन...इत्यादि। [ ४३३ ]

हरिनामामृतम्। गुरुलघ्वादेः। ७१९

गुरुलाघवम्। पितृपैतामहम्। वातपैत्तिकम्। वातश्लैष्मिकम्। एकपौरुष्यम् इत्यादि।

शाकुन्तलस्य प्राचीनव्याख्याकृतः प्रायेण गुरुलाघवव्युत्पत्तावौदासीन्यमवलम्बन्ते। नव्येषु र-महोदयेन दुर्घटवृत्तिमनुसृत्योक्तम्—

"गुरुलाघवम्—An irregular form, because अण् should cause आदि-वृद्धि resulting in गुरुलघु+अण्=गौरुलघवम्। But गुरुलाघव is common with older writers such as वाल्मीकि, व्यास, मनु etc. The form, however, is not inadmissible. In the Vritti we find काशकृत्स्नं गुरुलाघवम्; the Bhashya has पर्यायशब्दानां गुरुलाघवचिन्ता नास्ति। Some suppose गुरु=गौरव by transference of epithets ( लक्षणा ), and then गुरु च लाघवञ्च, द्वन्द्व which is optionally singular (see दुर्घटवृत्ति)। Such defence are quite uncalled for, the adoption of the form by the भाष्यकार being defence enough." इति।

रं प्रति श्रद्धाजाड्येन ग-महोदयेनोक्तम्—

"गुरुलाघव has been used broadcast by both ancient and classical authors such as व्यास, वाल्मीकि, मनु, श्रीहर्ष, and above all by पतञ्जलि himself in his महाभाष्य and hence no grammarian dares find fault with it." इति।

रगयोः सरणिमनुसृत्य व-महोदयेनोक्तम्—"In any case the formation of the word cannot be questioned as it has been used by *Patañjali* & others." इति।

वस्तुतस्तु महाभाष्ये क्वापि पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति वचनं नोपलभ्यते। महाभाष्यतोऽपि पूर्ववर्तिनीयं परिभाषेति सम्भाव्यते, प्राचीनपरिभाषाग्रन्थेषूपलम्भात्। नागेशभट्टेन भाष्यानुसारिणा गुरुलाघवचर्चेत्यत्र लाघवगौरवचर्चेति पठ्यते। यथा "अस्ति भागीरथीतीरे विशालः शाल्मलीतरुः" इति वाक्यमृग्वेदे वर्तते तथैव "पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते" इति वचनं महाभाष्ये वर्तते !!! (क्रमशः)

# प्रतिमानिरञ्जनम्

[ श्रीकृष्णस्वामी अय्यर् ]

"ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥
अन्येषां चैव देवानां शक्रादीनां शरीरतः ।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥" [ चण्डी २।१०-११ ]

पुनश्च— "इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥" [ चण्डी १२।३२ ]

"अप एव ससर्जादौ ।" जायते यस्माल्लीयते यस्मिंस्तज्जलम् । अयोनिजा सीता भुवं प्रविष्टा ।

"जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः" [ चण्डी ५।७ ] इत्यादिदृष्ट्या प्रतिमाया निरञ्जनं प्रतिपद्यते । शरीरधारिणो भगवतो रामचन्द्रस्य चरितं ताडका-वालि-शूद्रकवधैर्यथा निरपवादं नास्ति तथा शुम्भनिशुम्भमहिषासुरादिवधार्थं शरीर-ग्रहणेन देवी दुर्गा निरञ्जना न। अपि च सावयवा मर्त्यलोकमवतीर्णा भौमं वायुं श्वसती कथं निर्लेपा भवेत् । अतस्तस्या निरञ्जनार्थमेव "पश्यतामेव देवानां तत्रैवान्तरधीयत" [ चण्डी १२।३२ ] मन्त्रश्रुत्या जले प्रतिमाया विसर्जनेन देव्या निरञ्जनं क्रियते ।

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥" [ मुण्डक ३।१।३ ]

---

# बहुलीभूताः प्रमादाः

सुभाषितावलौ दृश्यते श्लोकः ( १५०१ )—

यत्पूर्वं पवनाग्निराम्बसलिलैश्चीर्णं तपो दुश्चरं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः ।
मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः
प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥

इति। अत्र चीर्णमिति पदमसाधु। जीर्णशब्दस्य सादृश्येन समुत्पन्नश्चीर्णशब्दो भारतरामायणादिषु बाहुल्येनोपलभ्यते। चतुर्थचरणगतं वाञ्छसे-पदमपि प्रामादिकं

वाञ्छधातोः परस्मैपदित्वात्। अत एव कस्मिंश्चिद्धस्तलिखिते पुस्तके दृश्यमानो वाञ्छ्यते इति पाठः स्वीकर्तव्यः। ( क्रमशः )

---

# शब्दार्थरहस्यम्

## २। दयितः

विदितमेवैतत् सर्वेषां यत् संस्कृते दयित-शब्दः प्रियार्थक इति। तथाच सिंहः—"अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इति। अनुकम्पार्थकदयधातोः कर्मणि क्तप्रत्ययेन दयित-शब्दो निष्पन्नः। आदौ तावदनुकम्पा जायते ततश्चानुरागः समुद्भवति। अत एव यस्मिन् यस्यां वानुकम्पा जाता स सा वा प्रायेण प्रेमपात्रं भवति। आङ्गलकविना Dryden-महोदयेनाप्युक्तम्—Pity melts the mind to love अनुकम्पा हृदयं द्रवीकृत्य प्रेम संजनयतीति। एवमेव Shakespeare-महोदयस्य Twelfth Night नाटके दृश्यते—"I pity you." "That's a degree to love." इति।

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम्॥

इति श्लोके दयिताशब्दस्यार्थद्वयं प्रतीयते।

---

# किम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विस्मय एव दर्शनशास्त्रस्य मूलमित्युद्घोषयन्ति दार्शनिकाः। स च विस्मयः किं-शब्देन बोध्यते। किं-शब्दबलेनैव लोकयात्रा प्रवर्तते इति चेदुच्येत सापि नातिशयोक्तिः स्यात्। अयं तावत् किं-शब्दो विकार एवेति वैज्ञानिका आतिष्ठन्ते। अस्य स्वरूपं चिद्रूपेण सन्दृश्यते।

किंशब्दस्यादिमो व्यञ्जनः कण्ठौष्ठ्य इति तज्ज्ञानां मतम्। कण्ठौष्ठ्याश्चोत्सर्गतः संस्कृते कण्ठ्यत्वमापद्यन्ते, परं तालव्यस्वरान्तस्थयोः परयोः संसर्गजा दोषगुणा भवन्तीति न्यायेन तालव्यत्वमुपगच्छन्ति। अत्र ककारोत्तरवर्ण इकारस्तालव्य एव। अतः ककारस्य चकारत्वमेव युक्तम्।

किञ्च नपुंसके प्रथमाद्वितीयैकवचने यत्तदन्यदितरत्प्रभृतिवद् दकारान्तत्वमेव युज्यते न पुन र्मकारान्तत्वम्। कम्-प्रभृतिपदानां सादृश्येनात्रादौ ककारोऽन्ते च

# प्रतिमानिरञ्जनम्

[ श्रीकृष्णस्वामी अय्यर् ]

"ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥
अन्येषां चैव देवानां शक्रादीनां शरीरतः ।
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥" [ चण्डी २।१०-११ ]

पुनश्च— "इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥" [ चण्डी १२।३२ ]

"अप एव ससर्जादौ ।" जायते यस्माल्लीयते यस्मिंस्तज्जलम् । अयोनिजा सीता भुवं प्रविष्टा ।

"जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः" [ चण्डी ५।७ ] इत्यादिदृष्ट्या प्रतिमाया निरञ्जनं प्रतिपद्यते । शरीरधारिणो भगवतो रामचन्द्रस्य चरितं ताडका-वालि-शूद्रकवधैर्यथा निरपवादं नास्ति तथा शुम्भनिशुम्भमहिषासुरादिवधार्थं शरीर-ग्रहणेन देवी दुर्गा निरञ्जना न । अपि च सावयवा मर्त्यलोकमवतीर्णा भौमं वायुं श्वसती कथं निर्लेपा भवेत् । अतस्तस्या निरञ्जनार्थमेव "पश्यतामेव देवानां तत्रैवान्तरधीयत" [ चण्डी १२।३२ ] मन्त्रश्रुत्या जले प्रतिमाया विसर्जनेन देव्या निरञ्जनं क्रियते ।

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥" [ मुण्डक ३।१।३ ]

---

# बहुलीभूताः प्रमादाः

सुभाषितावलौ दृश्यते श्लोकः ( १५०१ )—

यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुश्चरं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः ।
मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः
प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥

...। अत्र चीर्णमिति पदमसाधु । जीर्णशब्दस्य सादृश्येन समुत्पन्नश्चीर्णशब्दो भारतरामायणादिषु बाहुल्येनोपलभ्यते । चतुर्थचरणगतं वाञ्छसे-पदमपि प्रामादिकं

वाञ्छधातोः परस्मैपदित्वात्। अत एव कस्मिंश्चिद्धस्तलिखिते पुस्तके दृश्यमानो वाञ्छति इति पाठः स्वीकर्तव्यः। (क्रमशः)

---

# शब्दार्थरहस्यम्

## २। दयितः

विदितमेवैतत् सर्वेषां यत् संस्कृते दयित-शब्दः प्रियार्थक इति। तथाच सिंहः—"अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्" इति। अनुकम्पार्थकदयधातोः कर्मणि क्तप्रत्ययेन दयित-शब्दो निष्पन्नः। आदौ तावदनुकम्पा जायते ततश्चानुरागः समुद्भवति। अत एव यस्मिन् यस्यां वानुकम्पा जाता स सा वा प्रायेण प्रेमपात्रं भवति। आङ्गलकविना Dryden-महोदयेनाप्युक्तम्—Pity melts the mind to love अनुकम्पा हृदयं द्रवीकृत्य प्रेम संजनयतीति। एवमेव Shakespeare-महोदयस्य Twelfth Night नाटके दृश्यते—"I pity you." "That's a degree to love." इति।

स्मृता भवति तापाय दृष्टा चोन्मादवर्धिनी।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम्॥

इति श्लोके दयिताशब्दस्यार्थद्वयं प्रतीयते।

---

# किम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विस्मय एव दर्शनशास्त्रस्य मूलमित्युद्घोषयन्ति दार्शनिकाः। स च विस्मयः किं-शब्देन बोध्यते। किं-शब्दबलेनैव लोकयात्रा प्रवर्तते इति चेदुच्येत सापि नातिशयोक्तिः स्यात्। अयं तावत् किं-शब्दो विकार एवेति वैज्ञानिका आतिष्ठन्ते। अस्य स्वरूपं चिद्रूपेण सन्दृश्यते।

किंशब्दस्यादिमो व्यञ्जनः कण्ठौष्ठ्य इति तज्ज्ञानां मतम्। कण्ठौष्ठ्याश्चोत्सर्गतः संस्कृते कण्ठ्यत्वमापद्यन्ते, परं तालव्यस्वरान्तस्थयोः परयोः संसर्गजा दोषगुणा भवन्तीति न्यायेन तालव्यत्वमुपगच्छन्ति। अत्र ककारोत्तरवर्ण इकारस्तालव्य एव। अतः ककारस्य चकारत्वमेव युक्तम्।

किञ्च नपुंसके प्रथमाद्वितीयैकवचने यत्तदन्यदितरत्प्रभृतिवद् दकारान्तत्वमेव युज्यते न पुन र्मकारान्तत्वम्। कम्-प्रभृतिपदानां सादृश्येनात्रादौ ककारोऽन्ते च

मकारः समागतः। आवेस्तायां नपुंसके प्रथमाद्वितीयैकवचने 'चित्' इत्युपलभ्यते ग्रीक्भाषायामन्त्यव्यञ्जनलोपेन ti इति*, लातीने च quid इति।

वेदे कच्छब्दो वर्तते। कच्चित्-कद्वद-कदुष्ण-प्रभृतिषु शब्देषु दृश्यमाने कच्छब्देऽप्यादि दकारो देदीप्यते। अत एव वैदिकेऽवधारणार्थके लौकिके चानिश्चयार्थके चिच्छब्दे किमूशब्दस्याविकृतं रूपमुपलभ्यत इति साम्प्रतिका भाषातत्त्वविदः।

## अधिकन्तु न दोषाय†

हिन्दुस्थानपत्रे (21.9.58) प्रथमपृष्ठे सुबृहदक्षरैर्मुद्रितम्—Oil sprouts from Lumej well. Brownish oil sprouted out with great force in the early hours of Friday morning इति। spurt-शब्दवासनावासितचित्तेन कृपापरेण वार्ताजीविना spout-शब्दाय रेफः समुपहृतः। spout + spurt = sprout. Perjurer-शब्दसादृश्येन यथा forgerer शब्दः प्रादुर्भूतस्तथैव spurt-शब्दसादृश्येनात्र sprout शब्दस्याविर्भावः। पृथगपि sprout शब्दो वर्तते, तस्यार्थोऽपि पृथगेव।

रविवासरीयामृतबाजारपत्रिकायाम् (September 28, 1958) दृष्टम्—Short Story by "SIDHWARTHA" इति। सिद्धार्थशब्दः सुपरिचितः सर्वेषाम्। परं कोऽयं सिध्वार्थो नाम? अपि नाम "भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते" इति श्लोकवार्त्तिकानुसारेण वकारोऽयं मङ्गलार्थकः! अथवा वङ्किमचन्द्रे वकारोऽस्ति, रवीन्द्रनाथे वकारोऽस्ति, कथं वा सिद्धार्थे वकारो न स्यात्?

वङ्किमे च वकारोऽस्ति रवीन्द्रे च स विद्यते।
सिद्धार्थो व्यर्थतां यायाद् वकारेण विना भुवि॥

---

* ग्रीक्-भाषायामनुनासिकवर्जमन्तिमस्पर्शवर्णानां लोपो भवति। अभरत्-ephere, तद् to इत्यादीन्युदाहरणानि।

कण्ठौष्ठ्या उत्सर्गतो ग्रीक्भाषायामोष्ठ्यतामापद्यन्ते, यथा कतरः—poteros, गौः—bous, अगात् ebe इत्यादिषु। उकारात् पूर्ववर्तिनः परभाविनश्च कण्ठौष्ठ्या ग्रीक्भाषायां कण्ठ्या भवन्ति। यथा वृकः lukos, चक्रः—kuklos इत्यादिषु। इकारेकारयोः पूर्ववर्तिनश्च दन्त्यभावं भजन्ति। अत्रेकारात् पूर्वं वर्तते कण्ठौष्ठ्यमिति तस्य दन्त्यत्वं सञ्जातम्।

† वचनस्यास्य सार्थक्यसम्पादनायाक्षरप्रथकमहोदयेन पुनः पुनर्दोषायेत्यस्यानन्तरं विसर्गः सन्निवेश्यते। विसर्जनीयं वर्जयित्वा कथं वा संस्कृतं स्यात्!

## अन्यच्चिन्तितमन्यदापतितम्

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥

---

## वङ्गभाषामयपत्रेषु फरासीसोद्धृतिः

मासिकवसुमतीपत्रिकायां ( श्रावण १३६५, पृः ६५१ ) दृष्टम्—Celui qui sème la vent et récolte la tempête इति । फरासीसभाषायां जागर्त्याभाणकः—Qui sème le vent, récolte la tempête इति । फरासीसभाषायां vent ( वात ) शब्दः पुंलिङ्गः, tempête ( झञ्झा ) पुनः स्त्रीलिङ्गः । अत एव la vent इत्युक्तिः la tempête इत्यनुसरन्त्यपि प्रामादिक्येव ।

---

## भाषायां सङ्करः (Contamination)

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

### *विचिन्वीयुः*

कामन्दकीयनीतिसारे दृश्यते—विश्वस्ता हि विचिन्वीयुर्द्वाःस्थाः कक्ष्यान्तरागतान् । [ ६।१२ ] इति । अत्र विचिनुयुः विचिन्वीरन् इति पदद्वयस्य सङ्करः स्फुट एव । पूर्ववाक्ये विशेयुरिति परवाक्ये च ब्रुयुरिति वर्तते । अत एव पूर्वोत्तरसाहचर्यादत्रापि युः कृतः । ( विचिन्वीरन्+विचिनुयः = विचिन्वीयुः ) ।

---

## दोषो ह्यविद्यमानोऽपि

[ वाराणसेयः श्रीरघुनाथशर्मा ]

मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा इत्यमरुशतकपद्ये वायुशब्दोऽपानवायुस्मारकतया जुगुप्सादायीति टीकाकाराः । वेमभूपालस्तु मन्यते मुखपदसंनिधानान्नात्र वायुपदस्य जुगुप्साव्यञ्जकत्वमिति । एवं वदञ्जुगुप्साव्यञ्जकत्ववादिन उपहसति च । काव्यप्रकाशकारोऽपि जुगुप्साव्यञ्जकत्वमत्रेति मन्यते । अत्रेदं तत्त्वम् । अत्र टीकाकाराणां काव्यप्रकाशकारस्य च जुगुप्साव्यञ्जकत्वमतमेव युक्तं न तु वेमभूपालमतम् । तथाहि—पदेन हि स्वार्थबोधने पदान्तरनिरपेक्षेण सर्वशक्योपस्थितिर्भवति पदान्तरसंनिधानेन त्वनभिमतार्थस्य शाब्दबोधविषयता न भवति । एवञ्चानभिमतार्थस्य स्मृतिर्न

भवतीति कथनमसंगतमेव। तत्स्मृतौ तु जुगुप्सा जायत एव। एवं विरेकपवनेति पाठेऽपि मल्लिनाथोक्तोऽश्लीलाख्यो दोषः सम्यगेव, विरेकपवनेति पदस्याश्लीलार्थस्मारकत्वात्। पश्चात्तस्यार्थस्य नासापदसंनिधानेन बाधान्न शाब्दबोधे भानमिति त्वन्यत्।

[ न खलु वयं पण्डितप्रकाण्डानां रघुनाथशर्मणां मतं स्वीकर्तुं प्रभवाम इति विषीदामस्तमाम्। अमरुशतकटीकासुस्मद्दृष्टासु क्वापि वायुशब्दस्याश्लीलार्थत्वं नादृतम्। काव्यप्रकाशवृत्तिकारेणाश्लीलत्वस्योदाहरणं मृगयमाणेन "पथिका इव विमर्शका यदेव विचिन्वन्ति तदेव प्रेक्षन्ते" इति न्यायेन परमरमणीयेऽस्मिन् पद्येऽश्लीलत्वमाविष्कृतम्। अत्राश्लीलत्वस्य सर्वथाभावे सहृदयानुभव एव प्रमाणम्। अत्र चेदश्लीलत्वं तर्हि वायुर्हि शब्दस्पर्शधृतिकम्पैरनुमीयत इति दार्शनिकनिर्घोषेऽप्यश्लीलत्वमङ्गीकर्तव्यं स्यात्। "वायुशब्दश्रुतिर्यत्र तत्राश्लीलत्वभावनमि"ति च निर्देष्टव्यं स्यात्। एवं च परमार्थतः सहृदयानुभवविरोध्यप्यश्लीलाख्यो दोषोऽनुशासनबलेन सिध्येत्।

काव्यप्रकाशवृत्तिकारस्य मतं दोषोद्भावनाग्रहेण दूषितम्। अत एवास्माभिरुद्धृतं "दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते" इति, "पश्यति पित्तोपहतः शशिशुभ्रमपि शङ्खं पीतम्" इति च। पोपकविनाप्युक्तम्—All seems yellow to the jaundiced eye सर्वं कामलनेत्रेषु पीतमेवावभासते इति। बोद्धव्यानुसारेण प्रतीतिर्भवतीति काव्यप्रकाशकारेणैवोक्तम्। इति मञ्जूषासम्पादकः। ]

---

# अहो प्रभावः संसर्गस्य

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शाबरभाष्ये [ १।१।१ ] दृश्यते—प्रयत्नेनान्विच्छन्तो न चेद् दोषमवगच्छेमहि, प्रमाणाभावाददुष्टमिति मन्येमहि। इति। अत्रोत्तरवर्तिनो बुद्धौ विपरिवर्तमानस्य मन्येमहिशब्दस्य प्रभावेणावगच्छेमपदेनापि हिकारोऽर्जितः। अवतिष्ठेमहिशब्दस्य प्रभावोऽप्यत्र परिलक्ष्यते।

अवस्था : अवतिष्ठेमहि : : अवगम् : $x$ $\therefore$ $x$ = अवगच्छेमहि।

गच्छतिरपि परस्मैपदी, तिष्ठतिरपि परस्मैपदी। परमवपूर्वस्तिष्ठतिरात्मनेपदी सञ्जायते, समवप्रविभ्यः स्थ इति स्मरणात्। अवपूर्वको गच्छतिः पुनः स्वं पदं न विजहाति। अत एव अवतिष्ठेमहिपदं साधु। परं भाषायां विरुद्धशब्दस्यापि प्रभाव उपलभ्यते, अत एव बुद्धिस्थस्यावतिष्ठतेः प्रभावेणावगच्छेमोन्मार्गगामी संवृत्तः।

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥


# मञ्जूषा

| November, 1958. | १८८०-शकीयाग्रहायणस्य १३श-वर्षस्य तृतीया संख्या | Vol. XIII No. 3 |
| --- | --- | --- |


## दुर्गास्तोत्रम्

[ श्रीमदरविन्दस्य वङ्गभाषाकृतेः संस्कृतरूपान्तरम् ।
रूपान्तरकारः—जगन्नाथो वेदालङ्कारः ]

मातर्दुर्गे महाशक्ते कराले सिंहवाहिनि !
मातः शिवप्रिये देवि सर्वशक्तिप्रदायिनि !
तव शक्त्यंशजा मातर्युवानो भरतावनेः ।
त्वन्मन्दिरे समासीनास्त्वां वयं प्रार्थयामहे—
शृणु मातः ! प्रकाशस्व समाविर्भव भारते ॥१॥

मातर्दुर्गे ! तनुं धृत्वा मानुषीं हि युगे युगे ।
कर्म कृत्वा त्वदर्थञ्च देवि जन्मनि जन्मनि ॥
प्रतियामः परं धाम तवानन्दमयं वयम् ।
जन्म लब्ध्वाऽधुनाऽप्येव त्वत्कर्मस्वेव दीक्षिताः ॥
शृणु मातः ! त्वमाविःस्याः सहाया भव भारते ॥२॥

सिंहवाहिनि दुर्गेऽम्ब त्रिशूलायुधधारिणि
कवचाऽञ्चितचार्वङ्गि हे मातर्विजयप्रदे !

त्वत्प्रतीक्षापरं देवि भारतं प्रयतात्मना ।
तामेव मङ्गलां मूर्त्तिं वीक्षितुं ते समुत्सुकम् ॥
शृणु मातः प्रकाशस्व समाविर्भव भारते ॥३॥

बलदायिनि दुर्गेऽम्ब प्रेमदे ज्ञानदायिनि !
शक्तिरूपे महाभीमे सौम्यरौद्रस्वरूपिणि !
संग्रामेऽस्मिन्स्वदेशस्य संघर्षे जीवनस्य च ।
त्वयैव प्रेरिता मातर्योद्धारो वयमास्महे ॥
असुरस्योद्यमं शक्तिं देहि नः प्राणचित्तयोः ।
देहि ज्ञानं चरित्रन्तु देवस्यैव मतौ हृदि ॥४॥

मातर्दुर्गे ! महीरत्नमार्यजातिर्महीयसी ।
सर्वतः सूचिभेद्येन तिमिरेण समावृता ॥
हर्तुमेतत्तु हे मातः ! प्रीता भक्त्या स्वसन्ततेः ।
समुदेषि वियत्प्रान्ते भूयोऽप्यद्योत्तरोत्तरम् ॥
त्वद्दिव्यविग्रहस्याम्ब ! ज्योतिषस्तिमिरापहात् ।
प्रभाता भारते भाग्यादुषा भव्या नवाद्भुता ॥
वितनु स्वर्ग्यमालोकं विधुनु ध्वान्तसन्ततिम् ॥५॥

मातर्दुर्गे विभूतिस्ते पुण्यभारतभूरसौ ।
श्यामला सर्वसौन्दर्यराशिना सुविभूषिता ॥
ज्ञानशक्त्योस्तथा प्रेम्णः प्रतिष्ठा परमा च या ।
शक्तिसंभृतयेऽकार्षीदात्मसंवरणं चिरम् ॥
आगतं तद्युगं मातरागतं तद्दिनं तथा ।
यदोढविश्वभाराऽसौ भवत्युत्थानतत्परा ॥
एहि, मातः ! प्रकाशस्व समाविर्भव भारते ॥६॥

देवि दुर्गे जगन्मातः ! प्रियास्ते सूनवो वयम् ।
उपयुक्ता भवेमाम्ब भावराशे महीयसः ।
महनीयावदानस्य त्वत्प्रसादप्रभावतः ॥

क्षोदय क्षुद्रतां देवि, नोदय स्वार्थभावनाम् ।
भञ्जयेश्च भयं दुर्गे, सर्वमस्मास्ववस्थितम् ॥७॥

*            *            *

खड्गपाणे महाकालि नरखर्परधारिणि !
दुर्गे दिगम्बरे देवि सर्वदैत्यनिसूदिनि !
संहर क्रूरनादेन सर्वानन्तःस्थितानरीन् ।
तेषां नैकोऽपि येनाम्ब ! जीवितोऽस्मासु तिष्ठतु ॥
स्याम येन च हे देवि ! विमला निर्मलास्तथा ।
एषैव प्रार्थना मातः प्रकाशा भव भारते ॥८॥

मातर्दुर्गे ! भिया स्वार्थैः क्षुद्राशयतया तथा ।
भारतं म्रियमाणं नो विधेह्यस्मान् महाशयान् ॥
उच्चप्रयाससेवित्वं चेतसः समुदारताम् ।
सत्संकल्पवरं देवि देहि नो वरदायिनि ॥
येन नातः परं स्वल्पाशंसवो भीरवोऽलसाः ।
निश्चेष्टा दीर्घसूत्रा वा भवेमाम्ब ! कदाचन ॥९॥

सुविस्तारय दुर्गेऽम्ब ! योगशक्तिं महीयसीम् ।
वयं त्वत्तनया आर्या हृदये नो विकासय—
लुप्तां शिक्षाञ्च मेधाञ्च श्रद्धां भक्तिं तपोऽपि च ।
ब्रह्मचर्यमथो लुप्तं ज्ञानं सच्चरितं तथा ।
अस्मद्द्वाराऽखिलञ्चैतज्जगते वितराम्बिके ॥
भूतधात्रि भवेशानि लोकसाहाय्यकारिणि !
जगदम्ब ! प्रकाशस्व सर्वदुर्गतिनाशिनि ॥१०॥

मातर्दुर्गे महाकालि चण्डिके चण्डविक्रमे !
हत्वान्तरान् रिपून् बाह्या विघ्नबाधा विचूर्णय ॥
आर्यजातिर्महाचेता बलशौर्यसमन्विता ।
निवसेद् भारतस्याम्ब पावनारण्यभूमिषु ॥
उत्तुङ्गभूभृतां व्योमस्पृशां पुण्यतलेषु च ।
सरितां पुण्यतोयानां मुनिसेव्यतटेषु च ॥

त्वत्प्रतीक्षापरं देवि भारतं प्रयतात्मना।
तामेव मङ्गलां मूर्त्तिं वीक्षितुं ते समुत्सुकम् ॥
शृणु मातः प्रकाशस्व समाविर्भव भारते ॥३॥

बलदायिनि दुर्गेऽम्ब प्रेमदे ज्ञानदायिनि !
शक्तिरूपे महाभीमे सौम्यरौद्रस्वरूपिणि !
संग्रामेऽस्मिन्स्वदेशस्य संघर्षे जीवनस्य च।
त्वयैव प्रेरिता मातर्योद्धारो वयमास्महे ॥
असुरस्योद्यमं शक्तिं देहि नः प्राणचित्तयोः।
देहि ज्ञानं चरित्रन्तु देवस्यैव मतौ हृदि ॥४॥

मातर्दुर्गे ! महीरत्नमार्यजातिर्महीयसी।
सर्वतः सूचिभेद्येन तिमिरेण समावृता ॥
हर्तुमेतत्त् हे मातः ! प्रीता भक्त्या स्वसन्ततेः।
समुदेषि वियत्प्रान्ते भूयोऽप्यद्योत्तरोत्तरम् ॥
त्वद्दिव्यविग्रहस्याम्ब ! ज्योतिषस्तिमिरापहात्।
प्रभाता भारते भाग्यादुषा भव्या नवाद्भुता ॥
वितनु स्वर्ग्यमालोकं विधुनु ध्वान्तसन्ततिम् ॥५॥

मातर्दुर्गे विभूतिस्ते पुण्यभारतभूरसौ।
श्यामला सर्वसौन्दर्यराशिना सुविभूषिता ॥
ज्ञानशक्त्योस्तथा प्रेम्णः प्रतिष्ठा परमा च या।
शक्तिसंभृतयेऽकार्षीदात्मसंवरणं चिरम् ॥
आगतं तद्युगं मातरागतं तद्दिनं तथा।
यदोढविश्वभाराऽसौ भवत्युत्थानतत्परा ॥
एहि, मातः ! प्रकाशस्व समाविर्भव भारते ॥६॥

देवि दुर्गे जगन्मातः ! प्रियास्ते सूनवो वयम्।
उपयुक्ता भवेमाम्ब भावराशेर्महीयसः।
महनीयावदानस्य त्वत्प्रसादप्रभावतः ॥

क्षोदय क्षुद्रतां देवि, नोदय स्वार्थभावनाम्।
भञ्जयेश्च भयं दुर्गे, सर्वमस्मास्ववस्थितम् ॥७॥

* * *

खड्गपाणे महाकालि नरखर्परधारिणि!
दुर्गे दिगम्बरे देवि सर्वदैत्यनिसूदिनि!
संहर क्रूरनादेन सर्वानन्तःस्थितानरीन्।
तेषां नैकोऽपि येनाम्ब! जीवितोऽस्मासु तिष्ठतु ॥
स्याम येन च हे देवि! विमला निर्मलास्तथा।
एषैव प्रार्थना मातः प्रकाशा भव भारते ॥८॥

मातर्दुर्गे! भिया स्वार्थैः क्षुद्राशयतया तथा।
भारतं म्रियमाणं नो विधेह्यस्मान् महाशयान् ॥
उच्चप्रयाससेवित्वं चेतसः समुदारताम्।
सत्संकल्पवरं देवि देहि नो वरदायिनि ॥
येन नातः परं स्वल्पाशंसवो भीरवोऽलसाः।
निश्चेष्टा दीर्घसूत्रा वा भवेमाम्ब! कदाचन ॥९॥

सुविस्तारय दुर्गेऽम्ब! योगशक्तिं महीयसीम्।
वयं त्वत्तनया आर्या हृदये नो विकासय—
लुप्तां शिक्षाञ्च मेधाञ्च श्रद्धां भक्तिं तपोऽपि च।
ब्रह्मचर्यमथो लुप्तं ज्ञानं सच्चरितं तथा।
अस्मद्द्वाराऽखिलञ्चैतज्जगते वितराम्बिके ॥
भूतधात्रि भवेशानि लोकसाहाय्यकारिणि!
जगदम्ब! प्रकाशस्व सर्वदुर्गतिनाशिनि ॥१०॥

मातर्दुर्गे महाकालि चण्डिके चण्डविक्रमे!
हत्वान्तरान् रिपून् बाह्या विघ्नबाधा विचूर्णय ॥
आर्यजातिर्महाचेता बलशौर्यसमन्विता।
निवसेद् भारतस्याम्ब, पावनारण्यभूमिषु ॥
उत्तुङ्गभूभृतां व्योमस्पृशां पुण्यतलेषु च।
सरितां पुण्यतोयानां मुनिसेव्यतटेषु च ॥

उर्वरक्षेत्रभागेषु गुणैरेभिः सदाग्रणीः—
एकत्वेन च सत्येन प्रेम्णा शक्त्या तथैव च ॥
साहित्येन च शिल्पेन ज्ञानेन विक्रमेण च ।
त्वत्पादपद्मयोरेषा प्रार्थनाऽविर्भवाम्ब हे ॥११॥

योगशक्तिविलासेन मातर्नस्तनुमाविश ।
त्वद्यन्त्राणि भविष्यामः खड्गास्ते चाशुभच्छिदः ॥
प्रदीपास्ते तथा मातरज्ञानतिमिरापहाः ।
यूनां हि भारतस्याम्ब स्पृहामेतां प्रपूरय ॥१२॥

यन्त्रिणी चालयेर्यन्त्रं यथेच्छं गणनायिके ।
परिभ्रामय निस्त्रिंशमशुभस्य निसूदनि ॥
गृहाण पाणौ दीपञ्च ज्ञानदीप्तिविभासिनि ।
प्रकाशस्व प्रकाशस्व स्वीयशक्तिं प्रकाशय ॥१३॥

प्राप्य त्वां न विधास्यामो जातु तेऽम्ब विसर्जन
श्रद्धायाः प्रेमभक्त्योश्च सूत्रैरासज्य सुस्थिरैः ॥
हृदये सन्निधास्यामो हे मातः समुपेहि नः ।
प्रकाशस्व हि नो देवि देहे प्राणे च मानसे ॥१४

आयाहि मातरायाहि ! वीरमार्गप्रदर्शिनि ।
नातः परं विधास्यामो जातुचित्ते विसर्जनम् ॥
स्याद् दुर्गापूजनं शश्वत् समस्तं जीवितं हि नः ।
स्यादस्मत्कार्यजातञ्चाऽजस्रं प्रेमपरिप्लुतम् ॥
पूतं शक्तिमयञ्चापि मातृसेवाव्रतात्मकम् ।
एषैव प्रार्थना मातरार्याणां पुण्यभूजुषाम् ॥
शृणु, देवि ! प्रकाशस्व प्रादुर्भव च भारते ॥१

# दम्पती

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"अर्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत्।
पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥" मल्लिनाथः।

ये तावच्छब्दाः प्राचीनतमकालादारभ्याद्यत्वेऽप्यविकृतरूपा अविकलोच्चारणाश्चोपलभ्यन्ते तेष्वेवायमन्यतमो दम्पतिर्नाम। तथाच ऋग्वेदे श्रूयते—

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे।
मेने इव तन्वा शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥

[ २।३९।२ ] इति। ऋचानयाश्विनोर्द्वन्द्वचरत्वं मालोपमया प्रतिपाद्यते। प्रातर्यावाणा प्रातर्यावाणौ प्रातरेव गन्तारौ। रथ्या रथिनौ वीरौ इव। रथी च सारथिश्चेव। अजा अजौ इव छागा इव यमा यमलौ मेने इव नार्याविव तन्वा शरीरेण शुम्भमानौ शोभमानौ दम्पतीव दम्पती इव जायापती इव जनेषु सर्वेषु लोकेषु क्रतुविदा क्रतुविदौ प्रज्ञायुक्तौ प्राज्ञतमावित्यर्थः वरम् अभीष्टं स्थानम् आ सचेथे समागच्छथः।

साम्प्रतिकीषु भारतभाषास्वपि दम्पतीशब्दोऽस्मिन्नेवार्थे बहुलं प्रयुज्यते।

राजदन्तादिगणे [ २।२।३१ ] महर्षिप्रवरेण पाणिनिना पठितम्—जायापती जम्पती दम्पती इति। एतस्माच्च प्रतीयते महर्षेर्मतेन जायापती एव द्रुततरोच्चारणेन जम्पती सञ्जातः, सोऽपि कालक्रमेण दम्पतीरूपं पर्यगृह्णात्। इति। अत एव जयादित्येनोक्तम्—जायाशब्दस्य जम्भावो दम्भावश्च निपात्यत इति।

इदानीन्तनैस्त्वन्यथा दम्पतीपदं निरुच्यते। गृहवाचको दमशब्दः सुप्रसिद्धो वेदेषु। प्रायेण चायं सप्तम्यन्त एव प्रयुज्यते। अत एव निघण्टौ गृहनामसु दमे इति पठितम्।

मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥

[ ७।१।१९ ] इति। सर्वेभ्यः क्लेशेभ्यो रक्षणायाग्निः प्रार्थ्यते। हे अग्ने मा नः अस्मान् अवीरते अपुत्रतायै परा दाः अपुत्रताक्लेशे मा निक्षेप्सीः। अस्यै सर्वतः परिदृश्यमानायै दुर्वाससे दुष्टं वासः वसनं यस्यास्तस्यै अमतये दारिद्र्याय मा परा दाः। दरिद्रा हि च्छिन्नं चीवरं वसते। भवतः कृपया तादृशं दारिद्र्यं कदाप्यस्माकं भागधेयं मा भूत्। क्षुधे क्षुधायै नः मा परा दाः, रक्षसे दुष्टभूतेभ्यो मा परा दाः। हे ऋतावः सत्यवन्नग्ने मा नः अस्मान् दमे गृहे जुहूर्थाः अपथं प्रापिपः। हुर्छा कौटिल्ये इति धातुः। वने चास्मान् मा जुहूर्थाः। भवदनुकम्पया गृहे वा वने वाऽपथे पदं न क्रियास्म।

नेवे [ २।५५ ] इति। व्याख्यातं चेदमुवटेन—त्र्यक्षरपर्यन्ताः पुनः प्रगृह्याः इवे प्रत्यये न प्रकृत्या भवन्त्यार्ष्यां संहितायाम्। इति। ईदूदेद्द्विवचनं प्रगृह्यम् [ १।१।११ ] इत्यत्र काशिकायां दृश्यते वार्त्तिकम्—ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः। इति। अत्रोदाहरणानि तत्रैव—मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम [ महाभारते शान्तिपर्वणि १७७।१२ ]। दम्पतीव। जम्पतीव। रोदसीव। इति। एतदनुसारेणैव श्रीहर्षेण लिखितम् [ नैषध ९।८५ ]—

स्फुटोत्पलाभ्यामलिदम्पतीव तद्विलोचनाभ्यां कुचकुड्मलाशया।
निपत्य बिन्दू हृदि कज्जलाविलौ मणीव नीलौ तरलौ विरेजतुः॥

इति। 'कज्जलाविलौ' अश्रु'बिन्दू' 'कुचकुड्मलाशया' कुचरूपकलिकाभिलाषेण 'अलिदम्पती इव' 'स्फुटोत्पलाभ्याम्' विकसितकमलरूपाभ्यां 'तद्विलोचनाभ्याम्' सकाशाद् 'हृदि निपत्य' 'तरलौ' स्फुरन्तौ हारमध्यमणित्वयोग्यौ 'नीलौ मणी इव' नीलमणी इव 'विरेजतुरि'त्यन्वयः।

ईदृशं वार्त्तिकमिदानीं महाभाष्ये नोपलभ्यते, अत एव व्याख्याकृद्भिः कुशकाशावलम्बनन्यायेन इवशब्दस्थाने तुल्यार्थकवशब्दं पठित्वेदृशानां प्रयोगाणां साधुत्वं संसाध्यते। भट्टोजिना शब्दकौस्तुभे उक्तम्—अत्र वृत्तिकाराः। मणीवादीनां प्रतिषेधो वक्तव्य इति पठित्वा मणीव रोदसीव दम्पतीवेत्युदाजह्रुः। मुनित्रयानुक्तत्वादप्रमाणमिदमिति कैयटादयः। एवं वदद्भिः समानन्यायेनान्येषां मुनित्रयानुक्तानां वृत्तिकृन्मात्रोक्तानां तुरीयस्येष्टिः शंसिदुहिगुहिभ्यो वा क्रमेके छन्दसि, भाषायां च अङ्गगात्रकण्ठेभ्यस्त्विष्यते इत्यादीनामनादर्तव्यतोक्ता। मणीवोष्ट्रस्य लम्बेते इति तु इवार्थकेन वाशब्देन निर्वाह्यमित्याहुः। न्यासकारस्तु सम्बुद्धौ शाकल्यस्येताविति शाकल्यस्य सिंहावलोकितन्यायेनेह सम्बन्धाद् व्यवस्थितविभाषाश्रयणाच्चेदं लभ्यत इत्याह। केचित्त्विवार्थेऽयं वशब्दः प्रयुक्तो भीमो भीमसेन इतिवत्, कादम्बखण्डितदलानि व पङ्कजानीत्यादिवच्चेत्याहुः। वस्तुतस्तु वद्वा यथा तथैवैवं साम्ये इत्यमरग्रन्थे ववेति पाठमाश्रित्य शात्रवं व पपुर्यशः इति कालिदासप्रयोगस्य तद्व्याख्यातृभिरुदाहरणात् सर्वं सुस्थम्। युक्तश्चायमेव पाठः। प्रातिपादिकप्रक्रमे तद्धितस्य वतेरननुगुणत्वात्। इति। मुग्धानलमहोदयस्यापीदमेव मतम्। तेन हि Vedic Grammar ग्रन्थे ( पृः ६५, पादटीका ) उक्तम्—In instances in which contraction with *iva* seems to take place, the existence of a byform *va* has to be taken into consideration इति।

मणीवादीनां प्रतिषेधो वक्तव्य इति भाष्यवार्त्तिककाराभ्यामपठितत्वादप्रमाणमेतत्।

मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य, रोदसीवेत्यादिस्तुच्छान्दसः प्रयोगः। छन्दसि तु सर्वे विधयो विकल्पन्ते। इति कैयटः।

हरदत्तस्यापीदमेव समाधानम्।

हेमचन्द्रेण बृहद्वृत्तावुक्तम्—केचित्तु "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इति प्रयोगदर्शनात् मणी इव मणीवेत्यादावसन्धिप्रतिषेधं वर्णयन्ति। तदयुक्तं वाशब्देनोपमार्थेन सिद्धत्वात्, (भाष्यकारवार्त्तिककारयोरसम्मतत्वाच्चेति। न्यासः।) "मणी इवोद्भिन्नमनोहरत्विषौ" इत्यादावसन्धिदर्शनाच्च। अन्ये तु यथादर्शनं सन्धिमसन्धिं वेच्छन्ति। मणीव दम्पतीव रोदसीव मणी इव। इति।

मणीवादेर्वा [ १।३६९ ] इति संक्षिप्तसारसूत्रम्। मणी इव मणीव दम्पती इव दम्पतीव रोदसी इव रोदसीव। इति वृत्तिः। कश्चिदाह इवार्थे व-शब्दोऽप्यस्ति तेन रूपद्वयम्। तथाच "कादम्बखण्डितदलानि व पङ्कजानि" "भुङ्क्ते जनस्य गलवे च निधाय पादम्" इत्यादिप्रयोगो दृश्यते। इति टीका।

कातन्त्रपरिशिष्टे श्रीपतिदत्तेनोक्तम्। मणीवादिषु च। १।४८। मणीवादिषु च द्विवचनस्य प्रकृतिर्न भवति। मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम रोदसीव दम्पतीव जम्पतीव भार्यापतीव वाससीव। इवार्थे व-निपातोऽस्त्येव, यथा प्रशस्तिलिखितानि व केशिदन्तक्षतानि, कादम्बखण्डितदलानि व पङ्कजानि। इवे प्रकृतिरनिष्टेत्यारम्भः। मणी भार्यापती चैव दम्पती रोदसी तथा। वाससी जम्पती चैवमिवे जायापती तथा। इवेऽन्यैरिह पठ्यन्ते पेचुषीप्रभृतीन्यपि॥ कश्चित्त्रिमुनिसमुपेक्षणान्नेदमाद्रियते। इति।

श्रीपतिदत्तेन दम्पतिवाचकाः सर्वे शब्दा अत्र सन्निविष्टाः। मन्ये दम्पतीपदस्य द्विवचनान्तत्वेऽप्यार्थमेकत्वं तत्र बीजम्। बहोः कालात्पूर्वं Punch-पत्रे सद्यो विवाहितयोस्तरुणयोश्चित्रं निवेश्य लिखितम्—

विवाहसमनन्तरमट्टशालमागत्य पतिः। इदानीं प्रियतमे! आवां यथार्थतः परमार्थतश्चैकत्वं प्राप्तौ। परिचारक! द्वयोः कृते चापानीयमानीयताम्। (Now darling, we are really and truly one. Tea for two, waiter.)

---

## न जातु

Never say die.

न जातु नैराश्यमुपगच्छेत्। न जात्ववसीदेत्।

[ नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥ मनु० ४।१३७
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ रामायण युद्ध १२८।२
विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम् ।
जीवन्नरो भद्रशतानि पश्येत् ।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः ॥ सुन्दर १३।४५
स्वास्थ्यं भद्रं भजस्वार्य त्यज्यतां कृपणा मतिः ।
अर्थो हि नष्टकार्यार्थैर्नायत्नेनाधिगम्यते ॥
उत्साहो बलवानार्य नास्त्युत्साहात् परं बलम् ।
सोत्साहस्यास्ति लोकेऽस्मिन्न किञ्चिदपि दुर्लभम् ॥
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ।
उत्साहमात्रमाश्रित्य सीतां प्रतिलभेमहि ॥ किष्किन्ध्या १।१२८-१२९
न विषादे मनः कार्यं विषादो दोषवत्तमः ।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ किष्किन्ध्या ६४।९
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ सुन्दर १२।१०
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ युद्ध २।६ ]

Never do things by halves.

न जात्वर्धशः कर्माणि कुर्यात् ।

[ प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति ॥ ]

Never stint soap and water.

न जातु फेनके सलिले च कार्पण्यं कुर्यात् ।

Never hang a man twice for one offence.
न जात्वेकस्यापराधस्य कृते जनो द्विरुद्बन्धनीयः ।
Never grudge a penny for a pennyworth.
न जातु वराटिकामूल्यस्य वस्तुनः कृते वराटिकादानेऽनिच्छुकः स्यात् ।
Never put off till tomorrow what you can do today.
न जात्वद्य यत् कर्तुं शक्यं तत् परेद्यवि करिष्यामीति त्यजेत् ।

[ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥
आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ]

Never fry your fish till it is caught.

न जातु मत्स्यस्य ग्रहणात् पूर्वं तं भृज्जेत् ।

Never write what you dare not sign.

न जातु यत् स्वनाममुद्राङ्कितं कर्तुं न धृष्णोषि तद्विलिखेः ।

Never swap horses while crossing the stream.

न जातु सरितं प्रतरन्नश्वपरिवर्तनं कुर्यात् ।

Never lean on a broken staff.

न जातु भग्ना यष्टिरवलम्बनीया ।

Never look for the birds of this year in last year's nests.

न जातु परुत्तनेषु नीडेष्वैषमस्तनान् पक्षिणोऽन्विष्येत् ।

Never mind who your grandfather was.

न जातु को मे पितामह आसीदिति विमृश्योद्विजेत ।

[ सूतो वा सूतपुत्रो वा यो वा स्यो वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं हि पौरुषम् ॥ वेणीसंहारम् ।
कौशेयं क्रिमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ पञ्चतन्त्रम् । ]

Never trouble trouble till trouble troubles you.

न जातु यावत्क्लेशस्त्वां न क्लिश्नाति तावत् क्लेशं क्लिश्नीयाः ।

Never try to prove what nobody denies.

न जातु सर्वेषां सम्मतं वस्तु प्रमापयितुं प्रयतेत ।

Never buy a pig in a poke.

न जातु गोणीस्थं शूकरकं क्रीणीयात् । [ क्रयकाले शोभनत्वाशोभनत्वादिः विशेषतः परीक्षणीयम् । ]

Never burn your fingers to snuff another man's candle.

न जात्वपरस्य वर्तिकाया दग्धतूलावच्छेदनाय स्वाङ्गुलीर्दहेत् ।

---

# भाषायां सङ्करः (Contamination)

Hindusthan Standard (Late City Edition, October 28, 1958, page 8. column 7) दृष्टम्—Mr. Nehru said that nothing was more full of romance as the history of travel इति । अत्र "Nothing was more full of romance than the history of travel" "Nothing was so full of romance as the history of travel" इत्यनयोः सङ्करः स्फुट एव ।

---

# अधिकन्तु न दोषाय

Statesman पत्रे (October 25, 1958, Late City Edition, page 1, column 1) दृष्टम्—that the largest possible number of consumers may be benefitted इति । अत्राक्षरग्रथकमहोदयेन कृपारसपारावारेण benefited शब्दाय तकार एकः समुपहृतः ।

$$\left.\begin{array}{l}\text{Fit : Fitted}\\ \text{Befit : Befitted}\\ \text{Refit : Refitted}\end{array}\right\} :: \text{benefit} : x$$

$$\therefore x = \text{benefitted !}$$

स्वरभेदमपह्नुवानाः सर्वत्र समदर्शिनः पण्डितम्मन्याः समानन्यायेन profit शब्दस्य निष्ठायां profitted इति प्रतिजानते !

---

# परीतत्

[ श्रीआशुतोषशर्मा विश्वासः वेदशास्त्री ]

परीतदित्यस्य को वार्थ इतीदानीं विचार्यते ।

"नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इति सूत्रव्याख्यायां सर्वत्रैव 'परीतत्' इत्युदाहरणमुपलभ्यते । परितनोतीति परीतत्, तनेः क्विपि 'गमादीनमिति वाच्यम्' इति नकारलोपे तुक्, पूर्वपदस्य च दीर्घ इति सर्वत्रैव व्युत्पाद्यते । परन्तु तत्त्वबोधिन्यादयोऽस्यार्थव्याख्याने सर्वथा मौनमेवालम्बन्ते । Monier Williams महोदयानां प्रसिद्धेऽभिधानेऽपि पाणिनिमतानुसारेणास्य पदस्य संसिद्धिः केवलं प्रदर्शिता, अर्थस्तु नैव दत्तः । सर्वथायमप्रसिद्धः शब्द इत्यस्य कुत्रचित् प्रयोगाभावादवसीयते । अमरकोषेऽपि नास्योपलम्भः । एतेन 'परीतत्' इति प्रामाणिकः पाठो न वेति संशयः समुदेति । यदि पुनरयं विशुद्धत्वेनाङ्गीक्रियते, तर्हि परि समन्ततः तनोति व्याप्नोत्युदरमिति यौगिकप्रक्रियया अन्त्राभिधायकत्वमेवास्य ग्रहणीयमिति प्रतिभाति । अमरकोषे

'अन्त्रं पुरीतत्' इत्येव पठ्यते, स एव साधीयान् पाठ इति प्रतीयते, "गमादीनामिति वक्तव्यम्" इत्यस्योदाहरणरूपेण स एव कौमुद्यां प्रदत्तः। व्युत्पत्तिश्चास्य क्षीरस्वामिमतेन पूर्यते (अन्नादिना) इति पुरीतदित्येवम्। बालमनोरमायान्त्वेवं व्याख्यायते "पुरिः हृदयाख्यमांसखण्डविशेषः, तं तनोत्याच्छादयतीति विग्रहः। हृदयकमलाच्छादको मेदोविशेषः। "पुरीतता हि हृदयमाच्छाद्यते" इति श्रुतिरिति कर्किभाष्यम्।" इति। एतस्यैव शब्दस्य प्रयोगो वैदिकवाङ्मयेऽथर्ववेद-वाजसनेयिसंहिताशतपथब्राह्मण-कौषीतक्युपनिषदादिषूपलभ्यते।

---

# प्रतिवचनम्

[ श्रीकृष्णस्वामी अय्यर ]

२। अथ तां सर्वोपायविरहप्रदर्शनेन भीषयते। अत्रेयं युक्तिः। सा विरहप्रदर्शनाद् बिभेति। विरहप्रदर्शनं तां भीषयते। कश्चन धूतकामुको विरहप्रदर्शनेन तां भीषयते। अत्र णिजन्ताण्णिचि प्रयोजकस्य पुरुषस्य कर्तुरात्मगामि फलम्। फलं च तस्या मानभङ्गेन कामुकस्य सुखप्राप्तिः।

तस्यास्तस्मान्न भयम्। अतः स तु तां भीषयितुं न प्रभवति। इदमेव वाक्येऽथशब्देन द्योत्यते। यत्र स्वयं सिद्धिर्न भवेत्तत्रैवोपायोऽवलम्ब्यते। "उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।"

३। आदरातिशयजननार्थं स्वाभिमतमप्यर्थं भङ्ग्या निषेधयति।

(क) निषेधति यथा प्रतिषेधति। "सेधतेर्गतौ" [ ८।३।११३ ] इति न षत्वनिषेधो गत्यर्थाभावात्* षिधू शास्त्रे माङ्गल्ये चेतिधातोर्वा प्रयोगात्।

(ख) निषेधयति। षिधु हिंसासंराद्ध्योरिति दैवादिकाद्धेतुमण्णिचि, सिध्यतेरज्ञानार्थस्येति वार्त्तिकेनात्वनिषेधे, गुणे, सेधयति इति रूपम्। प्रकृतप्रयोगस्य ज्ञानविषयत्वं तु स्पष्टमेव। निरुपसर्गो निग्रहार्थीयः। अनेनाऽर्थसंराधने बाधा द्योत्यते। परन्त्वत्र षत्वाप्रसक्तिः "सेध इति शब्विकरणनिर्देशः सिद्ध्यतिनिवृत्त्यर्थः" इति काशिका [ ८।३।६५ ]।

अतोऽत्र बोधार्थे भौवादिकः सेधतिर्धातुः। हेतुमण्णिचि न्युपसर्गे रूपं निषेधयतीति।†

---

* तु० "न्यषेध शेषोऽप्यनुयायिवर्गः।" [ रघुवंशे ]

† तु० "शिष्यमकार्य्यात् प्रतिषेधयति।" काशिका [ ८।३।११३ ]

## भाषायां सङ्करः (Contamination)

Hindusthan Standard (Late City Edition, October 28, 1958, page 8, column 7) दृष्टम्—Mr. Nehru said that nothing was more full of romance as the history of travel इति। अत्र "Nothing was more full of romance than the history of travel" "Nothing was so full of romance as the history of travel" इत्यनयोः सङ्करः स्फुट एव।

---

## अधिकन्तु न दोषाय

Statesman पत्रे (October 25, 1958, Late City Edition, page 1, column 1) दृष्टम्—that the largest possible number of consumers may be benefitted इति। अत्राक्षरग्रथकमहोदयेन कृपारसपारावारेण benefited शब्दाय तकार एकः समुपहृतः।

Fit : Fitted
Befit : Befitted } : : benefit : $x$
Refit : Refitted

$\therefore x =$ benefitted !

स्वरभेदमपह्नुवानाः सर्वत्र समदर्शिनः पण्डितम्मन्याः समानन्यायेन profit शब्दस्य निष्ठायां profitted इति प्रतिजानते !

---

## परीतत्

[ श्रीआशुतोषशर्मा विश्वासः वेदशास्त्री ]

परीतदित्यस्य को वार्थ इतीदानीं विचार्यते।

"नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इति सूत्रव्याख्यायां सर्वत्रैव 'परीतत्' इत्युदाहरणमुपलभ्यते। परितनोतीति परीतत्, तनेः क्विपि 'गमादीनमिति वाच्यम्' इति नकारलोपे तुक्, पूर्वपदस्य च दीर्घ इति सर्वत्रैव व्युत्पाद्यते। परन्तु तत्त्वबोधिन्यादयोऽस्यार्थव्याख्याने सर्वथा मौनमेवालम्बन्ते। Monier Williams महोदयानां प्रसिद्धेऽभिधानेऽपि पाणिनिमतानुसारेणास्य पदस्य संसिद्धिः केवलं प्रदर्शिता, अर्थस्तु नैव दत्तः। सर्वथायमप्रसिद्धः शब्द इत्यस्य कुत्रचित् प्रयोगाभावादवसीयते। अमरकोषेऽपि नास्योपलम्भः। एतेन 'परीतत्' इति प्रामाणिकः पाठो न वेति संशयः समुदेति। यदि पुनरयं विशुद्धत्वेनाङ्गीक्रियते, तर्हि परि समन्ततः तनोति व्याप्नोत्युदरमिति यौगिकप्रक्रिययान्त्राभिधायकत्वमेवास्य ग्रहणीयमिति प्रतिभाति। अमरकोषे

'अन्त्रं पुरीतत्' इत्येव पठ्यते, स एव साधीयान् पाठ इति प्रतीयते, "गमादीनामिति वक्तव्यम्" इत्यस्योदाहरणरूपेण स एव कौमुद्यां प्रदत्तः। व्युत्पत्तिश्चास्य क्षीरस्वामिमतेन पूर्यते (अन्नादिना) इति पुरीतदित्येवम्। बालमनोरमायान्त्वेवं व्याख्यायते "पुरिः हृदयाख्यमांसखण्डविशेषः, तं तनोत्याच्छादयतीति विग्रहः। हृदयकमलाच्छादको मेदोविशेषः। "पुरीतता हि हृदयमाच्छाद्यते" इति श्रुतिरिति कर्किभाष्यम्।" इति। एतस्यैव शब्दस्य प्रयोगो वैदिकवाङ्मयेऽथर्ववेद-वाजसनेयिसंहिताशतपथब्राह्मण-कौषीतक्युपनिषदादिषूपलभ्यते।

---

# प्रतिवचनम्

## [ श्रीकृष्णस्वामी अय्यर ]

२। अथ तां सर्वोपायविरहप्रदर्शनेन भीषयते। अत्रेयं युक्तिः। सा विरहप्रदर्शनाद् बिभेति। विरहप्रदर्शनं तां भीषयते। कश्चन धूर्तकामुको विरहप्रदर्शनेन तां भीषयते। अत्र णिजन्ताण्णिचि प्रयोजकस्य पुरुषस्य कर्तुरात्मगामि फलम्। फलं च तस्या मानभङ्गेन कामुकस्य सुखप्राप्तिः।

तस्यास्तस्मान्न भयम्। अतः स तु तां भीषयितुं न प्रभवति। इदमेव वाक्येऽथशब्देन द्योत्यते। यत्र स्वयं सिद्धिर्न भवेत्तत्रैवोपायोऽवलम्ब्यते। "उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।"

३। आदरातिशयजननार्थं स्वाभिमतमप्यर्थं भङ्ग्या निषेधयति।

(क) निषेधति यथा प्रतिषेधति। "सेधतेर्गतौ" [ ८।३।११३ ] इति न षत्वनिषेधो गत्यर्थाभावात्* षिधू शास्त्रे माङ्गल्ये चेतिधातोर्वा प्रयोगात्।

(ख) निषेधयति। षिधु हिंसासंराद्ध्योरिति दैवादिकाद्धेतुमण्णिचि, सिध्यतेरज्ञानार्थस्येति वार्त्तिकेनात्वनिषेधे, गुणे, सेधयति इति रूपम्। प्रकृतप्रयोगस्य ज्ञानविषयत्वं तु स्पष्टमेव। निरुपसर्गो निग्रहार्थीयः। अनेनाऽर्थसंराधने बाधा द्योत्यते। परन्त्वत्र षत्वाप्रसक्तिः "सेध इति शब्विकरणनिर्देशः सिद्ध्यतिनिवृत्त्यर्थः" इति काशिका [ ८।३।६५ ]।

अतोऽत्र बोधार्थे भौवादिकः सेधतिर्धातुः। हेतुमण्णिचि न्युपसर्गे रूपं निषेधयतीति।†

---

* तु० "न्यषेध शेषोऽप्यनुयायिवर्गः।" [ रघुवंशे ]

† तु० "शिष्यमकार्य्यात् प्रतिषेधयति।" काशिका [ ८।३।११३ ]

व्याकरणस्य सूत्रं करोतीत्यत्र व्याकरणं सूत्रयतीतीव अर्थं निषेधयतीति प्रातिपदिकाण्णिचि रूपं न भवति, निषेधस्याद्रव्यत्वात्। सूत्रं वर्णात्मकं, स च वागिन्द्रियविषयः। वर्णो जिह्वयोच्चार्यो लिप्या वा प्रदर्श्यः।* निषेधस्तु न तथा। कृदभिहितो भावो लिङ्गसंख्याभ्यामेव द्रव्यवत् प्रकाशते। अतो यथाऽर्थं करोति इति न प्रयोगः, तथाऽर्थस्य निषेधं करोतीत्यपि प्रयोगो न भवितुमर्हति। अपि च कृदभिहितो भावो सिद्धस्वभावमापन्नः। अर्थस्त्वत्र न सिद्धः, अपि तु साध्यः। सेत्स्यमानमर्थं निषेधति ( निगृह्णाति )।

अर्थः सेधति ( बुध्यते ) अथवाऽर्थं सेधति ( बोधते ) इत्यत्र विकरणः प्रत्ययो भवति। विकरणो धात्वर्थं विशिनष्टि। कृति तु विकरणः क्वचिदेव भवति यथा शिति—धारयः पारयः जनमेजय इत्यादिषु। प्रकृते तु आदरातिशयजननमभिप्रेतम्। आदरातिशयश्चार्थविशेषे, स च विकरणे सत्येव। अपि चात्राऽर्थस्य निषेधो नाभीष्टः। प्रवहन्त्या नद्या यथा निरोधो न शक्यः, अपि तु बन्धनभङ्ग्या जलमन्यत्र नेतुं शक्यते कृष्यादिप्रयोगार्थम्, एवमत्र सेधन्तं सिध्यमानं वार्थं भङ्ग्या निगृह्य विशेषातिशयेन त रामणीयकेन निर्वर्तयति। वाक्ये जनिधातुरपि प्रातिपदिकात्करोत्यर्थे णिचमत्र निषेधत्येव।

एवं सेधन्तं सिध्यमानं वार्थं सेधयति, तमेव च भङ्ग्या निषेधयति। एवं निषेधनेन तस्मिन्नेवार्थे आदरातिशयं जनयति।

"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥"

[ सा० द० १०।६५ ]

४। कामदुघाः—प्रयोक्तॄणामिष्टानर्थान् दुहन्तीति।

( क ) 'कामदुघाः' इति पदं विवृणोतीष्टानर्थानिति। कामदुघा अत्र शब्दा न गावः। अतोऽत्र न कर्मकर्तृता, शब्दे गुणेऽर्थानामभावात्। गवि तु क्षीरं वर्तत इत्यतो गौर्दुग्धे पय इति प्रयोगः सुलभः। शब्दाः श्रोत्रद्वारा श्रोतॄणां बुद्धिं व्याप्य प्रयोक्तृसम्बन्ध्यभिज्ञान् प्रयोक्त्रभिमतान् अर्थान् श्रोतृबुद्धिं दुहन्ति।

"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः।" [ अ इ उ ण् इत्यत्र भाष्यम् ]

( ख ) यदा प्रयोक्ता निरुक्त्या स्वाभीष्टानर्थान् निर्वर्तयितुमिच्छति तदा शब्दं

* वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते। [ वाक्यपदीये ब्रह्मकाण्डे १०८ ]

दोग्ध्यर्थान् इति प्रयोगः स्यादेव। "अर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येन" इति च निरुक्तम् [ २।१ ]

वाक् च धेनुत्वेन कल्पितास्ति। "अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलाम पुष्पाम्" [ ऋक् १०।७१।५ ]। "नास्मै कामान् दुग्धे वाग्दोह्यान् देवमनुष्यस्थाने यो वाचं श्रुतवान् भवत्यफलामपुष्पाम्।"

"अर्थं वाचः पुष्पफलमाह।" [ निरुक्ते १।६ ] "एकः शब्दः सम्यग्ज्ञात शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति।" [ भाष्यम् ६।१।८४ ]। ए शब्दाः स्वर्गे लोके च प्रयोक्तॄणामिष्टान् अर्थान् दुहन्ति।

शब्दब्रह्मण एव विवर्तभाव इदं विश्वमिति दर्शने, ज्योतिर्यथा वस्तूनि ( तमस आच्छन्नानि ) प्रकाशयति तथा शब्दस्तन्मात्राभ्यः स्थूलेभ्यो भूतेभ्यश्च वायो रश्मिभ्यश्च यथाबलम् अर्थान् स्वयं दुग्धे। नास्मै कामान् दुग्धे वाग्दोह्यान् इति निरुक्तवचनमप्यः प्रमाणम्।

अतः प्रकृते विवरणे 'दुहते' इत्यात्मनेपदमेव युक्ततरम्॥

पक्वेषु तण्डुलेषु क्रियाकृतविशेषो दृश्यत इति यथा कर्मकर्तृतोपपद्यत एवं शब्द निर्वचनद्वारा निर्वृत्तेषु पदार्थेषु [ पद-अर्थेषु ] अपि वैलक्षण्योपपत्तेः* कर्मकर्तृत स्यादेव। एवं कामदुघाः शब्दाः प्रयोक्तॄणामिष्टानर्थान् स्वयं दुहते। "न दुहस्नुनम यक्चिणौ" इति निषेधान्न यक्।

"उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥"

"भद्रैषां लक्ष्मीर्निहिताऽधि वाचि" [ऋक् १०।७१] इत्याद्यृगर्थानुकूल्येन कर्मकर्तरि लकारे 'दुहते' इति प्रयोग एव साधुर्भवेत्॥†

---

## स्वागतम्

अयं स्वागत-शब्दः कस्य वा हर्षं न संजनयति? परं वङ्गभाषामय्यां कथायां ( पूजार अर्घ्य गल्पभारती १३६५, पृः २७४ ) काजेइ आपनि स्वागतम् ( अतो भवा स्वागतम् ) इति पठन्तो नितरां विषीदामः।

---

* शब्दाश्चात्र प्रयोक्त्रधीनाः। तु० स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता। वसूपमानस्य वसूनि मेदिनी॥ [ किराते० १।१८ ]

† कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति।
तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः॥ [उत्तररामचरिते ५।३१

# वकाराणां वीथीषु विकरणम्

"दैनिकवसुमत्याम्" ( रविवार, १६इ कार्त्तिक १३६५ ) पुस्तकपरिचयस्तम्भे दृष्टम्—"ख्यातिवान् कवि नरेन्द्रदेव छोटदेर ख्यातिवान् गल्पकारओ" इति। ज्ञानं यस्यास्ति स ज्ञानवान्, गुणो यस्यास्ति स गुणवान्, विद्या यस्यास्ति स विद्यावान्, अत एव लेखकस्य मतेन ख्यातिर्यस्यास्ति स ख्यातिवान् !!! आशापूर्णाया देव्या मतेन रुचिर्यस्यास्ति स रुचिवान् !!! ( "पूजार अर्घ्य गल्पभारती" १३६५, पृः ४७ )।

---

# ईदृशः सन्धिः !

वङ्गभाषामय-मासपत्रिकायां ( पूजार अर्घ्य गल्पभारती १३६५, पृः १६ ) पठितम्—याहार यशोसौरभे निखिलभारत आमोदित ( यस्य यशोसौरभेण निखिलभारतमामोदितम् ) इति। "यशोसौरभ"स्य सौरभेण न केवलं निखिलभारतं परं विश्वब्रह्माण्डमेवामोदितं स्यात्। यशोगौरवानुरोधेन यशोसौरभ रङ्गभूमिमवतीर्णम् !

---

# शब्दार्थरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## ३। नादेयाः शब्दा अनुकूलप्रतिकूलादयः

सर्वास्वेव भाषासु सन्ति केचन सुप्रसिद्धाः शब्दा ये प्रथमतो नदीं वा सागरं वोद्दिश्य प्रयुज्यन्ते स्म, ततश्च गच्छता कालेन लाक्षणिकेनार्थेनान्यत्रापि तेषां प्रयोगः समजायत। संस्कृतभाषायाम् अनुकूल-प्रतिकूल-तटस्थ-प्रतीपादिशब्दा एवंविधा एव। तथाहि कूलम् अनुगत इत्यनुकूलः, कूलं प्रतिगत इति प्रतिकूलः। अथर्ववेदे [ ५।१४।१३ ] श्रूयते—

अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम्।
सुखो रथ इव वर्ततां कृत्या कृत्याकृतं पुनः ॥

इति। अत्र प्रतिकूलशब्दः सर्वथा रूढार्थे प्रयुक्तः, अनुकूल-शब्दस्य व्युत्पत्तिनिमित्तं लेशतः प्रतीयते।

यत् कूलाभिमुखि तदनुकूलं यथानुकूलं सलिलम्, अनुकूलो वायुः, अनुकूला नौः। एतत्प्रतिद्वन्द्वि प्रतिकूलम्। क्रमेण च यदेवानुगुणम् उपकारकं छन्दोऽनुवर्ति तदेवानुकूलं, तत्प्रतिद्वन्द्वि च प्रतिकूलं सञ्जातम्। एवमेव अनुकूलो गलहस्तः, प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनतेत्यादयः प्रयोगा उपपद्यन्ते।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

| December, 1958. | १८८०-शकीय पौषस्य १३श-वर्षस्य चतुर्थी संख्या | Vol. XIII No. 4 |
|---|---|---|

## आभाणकमाला

He is free of fruit that wants an orchard.

यस्य फलोद्यानं नास्ति स फलप्रदाने मुक्तहस्तो भवति ।

It is comparison that makes men happy or miserable.

तुलनमेव मनुजं सुखिनं दुःखिनं वा विदधाति ।

"अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥"

Nothing is good or bad, but by comparison.

न खलु स्वतः किमपि साधु वाऽसाधु वा, तुलनेनैवोपजायते साधुत्वं वासाधुत्वं वा ।

Greek. Kōnōpa elephanti paraballein.

मशकेन मातङ्गस्य तुलनम् ।

No rose without a thorn.
French. Il n'y a pas de rose sans épine.
German. Keine rosen ohne Dornen.

न हि कमलं कण्टकं विना ।

German. Keine Freud', ohne Leid. "Freud' muss Leid, Leid muss Freude haben". GOETHE.

"न हि सुखं दुःखैर्विना लभ्यते ।"

[ श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलः ।

यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुखं
लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥ ]

No joy without alloy.

न हि श्यामिकामन्तरेण सुखमस्ति । न ह्यविमिश्रं ( दुःखासम्भिन्नं ) सुखमस्ति ।

No joy without annoy.

न हि सन्तापमन्तरेण सुखमस्ति ।

[ And yet, mingled with his joy, there was something of sorrow. As the old Roman poet has it, *Surgit amari aliquid**. WODEHOUSE, *The Voice from the Past.* ]

There is no pleasure without sorrow.

न हि दुःखं विना सुखं समस्ति ।

When wealth is lost, nothing is lost ;
When health is lost, something is lost ;
When character is lost, all is lost.

वित्ते विनाशं समुपागतेऽहं किञ्चिन्न नष्टं पुरुषस्य मन्ये ।
आरोग्यनाशं कलयेऽल्पनाशं सर्वस्वनाशं खलु शीलनाशम् ॥
( महादेवः पाण्डुरङ्ग ओकः )

---

# भारतरत्नमञ्जूषा

यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते ॥
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥
यः सन्धारयते मन्युं योऽतिवादांस्तितिक्षते ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥

# अभिज्ञानशकुन्तलापाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शाकुन्तलस्य द्वितीयेऽङ्के दृश्यते श्लोकः —

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥

इति। अत्र क्वचित् तद्भावदर्शनायासीति पाठः, क्वचिच्च तद्भावदर्शनाश्वासीति पाठः। अनयोः कतरो ज्यायानिति साम्प्रतं विचारपदवीमवतरति। अत्र राज्ञोच्यते— अकामेनाप्येतदनुमन्तव्यं यद् यस्यामहं बद्धानुरागः सा प्राप्या किन्तु सुखेन न प्राप्या (the course of true love did never run smooth), तस्या गुर्वधीनत्वात्, गुरोश्चेदानीमसन्निहितत्वात्। तथापि मनस्तद्भावदर्शनार्थम् आयस्यति, अथवा तद्भावदर्शनेनाश्वसिति। तस्या आन्तरो भावः कीदृशः? मयि परमार्थत एव तस्यानुरागो वर्तते वा न वेति दर्शनाय प्रयासमातिष्ठति, यद्वा तस्या मुग्धस्निग्धकटाक्षविक्षेप-मन्दगमनादीनां सन्दर्शनेन कमपि हर्षमनुभवति। असञ्जातेऽपि समागमे परस्पराभिलाषः प्रीतिं पुष्णाति ।

एतदुक्त्वैव राज्ञा स्मितं कृत्वा व्याहृतम्—एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते। तथाहि—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामी स्वतां पश्यति ॥

इति। राज्ञा स्वाभिप्रायेणेष्टजनचित्तवृत्तिः सम्भावितेति श्लोकादस्मात् सुस्पष्टमेव प्रतीयते, अत एवाश्वासीति पाठ एव साधीयान्। किञ्च दर्शनाश्वासीति पाठे शकारस्य शोभनोऽनुप्रासो भवति। किञ्च—

अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः ॥

इति मालविकाग्निमित्रगतपद्येन संवादोऽपि भवति ।

नाट्यशास्त्रव्याख्यायां सहृदयशिरोमणिनाभिनवगुप्ताचार्येणापि तद्भावदर्शनाश्वासीति पठितम् ।

साहित्यदर्पणे प्रतिमुखाङ्गस्य विलासस्योदाहरणत्वेन श्लोकोऽयमुपन्यस्तः। व्याख्यातं चानन्तदासेन—मनसिजेऽकृतार्थेऽपि स्त्रीपुंसयुगलस्य सम्भोगं विनापि

उभयप्रार्थना अन्योन्यप्रार्थना रतिं प्रीति कुरुते। नायिकाया नायके नायकस्य च नायिकायां यदि प्रार्थना दृश्यते तदा सम्भोगाभावेऽपि तयोः प्रीतिर्भवति, तेन तस्या भावदर्शनेन प्रार्थना मय्यभिव्यक्तेति मनः समाश्वासीति।

[ तदन्योन्यवदनालोकनविनोदेन दिनं तावदतिवाहयाव इत्यर्थ इति ध्वन्यालोक-लोचनस्य कौमुद्यां दृश्यते—'अन्योन्यवदने'ति 'अतिवाहयावः' इति च समानुरागत्व-सौभाग्यसूचनमुखेन "अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" इति न्यायेन दिवसातिवाहनदुःखस्य कथं कथमपि सह्यत्वं दर्शितमिति। "यस्य कारणात् त्वमुत्त्रुटि-तबन्धनं कङ्केलीपल्लवमिव क्लान्तनवमालिकाकुसुमनिस्सहा परिहीयसे सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वम्" इति मालतीमाधवगतं लवङ्गिकावाक्यं व्याचक्षाणेन टीकाकृतोक्तम्—अनेन प्रकारेणापि किं नाश्वासः, अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते इति न्यायादित्यर्थः। इति।

उद्दामदेहपरिदाहमहाज्वराणि सङ्कल्पसङ्गमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि किं वा मयापि न दिनान्यतिवाहितानि ॥

इति षाष्ठं माधववाक्यं व्याचक्षाणेनोक्तम्—अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते इति न्यायात्। इति। ]

---

## कृतज्ञता

[ शिरोमणिः सन्निधानम्—सूर्यनारायणशास्त्री ]

खरक्षणे जाग्रतो ये घनास्तेषां विनिर्गमात्।
म्लानो ग्लानो वृक्षकोऽस्ति ध्रियमाणः कथञ्चन ॥
स मर्मरैः प्रार्थयते यातायातान् समीपगान्।
न विदुः किं नु तद्भाषां द्रष्टुं तं कोऽपि नागमत् ॥
अवेक्ष्य शोच्यतां तस्य श्रुत्वा च प्रार्थनारवान्।
निर्भिन्नहृद्गलद्बाष्पस्तं जीवयितुमैषिषम् ॥
आलवाले दत्तसारे कृतैः सलिलसेचनैः।
द्वित्रैरेव दिनैर्वृक्षः स दृष्टोऽपूर्ववज्जनः ॥
प्रकृतिस्थः क्रमाद् भू-जो दृढस्कन्धश्च सारवान्।
ऋणनिर्यातनार्थं मे त्वरमाण इवावृधत् ॥

प्राप्तकाले यथाशक्ति पत्रपुष्पफलैयु तम् ।
शाखाकराञ्जलिं भक्त्या चलाङ्गो मह्यमार्पिपत् ॥
"त्वयैवेदं दत्तमङ्ग तवैव, न तु मामकम् ।
छित्त्वा मां गृह्यतामिष्ट"मित्याख्यद् भ्रमरस्वनैः ॥
मत्सात्कृत्य स सर्वस्वं यावज्जीवं, मृतश्च माम् ।
प्राप्य काष्ठेङ्गालभावम् भस्मीभूयाप्युपाचरत् ॥

---

# श्वापदः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

श्वापदशब्दे शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु [ ६।३।१३७ का ] इति काशिकागतेन वार्त्तिकेन दीर्घ इति टीकाकृतः प्रतिजानते। परमथर्ववेदे श्वपादित्याद्युदात्त उपलभ्यते।

उत्तमोऽस्योषधीनाम्, अनड्वाञ्जगतामिव व्याघ्रः श्वपदामिव। [ ८।५।११, १९।३९।४ ]।

( श्वपदो वृकसृगालाद्या दुष्टमृगा इति भाष्यम्। )

श्वापदशब्दोऽप्याद्युदात्त ऋग्वेदे दशममण्डले सकृदेवोपलभ्यते—

यत्ते कृष्णः शकुन आतुतोद पिपील सर्प उत वा श्वापदः।

अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ [ ऋ० १०।१६।६, अ० १८।३।४५। ] इति।

अथर्ववेदे पुनरपि द्विः श्वापद-शब्द उपलभ्यते—

अथ सर्वं श्वापदं मक्षिका तृप्यतु क्रिमिः। [ ११।११।१० ]

श्वापदो मक्षिकाः सं रभन्तामामादो गृध्राः कुणपे रदन्ताम्। [ ११।१२।८ ]

एतदर्थमाथर्वणप्रातिशाख्ये दृश्यते सूत्रम्—शुनः पदे [ ३।१० ] इति। पदशब्दे परे श्वन्-शब्दस्य दीर्घो भवतीत्यर्थः। तत्तु नावश्यकमिति प्रतिभाति।

एतस्माच्च सर्वस्माद् विस्पष्टमेव प्रतीयते यत्प्रथमतः एकपादुत्तानपात्प्रभृतय इव श्वपाच्छब्दोऽप्यासीत्। तस्याद्युदात्तत्वात् स बहुव्रीहिसमासनिष्पन्न इत्यनुमीयते। तस्माच्चाप्रत्ययेन श्वापद-शब्दोऽकारान्तो निष्पन्नः। तत्रत्यश्चाकारः तद्धितेष्वचामादेरिति सूत्रेण, न पुनरन्येषामपि दृश्यत इति सूत्रेण।

पदपाठे श्वापद-शब्देऽवग्रहाभावोऽप्यस्मन्निर्वचनं द्रढयति। तथाचोक्तम्—

अवगृह्यात् पदाद् यत्र तद्धितो वृद्धिमान् भवेत्।
एकाज्वृद्धिस्वरान्तात्तु न तत्रावग्रहो भवेत्॥ इति।

---

कवीन्द्र-रवीन्द्रनाथस्य

## फल्गूत्सवः ( 'होरिखेला' )

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

( १ )

भूनागराजप्रमदा कदाचित् पाठानसैन्याधिप-केसराय।
प्रादत्त पत्रं विजिताजिभूमौ विहाय कोटां किल केतुनस्था॥
'युद्धाभिलाषो यदि वीर! पूर्णं आयाहि पाठानभटैः समेतः।
कुर्मोऽद्य राजःस्थलपौरनार्यः फल्गूत्सवं फल्गुदिने भवद्भिः॥

( २ )

'पाठानसैन्यैर्महिषी नृपस्य विधास्यते फल्गुविलासलीलाम्'।
ज्ञात्वेति पत्रे स जहास वीरो ममार्ज कूर्चं च सहस्रकृत्वः॥
आवर्त्य हर्षादथ गुम्फकोटी वर्णाढ्यमुष्णीषमधत्त शीर्षे।
कृत्वा च सुर्माञ्जनलेपमक्ष्णो-र्जग्राह हस्ते वरकं सुगन्धम्॥

( ३ )

तपस्यमासे मलयाद्रिवातः समाययौ केसरगन्धमत्तः।
वने वने मञ्जरिता रसाला भृङ्गाश्च सौख्यान्मनसो जुगुञ्जुः॥
स्वाधीनचित्ता इव षट्पदास्ते यथेच्छगत्या गगने विचेरुः।
पाठानसैन्याश्च दलैर्विभक्तास्तदागताः केतुनपत्तनान्ते॥

( ४ )

बभौ पुरान्ते नृपकुञ्जमध्ये वेलार्कमन्दीभवदंशुदीप्ता।
वैतालिकानां मुरलीसमुत्थै-र्दिशश्च नेदुर्मुलतान-तानैः॥
दृष्ट्वा वनान्ते समुपस्थितांस्तांश्छतं महिष्याः परिचारिकाश्च।
तत्रागता ह्योलिविलासकामा भानुश्च रेजे दिवि रक्तवर्णः॥

( ५ )

आन्दोल्य पट्टाग्रां कटिपट्टवस्त्र-मुड्डाप्य चीनांशुकमुत्तरीयम्।
सव्यान्यपाणौ विनिधाय रक्ते सत्फल्गुचूर्णपरिपूर्णपात्रम्॥

सव्येन संगृह्य करेण रम्यां पुष्पापगर्भां कनकालुकां च ।
निबध्य नीव्यां नलिकां च नार्यः पङ्क्तीनिबद्धाः समितिं समेयुः ॥

( ६ )

सनेत्रभङ्गिश्चतुरं विहस्य सैन्याधिपस्तत्सविधे च गत्वा ।
प्रोवाच 'भो भो बहुयुद्धजेता प्राणैर्वियुक्तोऽद्य भवामि मन्ये" ॥
श्रुत्वेति राज्ञीपरिचारिकाणां वृन्दानि चक्रुः सहसोच्चहासम् ।
उष्णीषमान्दोल्य स केसरोऽपि सरङ्गभङ्गं विदधे प्रणामम् ।

( ७ )

उद्दामखेलारभताथ होले-रुड्डीनमासीद्दिवि फल्गुचूर्णम् ।
नवं च दध्रुर्वकुलानि वर्णं पेतुर्द्रुमूलेऽरुणरेणवश्च ॥
सायन्तने खे नवरागरक्ते समुत्थिता कुज्झटिकेव रक्ता ।
वामोपहासैश्चकिता विहङ्गा विसस्मरुर्वै कलकूजितानि ।

( ८ )

सङ्क्रीडमानेन वराङ्गनाभि-र्व्यचिन्ति धीरं हृदि केसरेण ।
"किमद्य नोन्मादनमस्ति नेत्रे दोलायते वा मम किं न वक्षः ॥
वक्राणि नारीपदनूपुराणि नदन्ति किं वा विरसस्वरेण ।
कथं न वासां करकङ्कणानि ध्वनन्ति कर्णे मधुरं ममाद्य" ॥

( ९ )

चख्यौ स वीरः पुनरेव चित्ते "राजस्थलस्थप्रमदाजनानाम् ।
तनौ न जाने तनुमात्रमास्ते कथं न वामोचितपेलवत्वम् ॥
मृणालमृद्वी न च बाहुवल्ली कण्ठस्वरो निन्दति वज्रनादम् ।
शुष्काः स्वतन्त्राः कठिना ह्यपुष्पा लताः किमेता मरुसम्भवा वा" ॥

( १० )

भूपालिमिश्रेमनतानमेव ततान वंशी द्रुततालयुक्तम् ।
अस्मिंश्च काले स्वयमेव राज्ञी समागता कुञ्जवनप्रदेशम् ॥
सा फल्गुपात्रं प्रियकिङ्करायाः करे च दत्त्वा विनयेन तस्थौ ।
मुक्तास्रजौ कर्णकयोरभातां हेमाङ्गदे द्वे च कठोरपाण्योः ॥

( ११ )

उपेत्य वीरो महिषीमवादीत् "प्रायेण जाते तव देवि मार्गे ।
निबद्धदृष्टे नयने ममान्धे" ; सोचे "दशा सैव ममापि बन्धो" ॥

सखीषु हास्यैर्विवशासु राज्ञी निक्षिप्य वेगात् करकांस्यपात्रम् ।
चकार शूरस्य ललाटपट्टं रक्ताक्तमेकं नयनं च काणम् ॥

( १२ )

अनभ्रवज्रस्तनितानुकारि-वाद्यानि नेदुः समरं विघोष्य ।
चन्द्रश्चकम्पे दिवि पौर्णमास्या जज्वाल चासिः प्रतिहत्य दृष्टिम् ॥
तूर्याणि नेदुः सुगभीरतानै-र्द्वारस्य पार्श्वं रभसं समेत्य ।
तले तले च प्रतिकुञ्जवृक्षं दध्वान युद्धोचितवाद्यजातम् ॥

( १३ )

पपात भूमौ कटिमुक्तवासो डिड्ये च वायौ पिहितोत्तरीयम् ।
एयुश्च कस्मादिव मन्त्रशक्त्या सन्त्यक्तनारीवसनाः पुमांसः ॥
शतं भुजङ्गा इव पुष्पमध्या-च्छतं धृतास्त्राः पुरुषप्रवीराः ।
पाठानसैन्यान् परिवव्रुरेव स्वप्नं हि तेषां विलयं प्रयाप्य ॥

( १४ )

मार्गेण येनैव समागतास्ते पाठानसैन्याः सह केसरेण ।
प्रत्यागतोऽभून्न हि कोऽपि तेन मार्गेण भूयो नगराच्च तस्मात् ।
तपस्यरात्रौ वनवीथिकासु पिका विरेमुर्न तु कूजितेभ्यः ।
तत्केतुने केसरकुञ्जमध्ये नाशं गता केसरमर्त्यलीला ॥

———

पतनशङ्कयतापि कालेन नापगता मनसः। स्वप्रियायामनुरागातिशयप्रदर्शनार्थं पुरुषस्य सबलस्यापि वधवर्णनं कृतं कामिन्या। "तवापि कस्याश्चिदीदृशः प्रगाढोऽनुरागश्चेद् वसतिनैव दास्यते, स्वल्पश्चेदनुरागः स खल्वस्माकं मेलनेऽन्तरायो न भविष्यती"ति हृदयम्। ( क्रमशः )

---

# पुनरपि वकारः

"रविवारेर युगान्तर"पत्रे "इतश्चेतः"-शीर्षके निबन्धे दृष्टम्—नन्दलाल वसु ओ शिशिरकुमार भादुडिर पिछनेओ दातारा छुटछेन किन्तु असाधारण शक्तिवान् बले एदेर धरते पारछेन ना ( 'नन्दलालवसोस्तथा शिशिरकुमारभादुडेरपि पश्चाद् धावन्ति दातारः, परमनितरसाधारणं शक्तिमन्त इति तान् ग्रहीतुं न प्रभवन्ति' ) इति।

बलमस्यास्ति : बलवान् :: शक्तिरस्यास्ति : $x$

$\therefore$ $x$ = शक्तिवान्!

---

# पाश्चात्त्यो वा पाश्चात्यो वा

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

पाश्चात्त्यशब्द एकतकारको वा द्वितकारको वेति पृच्छन्ति बहवः। प्राकृतानां मतेन बाहुल्येनोपलभ्यमानमेकतकारकमेव रूपं समीचीनम्। इदानीं गणतन्त्रस्य साम्राज्यं वर्तते, अत एव परमार्थतः साधु वा भवतु मा वा भूद् बहुभिः शिष्टैर्वाशिष्टैर्वा हालिकैर्वा शाकटिकैर्वा यदेव प्रयुज्यते तदेव साधुत्वेन मन्तव्यम्। अस्माभिः पुनः प्राचीनपथानुसारिभिर्दुराग्रहं दूरीकृत्य वैयाकरणानां मतमेवास्थीयते।

तत्र पाणिनेः सूत्रम्—दक्षिणापश्चात्पुरसस्त्यक् [ ४।२।९८ ] इति। अत्र पश्चाच्छब्दात् त्यक् प्रत्ययो विहितः; पश्चाच्छब्द एकस्तकारः, त्यप्प्रत्यये चैकस्तकारः, संहत्य तकारद्वितयं सञ्जातम्। पूर्ववर्तिनि दाक्षिणात्यशब्द एकस्तकारो वर्तते, उत्तरवर्तिनि च पौरस्त्यशब्द एकस्तकारो वर्तते, अत एव पूर्वोत्तरसाहचर्यात् पाश्चात्त्यशब्दोऽपि कुम्भकर्णे भकारोऽस्तीति न्यायेनैकतकारकः संवृत्तः।

न खलु न जानीमो वयं यत् पश्चाच्छब्दात् त्यकि पाश्चात्यमित्येकतकारकं पदं निष्पद्यते, परं पश्च पश्चा चच्छन्दसि [ ५।३।३३ ] इति सूत्रेण पश्चाच्छब्दस्य च्छान्दसत्वं प्रतिपादितम्। पाश्चात्त्यशब्दश्च प्रायेण लोक एवोपलभ्यते। प्रत्यक्षं च सूत्रं

वर्तते—दक्षिणापश्चात्पुरसस्त्यगिति। पश्चात् [ ५।३।३२ ] इति सूत्रे यः पश्चाच्छब्दस्तस्यैवेह ग्रहणम्। अत एव भगवतः पाणिनेर्मतेन पाश्चात्त्यपदं द्वितकारकमेव साधु।

जैनेन्द्रव्याकरणे सूत्रम्—पुरःपश्चाद्दक्षिणात् त्यण् [ ३।२।१०८ ] इति। अत्रापि पश्चाच्छब्दात् त्यण् विहितः। परं मुद्रितायां वृत्तौ प्रमादादेकतकारको ग्रथितः पाश्चात्यशब्दः।

चान्द्रव्याकरणे [ ३।२।७ ] सरस्वतीकण्ठाभरणे [ ४।३।११ ] च पाणिनीयमेव सूत्रं सन्दृश्यते। शाकटायनव्याकरणे [ ३।१।७ ], हैमानुशासने [ ६।३।२३ ] संक्षिप्तसारे [ तद्धित ३७३ ] सुपद्मे [ ५।३।८ ] च सूत्रं दृश्यते—दक्षिणापश्चात्पुरसस्त्यण् इति।

मुग्धबोधेऽपि "त्यत्राद्यचिरदक्षिणादेस्त्यष्टनन्त्यण्मा भवादौ [ ५२६ ] इति सूत्रे त्यण्प्रत्ययो विहितः, वृत्तौ च दृश्यत उदाहरणम्—पाश्चात्त्य इति।

प्रयोगरत्नमालायां सूत्रं पुरःपश्चाद्दक्षिणाभ्यस्त्यण् शेषेऽर्थे [ ७।१२६० ] इति।

हरिनामामृते सूत्रम्—दक्षिणापश्चात्पुरोभ्यो नृसिंहस्त्यः [ ७।४२७ ] इति।

एवं सर्वेषामेव वैयाकरणानां मतेन पाश्चात्त्यशब्दो द्वितकारक एव साधु न पुनरेकतकारकः।

अत्र प्राकृतजना इत्थं प्रत्यवतिष्ठन्ते—कि वा कृतमवदातं कर्म पाश्चात्त्येन यत् तेन तकारद्वितयं लभ्येत, किं वानुष्ठितं गुरु पातकं पौरस्त्यदाक्षिणात्यात्रत्यादिभिर्यत्तैरेकेनैव तकारेण सन्तुष्टैरवस्थातव्यम्? कथं वैतावतो वत्सरान् पाश्चात्त्यानां प्रजा भूत्वा तेभ्यः करं प्रदायेदानीं स्वातन्त्र्यमधिगम्यापि तेभ्यस्तकाररूपं करं प्रयच्छेम? अत एव यत्किमपि वदन्तु नाम वैयाकरणा अस्माभिरेकतकार एव पाश्चात्यो विलेखनीयः, व्यपेतेष्वपि प्राणेष्वतिरिक्तस्तकारो न प्रसादीकरणीय इति।

---

## भागवृत्तिकृतः कैयटतः प्राचीनत्वम्

णेरणाविति सूत्रस्य कैयटे दृश्यते—एवं चारुह्यते हस्ती स्वयमेवेति ये कर्मवद्भावं प्रदर्शयन्ति ते न्यायं भाष्यं च बाधमाना अवधीरणीयाः। इति। नागेशभट्टेनोद्द्योत उक्तम्—प्रदर्शयन्त इति। भागवृत्तिकारा इति। एतस्माच्च प्रतीयते भागवृत्तिकृतो वचनं कैयटेनोद्धृतमिति। भागवृत्तिकारा इत्यत्र गौरवे बहुवचनं भागवृत्तिकृति बहुमानं सूचयति।

## काया

वङ्गभाषायां छायाशब्दानुरोधेन कायशब्दोऽन्तरान्तरा महामायाप्रभावेण कायारूपं परिगृह्णाति। "कायाच्छाया तथा माया जायायाश्चित्तहारिणी।" कैश्चिन्मन्यते कामन्दकीयनीतिसारेऽपि कायाशब्दः सन्दृश्यते। तथाहि तत्रोत्साहप्रशंसाप्रकरणे पठ्यते—

लक्ष्मीरुत्साहसंम्पन्नाद् बुद्धिशुद्धं प्रसर्पतः।
नापैति कायाच्छायेव विस्तारं चोपगच्छति ॥१४।६ इति।

अत्र सुस्पष्टमेव कायाच्छायेति वर्तते। इति। वस्तुतस्तु न खल्वत्र कायाच्छायेति समस्तं पदं किन्तु कायात् छाया इति पदद्वयम्।

---

## ब्राह्मणस्य गौः

वङ्गभाषायामाभाणको वर्तते—ब्राह्मणस्य गौः, अल्पं भुङ्क्ते, अधिकं दुग्धे, प्रभूतं गोमयं ददाति, "समां समां" स्त्र्यपत्यं "विजायते" इति। शाबरभाष्ये दृश्यते—इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्त्र्यपत्यानष्टप्रजा चेति।

---

## छात्रहितैषिणी

### *विक्रामतेः पदम्*

कामन्दकीयनीतिसारे दृश्यते [ ९।५२ ]—

बलीयसि प्रणमतां काले विक्रामतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥

इति। अत्र जयमङ्गलव्याख्यानम्—काले विक्रामतामपीति। अभ्युच्चयकाले विक्रममाणा अप्यनभ्युच्चिताश्चेत् प्रणमन्ति तदैषां सम्पदो नापगच्छन्ति। इति। अत्र मूले विक्रामतेः परस्मैपदे प्रयोगष्टीकायां पुनरात्मनेपदे प्रयोगः। कतरोऽनयोः शुद्ध इति संशय उपजायते।

संस्कृतव्याकरणेषु क्रामतिः परस्मैपदी, क्रमु पादविक्षेपे इति धातुपाठे समाम्नानात्। विपूर्वः क्रामतिः पादविहरण एवात्मनेपदी, वेः पादविहरण इति स्मरणात्। अत एव मूलस्थं परस्मैपदं साधु टीकास्थमात्मनेपदमसाध्विति बोद्धव्यम्।

यद्यपि भारतरामायणादिषु विक्रामतिः पराक्रमप्रदर्शने उभयपदी तथापि भाषायामयं परस्मैपदी। तथा च भवभूतिप्रयोगः—

दोर्निष्पेषविशीर्णसन्चयदलत्कङ्कालमुन्मथ्नतः
प्राग्वीराननुपत्य तत्प्रहरणान्याच्छिद्य विक्रामतः।
उद्वेल्लद्घनरुण्डखण्डनिकराकीर्णस्य सङ्कोदधे-
र्द्वेधा स्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत्॥

मालतीमाधव ८।९

अत्र टीकाकारः—विक्रामतः अभिमुखेषु पराक्रमं प्रयुञ्जानस्येति व्याचख्यौ।

अत एव नीतिसारव्याख्यायां पराक्रममाणा इति पठनीयम्। उपपराभ्यामिति-सूत्रेणोत्साह आत्मनेपदं सिध्यति।

मूले बलीयसि प्रणमतामित्यत्राधारविवक्षायां सप्तमी। बलीयसे बलीयस इति वा पाठः साधीयान् स्यात्।

येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरून् विक्रमन्ते इति पञ्चतन्त्रप्रयोगोऽपि प्रामादिकः।

हेमचन्द्रबृहद्वृत्तौ विस्पष्टमेवोक्तम् - विक्रामति राजा। उत्सहत इत्यर्थः।

---

# वार्त्ता

वङ्गदेशमन्त्रिणो जालानमहोदयस्य द्विहायनी पौत्री सेप्टेम्बरस्य त्रयोदशे दिवसे भवनस्य तृतीयभूमितः पतिता। परं दैवे रक्षति को वा मारयेत्? सा खलु धूमशकटस्य छदिरुपरिवर्तिन आस्तरणस्योपरि निपतिता सर्वथैवाक्षतशरीरासीत्। "अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति। जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति॥"

नवेम्बरमासस्य त्रयोदशदिवसे सायं काचन त्रिहायणी बालिका मात्रा साकं बाष्पशकटेन कुर्णुलतो हायदराबादं सञ्चरमाणा मध्येमार्गं गवाक्षपथेन शकटतो भूमौ पतिता, केनचन पथिचारिणा समुत्थापिता स्वस्थैवावर्तत। भीतिरज्जुसमाकर्षणेन धूमशकटस्य गतिर्निरुद्धा, शकटं च परावर्त्य बालिकायाः पतनस्थानं प्रापितम्। तत्र च शोकपरवशया जनन्या स्वदुहिता दैवदत्तेव पुनर्लब्धा।

---

# अधिकन्तु न दोषाय

दैनिकवसुमत्यां (२८।५।१३६५) दृष्टम्—"अविश्वास्यकर" "दुःश्चिन्ता" च। अविश्वास्याविश्वासकरयोः सङ्करेण अविश्वास्यकरस्य समुत्पत्तिः। यथा यथा गुडं

दास्यसि तथा तथा मधुरं भविष्यतीति न्यायेन विसर्गस्य शकारभावेऽपि तस्य यथावदवस्थानं दुःश्चिन्ता-शब्दे दृश्यते। क्वचिद् भक्षितेऽप्यपूपे तस्य यथावदवस्थितिर्दृश्यते वङ्गीयलेखकानामाख्यायिकासु। ( You can both eat your cake and have it !!! )

प्रियवाचकमहाभागाः, लातीनभाषायां बेनेशब्दस्यार्थः शोभनं, सम्यक्, सुखेन। सूपसर्गसमानार्थकोऽयं शब्दः। परं bene-घटितशब्देषु प्रायेण प्रमादानामाधिक्यं परिदृश्यते। Benefited-शब्दे t-द्वयम् पूर्वमेव प्रदर्शितम्। Hindusthan Standard पत्रे Lt. Col. K. K. Chatterjee महोदयस्य पत्रे दृष्टम् (Dec. 4, 1958, late city edition, p 4, c. 3): May his teachings pervade world-consciousness as a memorable legacy for the benefit of life and humanity by the *beneficient* ministration of science spirit इति। अत्र वदान्यप्रवीरेणाक्षरग्रथकमहोदयेन beneficent शब्दाय इकारः प्रसादीकृतः। लातीनभाषायां beneficere-धातोः शतृप्रत्ययेन beneficent शब्दो निष्पद्यते। परं beneficial-beneficially-beneficiary-शब्देष्विकारो वर्तते, अत एव beneficent शब्द इकारयोजनेन beneficient विहितः।

efficere : efficient : : beneficere : $x$

$\therefore$ $x$ = beneficient !

Sunday Amrita Bazar Patrika (November 16, 1958 Town Edition) वार्तापत्रस्य प्रथमपृष्ठे सुबृहदक्षरै मुद्रितं दृष्टम्—MPs Of UK hails Loan Grant To India इति। पुनरपि पञ्चमे पृष्ठे तृतीये स्तम्भे बृहद्भिरक्षरैर्जाज्वल्यमानानि तान्येव पदानि दृष्टानि। MP शब्दादनन्तरं s वर्तते, अत एव hail शब्दादनन्तरमपि सकारेण भाव्यम्, अन्यथा पक्षपातित्वदोषः प्रसज्येत !!!

---

# मुरारेस्तृतीयः पन्थाः

आङ्ग्लभाषागतः exhilarate-शब्दो बहूनां शिरःशूलं समुत्पादयति। अत्रत्यतृतीयः स्वरः a इति विशेषज्ञा आतिष्ठन्ते, e इति प्रायेण भारतीयाः प्रतिजानते। अत एवामृतबाजारपत्रिकायां (November 16, 1958, p, 10, col, 1) स्वरोऽयम् i रूपेण मुद्रितः। मुरारेस्तृतीयः पन्थाः।

# वेदान्तविमर्शः

[ श्रीचारुकृष्णदर्शनाचार्यः ]

"तमेव विदित्वाऽतिमृत्युमेती"ति पुरुषसूक्तमन्त्रे च तं-पदेन पूर्वोक्तजगत्-स्रष्टुरेव परामर्शात् जगत्कारणब्रह्मज्ञानादेव मुक्तिर्दर्शिता, श्रुत्यन्तरं च "ब्रह्म वेद ब्रह्मैव भवती"ति, ब्रह्म च "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्य यत" इति श्रुतिस्मृतिसिद्धो जगन्निमित्तोपादानं परमात्मेति तज्ज्ञानादेव मुक्तिरुक्ता श्रुतौ, न तु जीवपरयोरभेदज्ञानादिति भाव्यम्। प्रतर्दनोपदेष्टुरिन्द्रस्य शतवर्षं प्रजापति-गृहे ब्रह्मचर्येणोपासनया शुद्धसत्त्वस्य ब्रह्मज्ञानमुक्तं नतु तत्र तत्त्वमसि-गन्धोऽपि। नरेन्द्रेण प्रतर्दनं प्रति तत्त्वमस्युपदेशः कृतः स्वयं च समाधिना ब्रह्मणैकीभावात् "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वे"त्युक्तम्। तथाच श्रुतिः—

"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विजानत आत्मा भवति गोतम॥" इति।

न्यायश्च "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति। आह च विष्णुपुराणम्—

"आत्मभावं नयत्येवं तद् ब्रह्म ध्यायिनं मुने।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥" इति।

योगियाज्ञवल्क्येऽपि—

"सरित्पतौ प्रविश्याम्बु यथाऽभिन्नत्वमाप्नुयात्।
तथात्माऽभिन्न एव स्यात् समाधिं समवाप्य च॥ इति।

न च वाक्यादपरोक्षज्ञानं ज्ञानस्यापरोक्षत्वं च इन्द्रियजन्यत्वनिबन्धनमित्येव प्रतिपादितमधस्तात्, ब्रह्मजीवयोश्च नाभेदः किन्तु भेदाभेद एवेति न शब्दादपरोक्ष-सम्भवः। ज्ञानं नाम ब्रह्मसाक्षात्कारः, स च ब्रह्मणः प्रत्यक्षाकाराकारितचित्तवृत्त्या जीवस्य सम्बन्धमात्रं न तु तत्कृतस्फुरणं तदा चान्तःकरणस्यैव प्रतप्ताङ्गारवदतिभास्वरत्वान्न विषयवज्जीवप्रकाशापेक्षेति स्वप्रकाशत्वं तस्य सिध्यति। मनस्येव च तादृशवृत्तेरुत्पन्नत्वात् "दृश्यते त्वग्र्यया बुद्ध्या" "मनसैवानुद्रष्टव्यमि"त्युक्तम्। अशुद्धस्य च तदभावात् "मनसा न पश्यति" "विज्ञातारमरे केन विजानीयादि"त्यपि सूपपन्नम्। (क्रमशः)

---

# अनुरूपोक्तिः

ऋग्वेदे [ ७।९९।२ ] श्रूयते—

न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः॥

इति । महिम्नस्तोत्रे वर्तते—

महिम्नः पारन्ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ इति ।

---

## प्रतिवचनम्

[ श्रीरामशङ्करव्याकरणाचार्यः ]

......तेकरः स्वर्गो नरकस्तद्विपर्ययः" इत्यादिः श्लोको विष्णुपुराणे [ २।६।४२ ] ब्रह्मपुराणे [ २२।१४ ] चोपलभ्यते । स्कन्दपुराणे [ काशीखण्ड ५८।१०५ ] शिवपुराणे [ २।५।५।२८ ] च दृश्यते—इहैव स्वर्गनरकौ प्राणिनां नान्यतः क्वचित् । सुखं स्वर्गः समाख्यातो दुःखं नरक एव हि ॥ इति ।

---

## अप्पाशास्त्रिस्मारकपारितोषिकम्

[ अनुवादक :—श्रीदुर्गादास-गोस्वामी ]

आगच्छतं 'जिहु'-सुतौ ! 'पिलपा'भिधानाद्
द्वीपात् पराक्रमजुषौ तनुजौ ! 'लिडायाः' ।
'वयाष्टर्' ! पुनः 'पलिडियुस्' ! भवतं प्रसन्ना-
वस्मासु किञ्च किरतं स्मितसौम्यदृष्टिम् ॥१॥
भूमेर्वृहत्परिसरस्य तथाखिलाब्धेः
प्रीत्या युवामुपरि चालयथः सरश्मीन् ।
आवल्गतः किल हयानपि भीमशैत्ये
मृत्यो र्नरान् सततमुद्धरथः सलीलम् ॥२॥
सबद्धपोतनिवहस्य यदोत्प्लवेथे
पृष्ठे वहित्रनिवहानधिरोहथश्च ।
नैराश्यभाजि निशि चानयथः सुदूरा-
ल्लक्ष्यं प्रदीपमिह सन्तमसान्धपोतान् ॥३॥

श्रीमतां दुर्गादासगोस्वामिनामेव पद्यं समीचीनतममिति तेभ्य एव पुरस्कारः प्रदत्तः ।—मञ्जूषासम्पादकः ।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

| January, 1959. | १८८०-शकीय माघस्य १३शा-वर्षस्य पञ्चमी संख्या | Vol. XII No. 5 |
|---|---|---|

## श्रीश्रीभगवद्वन्दनम्

[ वङ्गभाषासुलभस्य गीतस्यानुवादः—श्रीफटिकलालदासकृतः ]

प्रदाय किं त्वं भगवन्नुपास्यो
नास्ते यतो मे किमपि स्वकीयम् ।
यदस्ति सर्वं तव दानमेव
त्वदर्चनं तद् विदधामि केन ॥१॥

देवालयस्त्वं प्रतिमा त्वमेव
त्वमेव पूजाकुसुमानि गीतिः ।
त्वयैव कृत्वा तव पूजनानि
करोमि नित्यं ननु तेऽवमानम् ॥२॥

कोटिः शशाङ्कग्रहभास्कराणा-
मारात्रिकं यस्य करोत्यनन्ते ।
प्रज्वाल्य दीपं तमहं विचिन्त्ये
दीनातिदीनो भुवनस्य मध्ये ॥३॥

कुत्रास्ति वक्त्रं चरणौ च कुत्र
कुत्रास्ति वक्षस्तव वेद्मि नाहम्।
स्थाने विलेप्यः क्व तवैष गन्धो
जानामि तन्नो, कथमर्चयामि ॥४॥

दृष्टं न ते देव कदापि रूपं
मनोऽनुरूपां रचयामि मूर्तिम्।
तां वीक्ष्य नूनं हससि त्वमेव
विरौति चित्तं मम किन्तु दुःखैः ॥५॥

स्वकं हि बद्ध्वा निजमायया त्वं
करोषि लीलां स्वयमेव लोके।
पुनश्च मुक्तं स्वकमेव कर्तु-
रनन्तलीलाः प्रचरन्ति भूयः ॥६॥

अचिन्त्यरूपं तव यत् स्वरूपं
स्वयं न शक्नोमि तदेव बोद्धुम्।
ददासि नो चेदवबोधमस्य
कथं त्वदर्चां विदधामि देव ॥७॥

त्वयैव दत्ता हि तनुर्मनश्च
प्राणास्तथा ये विभवाश्च सर्वे।
गृह्णासि दत्तानि पुनस्त्वमेव
मया प्रदेयं वद ते किमस्मि ॥८॥

विचित्ररूप प्रतिरूपमध्ये
प्रच्छन्नमास्ते तव वै स्वरूपम्।
मनोज्ञमूर्तिं विरचय्य किन्तु
दत्से स्वयं संस्तवमस्य विश्वे ॥९॥

ममान्धनेत्रात् कृपया समन्ता-
दपाकुरु त्वं तिमिरं प्रगाढम्
पाहि प्रभो मां, सदयं च पाहि
का शक्तिरास्ते तव पूजने मे ॥१०॥

---

## गीतारत्नम्

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥९।२७

कर्मभूमावत्रास्माभिः कर्म कर्तव्यमेव, परं फलमनभिसन्धाय कर्तव्यताबुद्ध्या कर्तव्यम्, फलं भगवति समर्पणीयम्। एवं स्वार्थशून्येन चेतसा भगवत्समर्पणबुद्ध्या सर्वात्मना सर्वप्रयत्नेन सर्वशक्त्यानुष्ठीयमानानि कर्माणि सुसम्पादितान्यपि भवन्ति बन्धनकारणान्यपि न भवन्ति। अत एव भगवतोक्तम्—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ इति।

समर्पणप्रकारोऽप्यन्यत्र दर्शितः—

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥ इति।

एतदेव प्रकारान्तरेणोक्तम्—

प्रातरारभ्य सायान्तं सायाह्नात् प्रातरन्ततः।
यत् करोमि जगन्मातस्तदेव तव पूजनम् ॥ इति।

जपो जल्पः शिल्पं सकलमपि मुद्राविरचनम् इत्यादि सौन्दर्यलहर्यामपि।

---

## शकुन्तला

[ कवीन्द्र-रवीन्द्रनाथस्य ]

एवं स्थिते तुलनात्मकं समालोचनमत्र निरवकाशम्। अभ्युपगच्छाम एतद्द्वयमपि। इमे द्वे काव्ये निरन्तरं स्थाप्येते चेत् सादृश्यतोऽपि वैसादृश्यमेवोभयोः सविशेषं स्फुटी-

कुत्रास्ति वक्त्रं चरणौ च कुत्र
कुत्रास्ति वक्षस्तव वेद्मि नाहम् ।
स्थाने विलेप्यः क तवैष गन्धो
जानामि तन्नो, कथमर्चयामि ॥४॥

दृष्टं न ते देव कदापि रूपं
मनोऽनुरूपां रचयामि मूर्तिम् ।
तां वीक्ष्य नूनं हससि त्वमेव
विरौति चित्तं मम किन्तु दुःखैः ॥५॥

स्वकं हि बद्ध्वा निजमायया त्वं
करोषि लीलां स्वयमेव लोके ।
पुनश्च मुक्तं स्वकमेव कर्तु-
रनन्तलीलाः प्रचरन्ति भूयः ॥६॥

अचिन्त्यरूपं तव यत् स्वरूपं
स्वयं न शक्नोमि तदेव बोद्धुम् ।
ददासि नो चेदवबोधमस्य
कथं त्वदर्चां विदधामि देव ॥७॥

त्वयैव दत्ता हि तनुर्मनश्च
प्राणास्तथा ये विभवाश्च सर्वे ।
गृह्णासि दत्तानि पुनस्त्वमेव
मया प्रदेयं वद ते किमस्मि ॥८॥

विचित्ररूप प्रतिरूपमध्ये
प्रच्छन्नमास्ते तव वै स्वरूपम् ।
मनोज्ञमूर्तिं विरचय्य किन्तु
दत्से स्वयं संस्तवमस्य विश्वे ॥९॥

ममान्धनेत्रात् कृपया समन्ता-
दपाकुरु त्वं तिमिरं प्रगाढम्।
पाहि प्रभो मां, सदयं च पाहि
का शक्तिरास्ते तव पूजने मे ॥१०॥

———

## गीतारत्नम्

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥९।२७

कर्मभूमावत्रास्माभिः कर्म कर्तव्यमेव, परं फलमनभिसन्धाय कर्तव्यताबुद्ध्या कर्तव्यम्, फलं भगवति समर्पणीयम्। एवं स्वार्थशून्येन चेतसा भगवत्समर्पणबुद्ध्या सर्वात्मना सर्वप्रयत्नेन सर्वशक्त्यानुष्ठीयमानानि कर्माणि सुसम्पादितान्यपि भवन्ति बन्धनकारणान्यपि न भवन्ति। अत एव भगवतोक्तम्—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥ इति।

समर्पणप्रकारोऽप्यन्यत्र दर्शितः—

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्॥ इति।

एतदेव प्रकारान्तरेणोक्तम्—

प्रातरारभ्य सायान्तं सायाह्नात् प्रातरन्ततः।
यत् करोमि जगन्मातस्तदेव तव पूजनम्॥ इति।

जपो जल्पः शिल्पं सकलमपि मुद्राविरचनम् इत्यादि सौन्दर्यलहर्यामपि।

———

## शकुन्तला

[ कवीन्द्र-रवीन्द्रनाथस्य ]

एवं स्थिते तुलनात्मकं समालोचनमत्र निरवकाशम्। अभ्युपगच्छाम एतद्द्वयमपि इमे द्वे काव्ये निरन्तरं स्थाप्येते चेत् सादृश्यतोऽपि वैसादृश्यमेवोभयोः सविशेषं स्फुटी

भवति। तस्य वसादृश्यस्यालोचनमपि सहायभावं भजेत नाटकद्वयस्य सम्यगवबोधने। अनयैवाशया प्रवर्तिता वयं प्रबन्धस्यास्य विनिर्माणे।

मिरान्दां वयं तरङ्गाघातमुखरस्य शैलबन्धुरस्य द्वीपस्य मध्यभागेऽवलोकितवन्तः परं द्वीपप्रकृत्या साकं तस्या लेशतोऽपि घनिष्ठत्वं नास्ति। तस्या आशैशवधात्र्यास्तस्या भूमेरवरोपणेऽपि क्वापि रोधो नानुभविष्यते। न खलु तत्र मिरान्दा मनुजजनसङ्गमधिगतवतीत्ययमेवाभावस्तस्याश्चरित्रे प्रतिफलितः, परं तत्रत्येन पर्वतपारावारेण तस्या अन्तःकरणस्य कमपि भावात्मकं योगं न वयमुपलभामहे। निर्जनं द्वीपं घटनाप्रसङ्गे न कवेर्वर्णन एव वयं प्रत्यक्षीकुर्मः, परं मिरान्दाद्वारेण नैव पश्यामः। द्वीपोऽयं काव्यस्याख्यानार्थमेवावश्यकः, चरित्रार्थं पुनर्नात्यावश्यकः। शकुन्तलामधिकृत्य पुनरेतद् वक्तुं न शक्यते। शकुन्तला खलु तपोवनस्याङ्गीभूता। तपोवनं दूरतः समुत्सार्यते चेन्न केवलं नाटकस्याख्यानभागो व्याहन्यते, स्वयं शकुन्तलाप्यसम्पूर्णतामुपयाति। न खलु शकुन्तला मिरान्देव स्वतन्त्रा, शकुन्तला किल तस्याः परिवेशेन साकमेकात्मतयानुविद्धा। तस्याः सुमधुरं चरित्रमरण्यस्यच्छायया माधवीलतायाः कुसुममञ्जरीभिश्च परिव्याप्तं च प्रस्फुटितञ्च, पशूनां पक्षिणां चाकृत्रिमेण सौहार्देन साकं सुनिबिडं संयुक्तं च। यां खलु बहिष्प्रकृतिं कालिदासः स्वनाटके समुपवर्णितवान् न खलु तां बहिरेव रक्षितवान् परं शकुन्तलायाश्चरित्रे तामुन्मेषितवान्। अत एवावोचाम दुष्करं खलु शकुन्तलायाः काव्यगतपरिवेष्टनाद् बहिरानयनम्।

फार्दिनान्देन साकं प्रणयव्यतिकर एव मिरान्दायाः प्रधानः परिचयः। किञ्च झटिकावसरे पोतभङ्गविपन्नानां वराकाणां कृते व्याकुलता तस्या व्यथितान्तःकरणस्य करुणां प्रकटितवती। शकुन्तलायाः परिचय इतोऽपि समधिकतरं व्यापकम्। दुष्यन्तश्चे नाविरभविष्यत् तथापि तस्या माधुर्यं विचित्ररूपेण प्रकाशितमभविष्यत्। तस्या हृदयलतिकया चेतनाचेतननिर्विशेषेण सर्वमेव स्नेहस्य ललितबन्धनेन सुष्ठु बद्धम्। सा खलु तपोवनगतांस्तरून् सलिलशीकरैः साकं सोदरस्नेहेनाभिषिक्तवती। सा किल नवकुसुमयौवनां वनज्योत्स्नां स्निग्धदृष्ट्या स्वकोमलान्तःकरणे गृहीतवती। यदा तावच्छकुन्तला तपोवनं प्रविहाय पतिगृहं प्रतिष्ठते तदा पदे पदे साकर्षणमनुभवति पदे पदे च वेदनामनुविन्दति। वनेन साकं मानवस्य वियोग ईदृश-मर्मभेदन-करुणः स्यादिति जागतकाव्येषु केवलमभिज्ञानशकुन्तलस्य चतुर्थाङ्क एव सन्दृश्यते। काव्येऽस्मिन् यथा स्वभावस्य धर्मनियमस्य च मेलनं तथैव मनुजस्य प्रकृतेश्च मेलनमुपलभ्यते। मन्ये विसदृशयोरेवंविधमेलनं भारतवर्षं वर्जयित्वान्यत्र क्वापि न सम्भवतीति।

टेम्पेष्टनाटके बहिष्प्रकृतिरेरियेलशरीरे मानवाकारं मानुषं रूपं परिगृहीतवती.

परं तथापि सा मानुषाणां स्वजनभावाद् दूर एवावतिष्ठते, मानुषेण साकं तस्या अनिच्छ-भृत्यसम्बन्धः। स खलु स्वातन्त्र्यं वाञ्छति परं मानवशक्त्या निपीडित आबद्धश्च दासजनवत् कर्म करोति। तस्य हृदये स्नेहो नास्ति, नयने सलिलं नास्ति। मिरान्दाया नारीहृदयमपि तस्मिन् स्नेहं न प्रततान। द्वीपतः प्रस्थानावसरे प्रस्पेरोमिरान्दाभ्याम् एरियेलस्य प्रस्थानसम्भाषणं न जातम्। टेम्पेष्टे पीडनं शासनं दमनम्, शकुन्तलायां प्रीतिः शान्ति मैत्री। टेम्पेष्टे प्रकृतिर्मानुषरूपं परिगृह्णत्यपि तेन साकं हार्देन सम्बद्धेन न बद्धा। शकुन्तलायां वृक्षव्रततीमृगविहगाः स्वं स्वं भावं रक्षन्तोऽपि मानुषेण साकं सुमधुरेण स्वजनभावेन मेलनमुपयाताः। (क्रमशः)

---

# आभाणकमाला

Constant dripping wears away a stone.

Greek. Petran koilainei hranis hudatos endelekheiēi.

निरन्तरेण बिन्दुपातेन प्रस्तरोऽपि क्षीयते।

Latin. Lapides excavant aquae.

सलिलानि क्षपयन्ति प्रस्तरान्। जलबिन्दुनिपातेन क्रमशः क्षीयते दृषद्।

"*Gutta cavat lapidem non vi sed saepe cadendo;* The drop of rain maketh a hole in the stone, not by violence, but by oft falling."

वृष्टिबिन्दुः शिलायां छिद्रमुत्पादयति, न खलु बलात्कारेण परं निरन्तरनिपातेन।

(व) दोष कारो नय गो मा,
　　आमि स्वखात सलिले डुबे मरि श्यामा।
　　नात्रापरः कोऽप्यपराध्यति मातः।
　　　　अहं खलु स्वखातसलिले निमज्ज्य म्रिये श्यामे।

German. Ich bin selbst an meinen Unglück schuldig.
अहमेव स्वयं मम विपदां मूलम्।

Latin. Patior telis vulnera facta meis. OVID.
My wounds are from my own weapons.

स्वैरेवास्त्रैः कृतानि मे क्षतानि।

Greek. Malista lupoūs' hai phanōs authairetoi. SOPHOCLES.
The worst to bear are self-inflicted wounds.
स्वकृतानि क्षतानि सुतरां दुःसहानि।

---

भवति। तस्य वसादृश्यस्यालोचनमपि सहायभावं भजेत नाटकद्वयस्य सम्यगवबोधने। अनयैवाशया प्रवर्तिता वयं प्रबन्धस्यास्य विनिर्माणे।

मिरान्दां वयं तरङ्गाघातमुखरस्य शैलबन्धुरस्य द्वीपस्य मध्यभागेऽवलोकितवन्तः परं द्वीपप्रकृत्या साकं तस्या लेशतोऽपि घनिष्ठत्वं नास्ति। तस्या आशैशवधात्र्यास्तस्या भूमेरवरोपणेऽपि क्वापि रोधो नानुभविष्यते। न खलु तत्र मिरान्दा मनुजजनसङ्गमधिगतवतीत्ययमेवाभावस्तस्याश्चरित्रे प्रतिफलितः, परं तत्रत्येन पर्वतपारावारेण तस्या अन्तःकरणस्य कमपि भावात्मकं योगं न वयमुपलभामहे। निर्जनं द्वीपं घटनाप्रसङ्गे न कवेर्वर्णन एव वयं प्रत्यक्षीकुर्मः, परं मिरान्दाद्वारेण नैव पश्यामः। द्वीपोऽयं काव्यस्याख्यानार्थमेवावश्यकः, चरित्रार्थं पुनर्नात्यावश्यकः। शकुन्तलामधिकृत्य पुनरेतद् वक्तुं न शक्यते। शकुन्तला खलु तपोवनस्याङ्गीभूता। तपोवनं दूरतः समुत्सार्यते चेन्न केवलं नाटकस्याख्यानभागो व्याहन्यते, स्वयं शकुन्तलाप्यसम्पूर्णतामुपयाति। न खलु शकुन्तला मिरान्देव स्वतन्त्रा, शकुन्तला किल तस्याः परिवेशेन साकमेकात्मतयानुविद्धा। तस्याः सुमधुरं चरित्रमरण्यस्यच्छायया माधवीलतायाः कुसुममञ्जरीभिश्च परिव्याप्तं च प्रस्फुटितञ्च, पशूनां पक्षिणां चाकृत्रिमेण सौहार्द्येन साकं सुनिबिडं संयुक्तं च। यां खलु बहिष्प्रकृतिं कालिदासः स्वनाटके समुपवर्णितवान् न खलु तां बहिरेव रक्षितवान् परं शकुन्तलायाश्चरित्रे तामुन्मेषितवान्। अत एवावोचाम दुष्करं खलु शकुन्तलायाः काव्यगतपरिवेष्टनाद् बहिरानयनम्।

फार्दिनान्देन साकं प्रणयव्यतिकर एव मिरान्दायाः प्रधानः परिचयः। किञ्च झटिकावसरे पोतभङ्गविपन्नानां वराकाणां कृते व्याकुलता तस्या व्यथितान्तःकरणस्य करुणां प्रकटितवती। शकुन्तलायाः परिचय इतोऽपि समधिकतरं व्यापकम्। दुष्यन्तश्चेन्नाविरभविष्यत् तथापि तस्या माधुर्यं विचित्ररूपेण प्रकाशितमभविष्यत्। तस्या हृदयलतिकया चेतनाचेतननिर्विशेषेण सर्वमेव स्नेहस्य ललितबन्धनेन सुष्ठु बद्धम्। सा खलु तपोवनगतांस्तरून् सलिलशीकरैः साकं सोदरस्नेहेनाभिषिक्तवती। सा किल नवकुसुमयौवनां वनज्योत्स्नां स्निग्धदृष्ट्या स्वकोमलान्तःकरणे गृहीतवती। यदा तावच्छकुन्तला तपोवनं प्रविहाय पतिगृहं प्रतिष्ठते तदा पदे पदे साकर्षणमनुभवति पदे पदे च वेदनामनुविन्दति। वनेन साकं मानवस्य वियोग ईदृश-मर्मभेदन-करुणः स्यादिति जागतकाव्येषु केवलमभिज्ञानशकुन्तलस्य चतुर्थाङ्क एव सन्दृश्यते। काव्येऽस्मिन् यथा स्वभावस्य धर्मनियमस्य च मेलनं तथैव मनुजस्य प्रकृतेश्च मेलनमुपलभ्यते। मन्ये विसदृशयोरेवंविधमेलनं भारतवर्षं वर्जयित्वान्यत्र क्वापि न सम्भवतीति।

टेम्पेष्टनाटके बहिष्प्रकृतिरेरियेलशरीरे मानवाकारं मानुषं रूपं परिगृहीतवती,

परं तथापि सा मानुषाणां स्वजनभावाद् दूर एवावतिष्ठते, मानुषेण साकं तस्या अनिच्छ भृत्यसम्बन्धः। स खलु स्वातन्त्र्यं वाञ्छति परं मानवशक्त्या निपीडित आबद्धश्च दासजनवत् कर्म करोति। तस्य हृदये स्नेहो नास्ति, नयने सलिलं नास्ति। मिरान्दाया नारीहृदयमपि तस्मिन् स्नेहं न प्रततान। द्वीपतः प्रस्थानावसरे प्रस्पेरोमिरान्दाभ्याम् एरियेलस्य प्रस्थानसम्भाषणं न जातम्। टेम्पेष्टे पीडनं शासनं दमनम्, शकुन्तलायां प्रीतिः शान्ति मैत्री। टेम्पेष्टे प्रकृतिर्मानुषरूपं परिगृह्णत्यपि तेन साकं हार्देन सम्बद्धेन न बद्धा। शकुन्तलायां वृक्षव्रततीमृगविहगाः स्वं स्वं भावं रक्षन्तोऽपि मानुषेण साकं सुमधुरेण स्वजनभावेन मेलनमुपयाताः। (क्रमशः)

---

## आभाणकमाला

Constant dripping wears away a stone.

Greek. Petran koilainei hranis hudatos endelekheiēi.

निरन्तरेण बिन्दुपातेन प्रस्तरोऽपि क्षीयते।

Latin. Lapides excavant aquae.

सलिलानि क्षपयन्ति प्रस्तरान्। जलबिन्दुनिपातेन क्रमशः क्षीयते दृषद्।

"*Gutta cavat lapidem non vi sed saepe cadendo ;* The drop of rain maketh a hole in the stone, not by violence, but by oft falling."

वृष्टिबिन्दुः शिलायां छिद्रमुत्पादयति, न खलु बलात्कारेण परं निरन्तरनिपातेन।

(व) दोष कारो नय गो मा,

आमि स्वखात सलिले डुवे मरि श्यामा।

नात्रापरः कोऽप्यपराध्यति मातः।

अहं खलु स्वखातसलिले निमज्ज्य म्रिये श्यामे।

German. Ich bin selbst an meinen Unglück schuldig.

अहमेव स्वयं मम विपदां मूलम्।

Latin. Patior telis vulnera facta meis. OVID.
My wounds are from my own weapons.

स्वैरेवास्त्रैः कृतानि मे क्षतानि।

Greek. Malista lupoūs' hai phanōs authairetoi. SOPHOCLES.
The worst to bear are self-inflicted wounds.

स्वकृतानि क्षतानि सुतरां दुःसहानि।

---

# कालिदासस्याविर्भावकालः

[ उडुपि-वेङ्कट-कृष्णरायः ]

...यिन्यां प्रभूतेनोत्साहेन कालिदासमहोत्सवः साम्प्रतं निर्वर्तितः। अस्मिन् सन्दर्भेऽजरामरस्य कविश्रेष्ठस्य सन्देशसारोऽस्माकं मनसि बद्धमूलो यथा भवेत्तथा प्रयतितव्यमिति कृत्वा यत्किञ्चिदिव विमृश्यते। अस्मिंश्च विषये कालविवेचनमेव विशेषेणोपकरोतीति कृत्वा किञ्चिद् विचारः क्रियते।

कदा वायं कविश्रेष्ठ इमां भुवमलञ्चकारेति विषयेऽधुना मतद्वयं पुरस्क्रियते। द्वितीयचन्द्रगुप्त-(380-413 AD)-चक्रवर्तिन आस्थानकविरयमासीदिति पाश्चात्यानां Vincent Smith-Keith-प्रभृतीनामाशयः। यदि मालविकाग्निमित्रेऽश्वमेधप्रस्तावः क्रियते तर्हि सांकेतिकोऽयं चन्द्रगुप्तनिर्वर्तिताश्वमेधस्य—इत्येव Keith-महाशयाः स्वीयं निर्णयं समीचीनं कारणमनुपन्यस्यैव पुरस्कुर्वन्ति। परन्तु नाटकस्थं भरतवाक्यं तत्रत्यां सति सप्तमीं चाद्रियमाणा वयं शुङ्गराजस्याग्निमित्रस्यैव सभामलञ्चकार कविप्रवर इत्यभिप्रेमः। नाटकेऽस्मिन् नायकः सर्वथा सर्वत्र भाग्यवानिति वर्ण्यते, कविसार्वभौमाश्रयदातृत्वेनापि भाग्यवत्त्वमस्य विशेषतः समर्थयितुं शक्यत इत्येव वक्तुं सुशकम्। कविरयं न केवल भारतीयः, किन्तु पृथिव्या अपि मानदण्ड इव विराजति। कवीश्वर इति शब्दोऽस्मिन्यथार्थाक्षरः। रोदसी व्याप्नोत्यस्य कीर्तिः।

अयं कवीश्वरो ब्रह्मसूत्रप्रणेतुर्बादरायणस्य मार्गमनुसन्दधानस्तादृशमेव साहित्याकाशे ध्रुवमचलं च स्थानं लेभे। विक्रमोर्वशीये नान्दीश्लोके प्रतिपङ्क्ति ब्रह्मसूत्रान्तर्गतानां चतुर्णामध्यायानां सारं पश्यामः। भगवद्गीतास्थपदानि तत्र तत्र स्वीयेषु श्लोकेषु योजितानि। एक एव दृष्टान्तोऽत्र पर्याप्त इति कृत्वा मेघदूते 'स्थिरगणपदप्राप्तये श्रद्दधानाः' इत्यत्र शानजन्तं श्रद्दधानपदं गीतास्थं पुरस्कर्तुमुत्सहामहे। इत्थमेव "सहजं कर्म कौन्तेय सदोषमपि न त्यजेदि"त्यस्य सर्वथा छायानुकरणं "सहजं किल यद्विनिन्दितं न खलु तत् कर्म विवर्जनीयमि"ति धीवरमुखे षष्ठाङ्कप्रवेशके पठामः। विष्णुसहस्रनामस्वनुसृतं मार्गमनुरुध्य कुमारसम्भवे द्वितीयसर्गे "द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरु"रित्यादिकां ब्रह्मणः स्तुतिं पश्यामः। गीतायां यदि स्थितप्रज्ञस्य प्रशस्तिं पठामस्तर्हि रघुवंशे स्थितधी"र्न नवेतरः प्रभुरा परमात्मदर्शनादि"ति कविवर्येण परिवर्तितं पश्यामः। इत्थमेव "तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु त्वमपि विततयज्ञः स्वर्गिणं प्रणीयस्व", "लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोरि"त्यादिषु बहुषु स्थलेषु गीताऋणं कालिदासस्य स्फुटमेव प्रतीयत इति दिङ्मात्रं सूचयित्वा विरम्यते।

अयं कविरश्वघोषादर्वाचीनो वा प्राक्तनो वेति विषयेऽपि द्विविधोऽभिप्रायः पुर-

स्क्रियते। Cowell-महाशयं पाश्चात्त्यं बौद्धविज्ञानविमर्शकमनुसरन्तो Vincent Smith-Keith-प्रभृतयः कालिदासमश्वघोषादनन्तरकालीनमेव मन्यन्ते। यदा चायमश्वघोषः कनिष्कचक्रवर्तिनः सभामलञ्चकारेति चारित्रिकैर्निर्णीयते तदा कालिदासोऽस्मादर्वाचीनो गुप्तकालीन इति सुतरां सिद्धो भवत्येव। परन्त्विदं पौर्वापर्यमेव संशयग्रस्तं, कालिदास एव प्राक्तनो भवेदित्येव सुवचं प्रतीयते। Keith-पण्डितस्य वाक्यमेव प्रमाणत्वेन निर्दिशामोऽत्र। 'The history of the Epic after Kālidāsa is one of decline in taste and growing artificiality of form'—अर्थात् कालिदासादनन्तरं महाकाव्यानि प्रतिभावैकल्यं शैलीशैथिल्यं कृतकत्वं च पदे पदे प्रादुष्कुर्वन्ति। महाकाव्यलक्षणावसरे दण्डिनाष्टादशवस्तुवर्णनानि साङ्केतिकानीति प्रतिपाद्य, न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति। यद्युपात्तेषु संपत्तिराराधयति तद्विदः॥ इति यद्यपि सूच्यते, तथापि भारविमाघाद्यो यथाकथञ्चिदपि नगरार्णवाद्यानां वर्णनं संयोजनीयमेवेति कृत्वा दीर्घदीर्घाणि वर्णनानि शताधिकैरपि श्लोकैः संयोजयन्ति। अत्राश्वघोषविषये बाढं शैलीशैथिल्यं प्रतिभावैकल्यं वा न प्रदर्शयितुं प्रभवामस्तथापि वैज्ञानिकानां शास्त्रतत्त्वानां विषये स्वीयं पाण्डित्यं प्रदर्शयितुमस्य महानाग्रहोऽस्तीति स्पष्टं पश्यामः। धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत्, अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः, पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ( शत्रुघ्नसेना—रघु १५ ) इत्येवोक्त्वा पाणिनीयान् विषयान् पारिभाषिकभूतान् नोपस्थापयत्येव कविवरेण्यः। परन्त्वश्वघोषो भट्टिकाव्य इवोपसर्गप्रयुक्तं धातूनां पदव्यत्यासमर्थव्यत्यासं चाष्टाध्यायीक्रमेणैवोदाहरतीति स्पष्टम्। यथा—शमेऽभिरेमे विरराम पापात्, भेजे शमं संविबभाज साधून्, धृत्येन्द्रियाश्वांश्चपलान्विजिग्ये, बन्धूंश्च पौरांश्च गुणै जिगाय इत्यादिकान् यदा पठामस्तदा भट्टिकाव्यमेव स्मरामः सुस्पष्टम्। इत्थमेव लुङ् प्रयोगः—क्लिष्टे णिचि, कर्मणि च—सौन्दरनन्दकाव्ये द्वितीयसर्गे चतुश्चत्वारिंशच्छ्लोकेषु पञ्चाशद्वारमुपयुज्यते। कर्मणि लुङ् चत्वारिंशत्तमाच्छ्लोकादारभ्य पञ्चसु श्लोकेषु दशवारं दृश्यते, णिचि लुङ् च षड्विंशतिवारं २७-३९ श्लोकपर्यन्तमुपलभ्यते। मासीषे चन्द्रमा इवेति तत्रैव चतुर्दशे श्लोके वेदेषु प्रसिद्धमाश्विनमासस्यैषाख्यामेव प्रयुक्तां पश्यामः। मालविकाग्निमित्रीयं परप्रत्ययनेयबुद्धिपदं तथैव पञ्चमे सर्गे ( बुद्धचरिते ) सप्तदशे श्लोके पठामः। अपूर्वाणिच्छन्दांसि कालिदासाज्ज्ञातानि भारवेः किरातार्जुनीयगतां रीतिमेव स्मारयन्ति। यथा Keith महाशयेनैव निर्दिश्यत उपस्थितप्ररुचितं छन्दः। प्रासाश्च कालिदासीया आदिकाव्य इवातिसरला मृदुला यथा—मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेरित्यादयः। यमकसर्गे ( रघुवंशनवमसर्गे ) ऽपि-

बुद्धचरितस्थम् "अपारपारसंसारपारं प्रेप्सुरपारयत्" १२।९६ इव श्रतिकटु यमकं नैव पश्यामः। तथैव बुद्धचरित २।४२तमश्लोकसदृशीं प्रहेलिकाम्—

एकं विनिन्ये स जुगोप सप्त, सप्तैव तत्याज ररक्ष पञ्च।
प्राप त्रिवर्गं बुबुधे त्रिवर्गं जज्ञे त्रिवर्गं प्रजहौ द्विवर्गम् ॥

कालिदासे नैव लभामहे। रूपकमयो बुद्धचरितप्रथमसर्गे ७४तम श्लोकः। यथा—

तृष्णार्गलं मोहतमःकपाटं द्वारं प्रजानामपयानहेतोः।
विपाटयिष्यत्ययमुत्तमेन सद्धर्मताडेन दुरासदेन ॥ इति।

ईदृशोऽपि बहु विमृश्यापि कालिदासकाव्येषु न लभ्यते, तादृशाश्च बहवः सन्त्यश्वघोषे। अपथेनापि गत्वा प्रासः प्रयत्नेन निवेश्यतेऽश्वघोषेन चतुर्थीबहुवचनं बहुशः प्रयुज्य—

तृष्णादितेभ्यो विषयावृतेभ्यः संसारकान्तारपथास्थितेभ्यः।
आख्यास्यति ह्येष विमोक्षमार्गं मार्गप्रनष्टेभ्य इवाध्वगेभ्यः ॥ इति।

यदि च यथा Cowell-महाशयेन प्राचीनार्थेषूपयुक्ताः कालिदासेऽदृष्टा लेखर्षभ-( =इन्द्र )-कृशन ( हिरण्यं )-गन्त्री ( शकटम् )-प्रभृतयः शब्दा अश्वघोषे उपलभ्यन्ते, तेषामन्यथैव निर्वाहो वर्णनीय एवापतति। कालिदासापेक्षयाप्यात्मनो महत्त्वं प्रकटयितुमेव तादृशानप्रयुक्तान् शब्दान् प्रयुयुजे नान्यथेत्येवाभ्युपगन्तव्यं भवति।

कालिदासकालेऽर्हच्छब्दो यौगिकार्थ एव प्रयुक्तो दृश्यते। यथा,

अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे—रघुवंशे १।
त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः—शाकुन्तले ५।

इत्यादिषु स्थलेषु। परन्त्वश्वघोषकालेऽयं शब्दो बुद्धपर्यायत्वेन परिगणित आसीत्। आरण्यकपदं च कालिदासेन द्विः [?] प्रयुज्यते—

अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः—शाकुन्तलप्रथमाङ्कान्ते।
सर्वः सगन्धेषु विश्वसिति, द्वावप्यत्रारण्यकौ—शाकुन्तलं ५।

उभयोरपि प्रयोगयोः वेदानामन्तिमभागद्योतकोऽर्थो न तदानीं प्रक्लृप्त इत्येव निर्णेतव्यमिति भाति।

माधवेनाभिमतेन सख्या रत्या चैवाभिप्रयातः कामः कुमारकाव्ये। किन्तु कामापरनामकं मारं तस्यात्मजाः कन्याश्च, प्रबलं ससैन्यं च, नानाश्रयाश्चानुचराः शूलद्रुमप्रासगदासिहस्ताः ( बुद्धचरित १३।१८-२७ श्लोकेषु ) परीयुरिति पठामः। अत्र च कारणं सुस्पष्टमेव। अन्यया रीत्यापि क्रिस्तोरपि पूर्वस्मिन् कालेऽयं कविवरेण्य आसीदिति निश्चतुं प्रभवामः। षड् दर्शनानि तस्मिन् काले शैशवावस्थायामेवासन्। दर्शनमिति

शब्दोऽपि तदानीं सामान्येनाभिप्रायवाचक एवाभवदिति वक्तुं पारयामः। द्विरिमं शब्दं प्रयुङ्क्ते कालिदासः—मालविका-प्रथमेऽङ्के मन्त्रिपरिषदोऽप्येवमेव दर्शनम् इति, शाकुन्तले तृतीये—राजा वदति अनसूयामप्यनुगतो मदीयस्तर्कः, न हि स्वाभिप्रायेण मे दर्शनमिति च। प्रथमचन्द्रगुप्तसचिवोऽर्थशास्त्रप्रणेता कौटिल्योऽपीदृशमेव कौटिल्य-दर्शनमिति स्वमतं मण्डयति।

मेघदूते चायं दिक्षु प्रथितविदिशालक्षणां राजधानीं वर्णयति। इयं विदिशानगरी शुङ्गराजस्याग्निमित्रस्यैव काले प्रथिता राजधान्यभूदिति चरित्रविमर्शकानां प्रत्यक्षम्। मालविकाग्निमित्रेऽग्निमित्रो विदिशेश्वर इति प्रसिद्धः। इदं च विशेषतोऽवधारणीय-मस्माभिर्यत्कालिदासस्य गद्यशैली महाभाष्यशैल्या संवादं भजत इति। अस्त्येतदन्य-समाधिभीरुत्वं देवानामित्येकमेवात्र वाक्यमुदाहरणतयोपन्यस्यते। महाभाष्यकारस्य "चतुष्टयी शब्दानां प्रवृत्तिरि"ति वाक्यं छन्दोबद्धं कविवरेण कुमारसंभवे द्वितीये सर्गे "प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी"रूपेण परिणतं दृश्यते। तथा चाभ्यूहितुं शक्यते यथा पतञ्जलिमहर्षेः समकालीन स्तरुणोऽयं कविः स्यादिति। इह पुष्यमित्रं याजयाम इति वदन्नसौ पुष्यमित्रसमानकालीन इत्यभ्यूह्यते, कविरयं तु पुत्रस्याग्निमित्रस्य सभायामादृतः, प्रायो महाभाष्यकारस्य वार्धके तरुणो भूत्वा तस्योपन्यासादिकानपि शुश्रावेति तर्कस्यावसरोऽप्यस्ति।

गाः कोटिशः स्पर्शयता घटोध्नीः, विश्राणनाच्चान्यपयस्विनीनाम् इत्यादिषु स्थलेषु धर्मशास्त्राभिमतानां शब्दानां प्रयोगेणायं कविर्मनुयाज्ञवल्क्यादीनां समकालीनः स्यादित्य-भ्यूहितुं शक्नुमः। कालिदासचित्रितसमाजे कलिवर्ज्यानां भिन्नभिन्नवर्णजातानामनु-लोमरीत्या विवाहः संमत एवासीदिति ज्ञायते। परन्तु प्रतिलोमविवाहो निषिद्धो यथा मनुस्तादृशं सांकर्यं न्यषेधत्। न कश्चिद्वर्णानामपथमपकृष्टोऽप्यभजदिति मनुधर्मशास्त्रा-भिमतः पन्था एव सवरादृत आसीत्। दिलीपस्य प्रजाश्च मनोर्वर्त्मनो रेखामात्रमपि न व्यतीयुरित्यपि पठामः। आत्मनो वधमाहृतेति चोरस्यापि वधदण्डं मनुनिर्दिष्ट-मेवाभिजानाति। व्यवहाराध्याये याज्ञवल्क्येन विंशतितमे श्लोके—

निह्नुते लिखितं नैकमेकदेशे विभावितः।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः॥

इति यदुक्तं तदेव किञ्चिदिव परिवर्त्य कालिदासः पुरूरवसो मुखे निवेशयति—

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता।
विभावितैकदेशेन देयं यदभियुज्यते॥ ४।१७

एवमेव गर्भं पित्र्यं रिक्थमर्हतीति यदा शाकुन्तले षष्ठेऽङ्के राज्ञो निर्णयं पठामः

तदा मनुवचनं ९।१६३ एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरिति स्मृतिपथमारोहति। बान्धवत्वं च पुनः समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेव इति याज्ञवल्क्यटीकाकृतोक्तमेव—त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानामित्यत्र, महीधरः पावित एष सान्वय इत्यत्र,विशेषतश्च विवक्षितमिति प्रतिभाति। तदानीन्तने काले दुहितुरपि पिण्डप्रदानादियोग्यता सिद्धैवासीदिति कलिवर्ज्येषु बहोः कालादनन्तरमेव दुहितुर्योग्यता लुप्ताभवदिति ज्ञातुमस्त्यवसर इति भाति। ततश्च सुस्पष्टं कुमारसंभवे प्रतीयते, यतो हिमवतः पुत्रो मैनाकः समुद्रेण साकं बद्धसख्यः कुलिशक्षतानामवेदनाज्ञो नागवधूनां सहवासेन पुत्रकृत्यं सर्वथा विसस्मार। श्लोकेनैकेनैवास्य चरितस्य चरितार्थतासीदिति कविना सर्वथोपेक्षितः सः। महीधरस्य कुलं सान्वयं पार्वत्यैव पावितमभूत्, सैवाभिजनं नाम लेभे। तयैव गृहमेधिफलं प्राप्तं हिमवतेत्यास्तां विस्तरः।

आहत्य च मनुयाज्ञवल्क्यपतञ्जलिमहर्षीणामतिसन्निहिते कालेऽयं महर्षिकल्पो भुवमलञ्चकारेति निश्चेतुमवसरो दृश्यत इत्युक्त्वा विरम्यते। मनुयाज्ञवल्क्यौ प्रसिद्धौ धर्मशास्त्रकारौ क्रिस्तोः पूर्वं प्रथमे द्वितीये वा शतके सम्बभूवतुरिति धर्मशास्त्रेतिहासज्ञैः काणे-महाशयैरध्यवसीयत इति कृत्वा शुङ्गराजस्याग्निमित्रस्य सभायां प्रतिष्ठितः कालिदास आसीदित्यभूह्यत इति शम्।

---

# छन्दोभङ्गविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आचार्यदण्डिनः काव्यादर्शे दृश्यते –

वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः।
यत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः॥३

कामेन बाणा निशिता विमुक्ता मृगेक्षणास्वित्ययथा गुरुत्वम्
स्मरस्य बाणा निशिताः पतन्ति वामेक्षणास्वित्ययथा लघुत्वम्॥१५८॥

कामेन बाणा निशिता विमुक्ता मृगेक्षणासु इति श्लोकार्धत्वेन स्वीक्रियते चेत् तर्हि श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥ इति नियमस्य भङ्गः, णा इति पञ्चमाक्षरस्य गुरुत्वात्, 'नि' इति षष्ठाक्षरस्य लघुत्वात्, प्रथमे पादे 'शि' इति सप्तमाक्षरस्य च लघुत्वात्। एवञ्च "कामेन बाणा निशिता विमुक्ता मृगेक्षणासु" इत्येव अयथागुरुत्वायथालघुत्वयोरुभयोरेवोदाहरणं स्यान्न पुनरयथागुरुत्वस्यैव केवलस्य। स्मरस्य बाणेति द्वितीयार्धमवकरप्रायं स्यात्।

कामेन बाणा इत्यत्रेन्द्रवज्रा चेदभ्युपगम्यते, स्मरस्य बाणा इत्यत्र चोपेन्द्रवज्रा च स्वीक्रियते तर्हि कस्यापि छन्दोदोषस्य नावकाशः। न च कामेन बाणा इत्यत्रो-पेन्द्रवज्रायां प्रथमाक्षरस्य गुरुत्वं दोषमावहति, स्मरस्य बाणा इत्यत्र चेन्द्रवज्रायां प्रथमाक्षरस्य लघुत्वमपि दोषायेति वक्तव्यम्, उभयत्राप्युपजातेरेवाभीष्टत्वात्, उपजातिच्छन्दसश्च सर्वेषां सम्मतत्वात्, दण्ड्याचार्येणैव काव्यादर्शे प्रभावत इत्यादिषु श्लोकेषु [ ३।६३-६५ ] प्रयुक्तत्वाच्च।

अत एव पाठान्तरमत्र मृग्यम्। तच्च दाक्षिणात्येषु ग्रन्थेषूपलभ्यते—

कामेन बाणा निशाता विमुक्ता मृगेक्षणास्वित्ययथागुरुत्वम्।
मदनबाणा निशिताः पतन्ति वामेक्षणास्वित्ययथालघुत्वम्॥

इति। उभयत्राप्युपजातिश्छन्दः। प्रथमार्धे निशाता इत्यत्र शा इत्यस्य गुरुत्वं छन्दोभङ्ग-मावहति, द्वितीयार्धे च 'मदन' इत्यत्र द इत्यस्य लघुत्वं छन्दो विहन्ति। प्रथमार्धे निशिता इति पाठे कोऽपि दोषो नावतरति। शाच्छोरन्यतरस्यामिति सूत्रेण निशित-निशातशब्द-योरुभयोरेव साधुत्वं बोद्धव्यम्। द्वितीयार्धे च 'मदन' इत्यत्र 'स्मरस्य' इति पाठे सर्वं सुस्थं स्यात्।

नन्वेवं सति प्रथमार्धे मृगेक्षणास्विति द्वितीयार्धे च वामेक्षणास्विति वैषम्यं सर्वथा निरर्थकं स्यादिति चेत्, उच्यते—उपजातिच्छन्दसि प्रथमाक्षरगतं गुरुलाघवं न दोषायेति बोधनाय तथा कृतमिति।

---

[ कवीन्द्ररवीन्द्रनाथस्य ]

# देवतानिर्वासनम् ( 'देवता-विदाय' )

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

देवालये कश्चन वृद्धभक्तो जपन् दिनान्ते स्थित एव याव.।
छिन्नाम्बरो धूलिमलीमसाङ्गो जीर्णो दरिद्रः प्रविवेश तत्र॥१॥
चख्यौ स भक्तं "मम नास्ति गेहमिहाश्रयं तत् सदयं प्रयच्छ।"
भक्तः सवेगं तमुवाच "रे रे दूरं प्रयाहि ह्यपवित्रगात्र!" ॥२॥
'गच्छामि तर्ही'ति वदन्निमेषाज्जग्राह भिक्षुर्निजदेवमूर्तिम्।
दृष्ट्वा तथा तं समुवाच भक्तः "प्रभो किमर्थं छलना तवैषा" ॥३॥
उवाच देवो "दवितस्त्वयाहं दरिद्ररूपेण चरामि विश्वम्।
ददाति गेहं गृहवञ्चिताय य एव तिष्ठामि तदन्तिकेऽहम्" ॥४॥

---

# परीतन्महाकण्ठिका*

[ श्रीकृष्णस्वामी अय्यर ]

"गमः क्वौ" [ ६।४।४० ] इति सूत्रे भाष्यम्—गमादीनामिति वक्तव्यम्। इहापि यथा स्यात् परीतन्महाकण्ठिका। इति। 'परीतदिति। तनोतेः क्विपि नलोपे कृते तुकि नहिवृतिवृषीति पूर्वपदस्य दीर्घ' इति कैयटः।

तुग्विधायकस्य सूत्रस्य [६।१।७१] भाष्येऽपि परीतच्छब्दो विद्यते। एवं यद्यप्यत्रत्यः परीतच्छब्दः पूर्ववर्ती तथापि नात्रास्य शब्दस्यार्थः पठितः। यतोऽत्रत्यं भाष्यं नास्य शब्दस्य व्युत्पत्तिप्रदर्शनपरं परं तु तुकि परादौ दोषप्रदर्शनपरम्। तथाहि—

'इट्प्रतिषेधश्च वक्तव्यः। परीतत् सतुक्कस्य वलादिलक्षण इट् प्रसज्येत।'

'गमः क्वौ' [ ६।४।४० ] इत्युत्तरत्र शब्दस्याऽर्थः पठ्यते यतो ह्यत्र भाष्यं शब्दव्युत्पत्तिपरम्। अर्थप्रत्यायनाय च शब्दप्रयोगः। अतः शब्दव्युत्पादनेन सह तस्यार्थोऽपि बोधनीय इति द्योतयन्महता कण्ठेन पठत्याचार्यः—'गमादीनामिति वक्तव्यम्। इहापि यथा स्यात् परीतन्महाकण्ठिका।'

* * *

---

*"परीततसहकुण्डिकायाः" इति पाठान्तरम्। [ महाभाष्ये ६।४।४० ]

<u>महाकण्ठिका</u>। तु० "विष्णो रराटमसि" [ कृष्णयजुः तै० सं० १।२।१३ ]

तत्र सायणभाष्यम्—"यज्ञपुरुषस्य हविर्धानाख्यं मण्डपं शिरस्तत्साम्यं मन्त्रैरुच्यते इत्याह—

"शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णो रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतम्।" [ सं० का० ६ प्र० २ अ० ९ ] इति।

'एका रराटी, एकं छदिः, द्वौ रराट्यन्ताविति यावन्तो मण्डपस्य प्रकारा एतावद्धैतावत्प्रकारं शिरो विश्वकर्मणा विशेषेण स्यूतम्। शिरस्याच्छादिका त्वगेवच्छदिः स्थापनीया।'

( हविर्धानमण्डपस्य ) पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते, तां दर्भमालां तद्बन्धबाधारं तिर्यग्वंशं वा संबोध्य पुरुषललाटत्वेनोपचरितुं विष्णो रराटमसीत्युच्यते ॥

| | | | |
|---|---|---|---|
| म | ⊳ | स | महाकण्ठिका एवं |
| हा | ⊳ | ह | सहकुण्डिकायाः |
| क | ⊳ | कु | इति रूपमापद्येत |
| ण्ठि | ⊳ | ण्डि | जामातृशोधनेन। |
| का | ⊳ | कायाः | |

"कल्पः—अथैनं वाससा परितनोति वनेषु व्यन्तरिक्षं ततान... . ..." इति। [ सायणः, तै० सं० १।२।८ ]

अत्र वासः परीतत् इति ग्रहीतुं शक्यते। उपानहौ यथा पादावावृणुतस्तथैव वासः शरीरं परितनोति।

"परि द्यावापृथिवी सद्य इत्वा
परि लोकान्परि दिशः परि स्वः।
ऋतस्य तन्तुं विततं विचृत्य
तदपश्यत्तदभवत्तदासीत्॥" [ शुक्लयजुः ( वाज० ) ३२।१२ ]

परिज्मानम् ( ऋक्० १।२०।३ ) परितो गन्तारम्।

परिज्मानम् ( ऋक्० ८।७२।१० ) परितो व्याप्तम्। ( सायणः )

"स एतमेव पुरुषं ब्रह्म ततममपश्यत्।" [ ऐ० आ० २।४।३ ]। एकस्तकारो लुप्तः। अतिशयेन ततं विस्तृतं तततमम् इति सायणः।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥

श्वेताश्वतर [ ६।२० ]

'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।' ( शुक्लयजुः ( वाज-) ३२।३ ] इति याजुषे सिद्धान्ते देदीप्यमानेऽपि यथा गीतायां विभूतिविश्वरूपदर्शनयोगौ पदमधिगतवन्तौ तथैव पर्युपसृष्टतनुधातोः कृदन्ततया प्रयोगोऽसन्नपि वेदे तदुत्तर-कालिकीषु पौरुषेयीषु कृतिषु पाणिन्युपज्ञेऽष्टके 'जीविकार्थे चापण्ये' [ ५।३।९९ ] इति सूत्रवत् परीतच्छब्दः स्थानमधिकृतवानपि सोऽद्य यावत्तिरोहित इत्यहो दुर्भेद्यमिदमासुरं तमः परीतन्नाम।

'ततं मे अपस्तदु तायते पुनः।' [ ऋक्० १।११०।१ ] 'परीवृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च।' [ अथर्व० १७।१।२८ ] 'समूढमस्य पांसुरे।' [ तै०सं० १।२।१३ ]

पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत्पांसुरम्। अस्य विष्णोस्तस्मिन् पदे विश्वं समूढं सम्यगन्तर्भूतम्। ( सायणः )

ततम् > तटम्।
तत् > तट्टु, तट्टै [ तामिल भाषा ]
मूतम् > मूट्टै [ तामिल भाषा ]

तट्टु, तट्टै। वर्तुलाकारस्य पात्रादीनामावरकस्य वाचकाविमौ शब्दौ। वर्तुल-

बुघ्नानां पात्राणां स्थिरीकरणार्थमधः स्थाप्यमाने मुञ्जतृणनिर्मिते रज्जुनिर्मिते वा वटे ( वेष्टके ) एतौ शब्दौ प्रयुज्येते।

"बद्धे संदानितं मूतम्" [ अमर० ३।१।९५ ]

मुर्व बन्धने इति धातोर्निष्ठायां मूतमिति रूपम्। मूट्ट शब्दोऽपि मूतार्थे प्रयुज्यते। यात्रादिषु परिधानकम्बलादीनां परिवेष्ट्य निबद्धा यद्धस्तग्राह्यं नेयं वस्तु भवति तस्मिन् मूट्टशब्दस्य व्यवहारो भवति ॥

---

# प्रश्नाः

[ रघुनाथशर्मा—वेदान्तविभागाध्यक्षो वाराणसेये संस्कृतविश्वविद्यालये ]

न्यायशास्त्रे प्रश्नाः—

१। कारणापदं कृधातोर्ण्यन्तात् नन्द्यादित्वाल्ल्युप्रत्यये निष्पद्यते नतु ल्युटि, युचा बाधात्। न च वाऽसरूपविधिः, नानुबन्धकृतमसारूप्यमिति न्यायेन सारूप्यात्। ततश्च कारणाकरणशब्दयोः कथमेकत्र प्रयोगसम्भवः ?

२। कुम्भकारस्य स्वकर्मरूपव्यापारमादाय कपालद्वयस्य च संयोगरूपव्यापारमादाय करणत्वं युज्यते न वा ?

३। नैयायिकैर्गुणकर्मणोः करणव्यापारत्वं स्वीकृम्। तत्र गुणे व्यापारपदं शक्तं पारिभाषिकं वा ?

४। पारिभाषिकत्वे सा परिभाषा सूत्रवार्तिकभाष्यकृतां कतमस्य ?

---

# वेदविमर्शः

[ विद्वद्रत्नपण्डित-लक्ष्मणशास्त्रि-सुरगुडकरः ]

अथेदं विचार्यते यत् 'अयाश्चेति' मन्त्रेण वह्नौ हविष्प्रक्षेपरूपे होमे कृते, न ममेति त्यागे 'अयसेऽग्नय' इदं न ममेति वक्तव्यमुताहो 'अयासेऽग्नय' इति। तत्रायाश्शब्द आकारोपधोऽयश्शब्दोऽकारोपधश्च सान्त इत्युभयविधः संभवति, उभयथापि अया इति रूपस्य तुल्यत्वात्। अयासौ अयास इति त्वग्रे भेदः। तदनुसारेण पुरस्तादयासेति तृतीया प्रयुक्ता मन्त्रकृतैव। तदग्रे हलादौ विभक्तौ परतस्तु अयाभ्यामित्यादौ रूपभेदः। एवं च मन्त्रवर्णानुकूल्येन अयासेऽग्नय इति वक्तव्यमापतितम्। भाष्यकारस्तु "अयासा छान्दसो दीर्घः" इति वदति। तथा च तन्मते नायमाकारोपध

इति "अयसेऽग्नये" इति यद् बहुत्रोच्यते तत्साधु। किं च यद् बहुभिरुच्यते तस्यैतद्भाष्यमेव मूलम्। परं भाष्योक्तो दीर्घ एवाङ्गीकार्य इत्यत्र किं गमकम्? सौत्रमन्त्राणां निश्चितस्वराभावात् स्वरभेदः प्रमाणं भवितुं नार्हति। किं चायमेव मन्त्रो हिरण्यकेशिसूत्रे "अयसा मनसा कृतः" इति पठ्यते तदनुसारेण "अयसेऽग्नये" इत्येव वक्तव्यमित्यलम्।

---

# बहुलीभूताः प्रमादाः

[ श्रीआशुतोषशर्माविश्वासः वेदशास्त्री ]

श्रीमच्छङ्कराचार्यकृते सुप्रथिते शिवापराधक्षमापणस्तोत्रे बहोः कालात् परम्परयैवं पाठः प्रचलति मुद्रितग्रन्थेषु—"नानारोगादिदुःखाद्रुदनपरवशः शङ्करं न स्मरामि" इति। अत्र स्रग्धराच्छन्दसि अष्टममक्षरं लघ्वेवापेक्ष्यते, परन्तु 'रुदन' इति पदं व्यक्तं प्रामादिकमेव। 'रुदिर् अश्रुविमोचने' इत्यस्माल्ल्युटि 'पुगन्तलघूपधस्य च' इति गुणे रोदनमित्येव भवति। अतो 'रुदित' इति पठितुं शक्यते तत्र च 'क्ङिति च' इति गुणनिषेधः। 'रुदन्' इति शत्रन्तपाठे दकारस्य गुरुत्वमेकाक्षरन्यूनत्वञ्चेति दोषद्वयप्रसक्तिस्तदुभयमप्यनिष्टमेव।

वस्तुतस्त्वत्र 'कद क्रद क्लद वैक्लव्ये' इति मतेन 'कदन' इत्येव समीचीनः पाठः। ककाररुकारयोर्लिपिसाम्याल्लेखकप्रमादाच्चैवं पाठपरिवृत्तिः सञ्जातेति प्रतीयते।

तत्रापि परवर्तिनि श्लोके "शैवीचिन्ताविहीनम्" इति पदं शिरःशूलमुत्पादयत्येव। "शैवीभक्त्याविहीनं" इति पाठेऽपि पुंवद्भावनियमात् 'शैव्या भक्त्या विहीनं' इति कथञ्चित् पठनीयमिति प्रतिभाति। आचार्याणां स्तोत्रेष्वप्यन्यत्रासाधुपददर्शनाभावादत्र च तथाविधपददर्शनादेवं वयं पाठपरिवृत्तिसाहसं कुर्मो न तु दोषोद्भावनदृष्ट्येति शम्।

---

# ईदृशः सन्धिः !

"मनोवीणा"-पुस्तके श्रीगजेन्द्रकुमारमित्रमहोदयस्य कृतकर्माख्यायां कथायां दृष्टम्—रामकमलबाबुर आत्मसम्मान ज्ञानेर आर कोन बहिर्प्रकाश देखा याय नि ( रामकमलमहोदयस्यात्मसम्मानज्ञानस्यापरः कोऽपि बहिष्प्रकाशो न दृष्टः ) इति ( पृः १७२ )।

बहिः + आकाशः : बहिराकाशः :: बहिः + प्रकाशः : $x$

$\therefore x =$ बहिर्प्रकाशः !!!

व्याकरणाभ्यासजडाः पुनर्बहिष्प्रकाशस्यैव साधुत्वमातिष्ठन्ते।

## अहो समासः !

श्रीहेमेन्द्रकुमाररायमहोदयस्य हासिनीहरणकथायां (मनोवीणा पृः १८६) लिखितम्—वातासके भाराक्रान्त करे तुलेछे सुरभिगन्धा रजनीगन्धा (पवनं भाराक्रान्तं व्यधित सुरभिगन्धा रजनीगन्धा) इति। वैयाकरणास्तु गन्धस्येदुत्पूतिसुसुरभिभ्य इति सूत्रेण समासान्तेकारसंयोगेन संहितया सुरभिगन्धी रजनीगन्धेति वदन्ति। वङ्गभाषायां तु तच्छ्रुतिसुखकरं न स्यात्।

---

## अनुष्ठितव्यः !!!

मासिकवसुमतीपत्रिकायां [कार्त्तिक १३६५, पृः ३९] दृष्टम्—आगामी डिसेम्बारे त्रिवेन्द्रमे अनुष्ठितव्य इतिहास कंग्रेसेर......इत्यादि।

अनुष्ठा + त : अनुष्ठित :: अनुष्ठा + तव्य : $x$

$\therefore x$ = अनुष्ठितव्य !!!

किञ्च

भू : भवितव्य :: अनुष्ठा : $x$ $\therefore x$ = अनुष्ठितव्य

### सुधिवृन्द !!!

तत्रैव दृश्यते—विभिन्न सुधिवृन्देर द्वारा अभिनन्दित...

गुणी : गुणिवृन्द $\therefore$ सुधी : $x$

$\therefore x$ = सुधिवृन्द !

---

## ओतःप्रोत

दैनिकवसुमतीपत्रिकायां (२१शे पौष, १३६५ पृः ४, स्तम्भ ५-६) अतिसुबृहद्भिरक्षरैर्मुद्रितम्—"आइनेर विधान ओ जीवन-विधि ओतःप्रोतभावे जडित" इति। विसर्जनीयमन्तरेण संस्कृतं न भवति। अधन्यतया पुनरस्माकमेकेनैव तकारेण विसर्जनीयो लब्धः, अपरस्तु तेन वञ्चितः। वङ्गभाषाभिज्ञो वाचकमहोदयः ८, भूपेन्द्र वसु एविन्यू कलिकाता ४ इत्यतः प्रकाशितायाम् अस्मत्प्रणीतायां शब्दकथायाम् ओतप्रोतस्य विश्वरूपं परिपश्यतु।

---

## कटे भुङ्क्ते

कटे भुङ्क्ते इत्यर्थात् कल्प्यते कटे समासीनः कांस्यपात्र्यामोदनं निधाय [व्यञ्जनादिभिरुपसिच्य] भुङ्क्ते। शाबरभाष्य १।३।३०

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| February, 1959. | १८८०-शकीय फाल्गुनस्य १३श-वर्षस्य षष्ठी संख्या | Vol. XIII No. 6 |
|---|---|---|


## प्रार्थना

शक्तिं शरीरे हृदये च भक्तिं
तव प्रियं साधयितुं प्रयच्छ ।
ज्ञानं च मह्यं जगदीश देहि
कृत्ये यथा मे न भवेत् प्रमादः ॥
पापग्राहसमाकीर्णे मोहनीहारसंवृते ।
भवाब्धौ दुस्तरे नाथ नौरेका भवतः कृपा ॥
त्वमेवाशा हताशानां भीतानामभयं सदा ।
त्वं गतिर्गतिहीनानां पाहि मां करुणामय ॥

---

## आभाणकमाला

Man is to man a God.
Greek. Anthrōpos anthrōpōi daimonion,
Latin. Homo homini deus est.
नरो नराय दैवतम् । दैवतं हि नरे नरः ।
Man is to man a wolf.
Lat. Homo homini lupus.
मानवो मानवे वृकः ।
Man is to man either a God or a wolf.

Lat. Homo homini aut deus aut lupus.

नरो नराय दैवतं वा वृको वा ।

The fairest silk is soonest stained.

मनोज्ञतमं कौशेयं द्रुततमं मलदूषितं भवति ।

Things that are hard to come by are much set by.

Lat. Quae rarissima carissima.

French. Les choses nous sont plus chères, qui nous ont plus cousté. MONTAIGNE.

German. Was teuer ist, das hält man wert.

दुर्लभतमं वल्लभतमम् । दुर्लभं हि वस्तु प्रियं भवति ।

---

## भारतरत्नमञ्जूषा

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥

शान्ति० ३०५।१२-१३

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत् परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ शान्ति० २५८।२०
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥
वेदविद् वेद भगवान् वेदाङ्गानि बृहस्पतिः ।
भार्गवं नीतिशास्त्रन्तु जगाद जगतो हितम् ॥
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् ॥

शान्ति० २१०।१९-२१

---

## समग्रस्य ऋग्वेदस्यानुवचनम्

यस्याखिले शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात् । शबर २।१।२६ ।

---

## निचुलः

[ दक्षिणावर्तकृतान्मेघसन्देशव्याख्यानात् ]

सरसनिचुलादित्यत्र निचुलपदेन निचुलाभिधानः कश्चन कविर्विवक्षितः। यस्य सूक्तिः सुभाषिते श्रूयते—

संसर्गजा दोषगुणा भवन्तीत्येतन्मृषा येन जलाश्रयोऽपि।
स्थित्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात्॥

इति। अनया निचुलोपवर्णनया तस्य कवेर्निचुलाभिधानत्वमासीदित्यनुसन्धेयम्। स तु निचुलकविरास्थानगतः कालिदासस्य सूक्तीः सम्भावयति। तस्मात् सरसपदेन तं कविं स्तौति। खमुत्पत। अनेन स्वकाव्यस्योच्छ्रितस्थानविजृम्भणं च विवक्षितम्। अयमभिप्रायः—किमन्यैरसूयुभिः? आस्थानगतो रसिकः स निचुल एव तवोच्छ्रायं करोतीति दुर्जनभीषणभीतं मेघसन्देशाभिधानं स्वप्रबन्धं मेघच्छद्मना समाश्वासयति। तव काव्यं के नाम दूषयन्तीत्यपेक्षां हृदि कृत्वाह—दिङ्नागानां दिग्गजानाम्। अनेन दिङ्नागाचार्यश्च विवक्षितः। पथि। अनेन विजृम्भणावकाश उत्पतनमार्गश्च विवक्षितः। परिहरन् वर्जयन् स्थूलहस्तावलेपान् उत्पतन्तं मेघमालोक्य सजातीयभ्रमेण स्थूलहस्तावताडनानि सम्भावितानि। अनेन प्रबन्धदूषणसमये स्थूलहस्ताभिनयाश्च विवक्षिताः। अयमभिप्रायः—दिङ्नाग इति कोऽप्याचार्यः कालिदासप्रबन्धानन्यत्रोक्तोऽयमर्थ इति स्थूलहस्ताभिनयैर्दूषयति। तमाचार्यं स्वप्रबन्धस्यापूर्वार्थाभिधायित्वमाश्रित्य मेघोपदेशव्याजेन कविरुपालभत इति।

---

## कालत्रितयेऽपि योग्यता

ज्यौतिषिकः। भो वरवर्णिनि, अपि नाम भवती भाविनं पतिमधिकृत्य किञ्चिज् ज्ञातुमिच्छति?

सुन्दरी। नहि नहि। अहं तावद् भविष्यत्युपयोगार्थं वर्तमानस्य पत्युरतीतमधिकृत्य किञ्चिज् ज्ञातुमिच्छामि।

---

## सम्यक्

शिक्षकश्छात्रान् पुनः पुनरनुशास्ति, न खलु जगति वर्तते तथाविधं किमपि वस्तु यत् स्थिरनिश्चयेन मनसा साधयितुं न शक्यते। इति। हरिचरणेनोक्तम्—आर्य, ममात्र वैमत्यं वर्तते। इति। शिक्षकेणोक्तं ब्रूहि मां च सतीर्थ्यांश्च कि तदिति। "फेनकखण्डे दीपशलाकां ज्वालयितुं यतस्व" इति बालकस्योत्तरमासीत्।

Lat. Homo homini aut deus aut lupus.

नरो नराय दैवतं वा वृको वा ।

The fairest silk is soonest stained.

मनोज्ञतमं कौशेयं द्रुततमं मलदूषितं भवति ।

Things that are hard to come by are much set by.

Lat. Quae rarissima carissima.

French. Les choses nous sont plus chères, qui nous ont plus cousté. MONTAIGNE.

German. Was teuer ist, das hält man wert,

दुर्लभतमं वल्लभतमम् । दुर्लभं हि वस्तु प्रियं भवति ।

---

## भारतरत्नमञ्जूषा

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥

शान्ति० ३०५।१२-१३

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत् परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ शान्ति० २५८।२०
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥
वेदविद् वेद भगवान् वेदाङ्गानि बृहस्पतिः ।
भार्गवं नीतिशास्त्रन्तु जगाद जगतो हितम् ॥
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् ॥

शान्ति० २१०।१९-२१

---

## समग्रस्य ऋग्वेदस्यानुवचनम्

यस्याखिले शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात् । शबर २।१।२६ ।

---

# निचुलः

[ दक्षिणावर्तकृतान्मेघसन्देशव्याख्यानात् ]

सरसनिचुलादित्यत्र निचुलपदेन निचुलाभिधानः कश्चन कविर्विवक्षितः। यस्य सूक्तिः सुभाषिते श्रूयते—

संसर्गजा दोषगुणा भवन्तीत्येतन्मृषा येन जलाश्रयोऽपि।

स्थित्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात्॥

इति। अनया निचुलोपवर्णनया तस्य कवेर्निचुलाभिधानत्वमासीदित्यनुसन्धेयम्। स तु निचुलकविरास्थानगतः कालिदासस्य सूक्तीः सम्भावयति। तस्मात् सरसपदेन तं कविं स्तौति। खमुत्पत। अनेन स्वकाव्यस्योच्छ्रितस्थानविजृम्भणं च विवक्षितम्। अयमभिप्रायः—किमन्यैरसूयुभिः? आस्थानगतो रसिकः स निचुल एव तवोच्छ्रायं करोतीति दुर्जनभीषणभीतं मेघसन्देशाभिधानं स्वप्रबन्धं मेघच्छद्मना समाश्वासयति। तव काव्यं के नाम दूषयन्तीत्यपेक्षां हृदि कृत्वाह—दिङ्नागानां दिग्गजानाम्। अनेन दिङ्नागाचार्यश्च विवक्षितः। पथि। अनेन विजृम्भणावकाश उत्पतनमार्गश्च विवक्षितः। परिहरन् वर्जयन् स्थूलहस्तावलेपान् उत्पतन्तं मेघमालोक्य सजातीयभ्रमेण स्थूलहस्तावताडनानि सम्भावितानि। अनेन प्रबन्धदूषणसमये स्थूलहस्ताभिनयाश्च विवक्षिताः। अयमभिप्रायः—दिङ्नाग इति कोऽप्याचार्यः कालिदासप्रबन्धानन्यत्रोक्तोऽयमर्थ इति स्थूलहस्ताभिनयैर्दूषयति। तमाचार्यं स्वप्रबन्धस्यापूर्वार्थाभिधायित्वमाश्रित्य मेघोपदेशव्याजेन कविरुपालभत इति।

---

# कालत्रितयेऽपि योग्यता

ज्यौतिषिकः। भो वरवर्णिनि, अपि नाम भवती भाविनं पतिमधिकृत्य किञ्चिज् ज्ञातुमिच्छति?

सुन्दरी। नहि नहि। अहं तावद् भविष्यत्युपयोगार्थं वर्तमानस्य पत्युरतीतमधिकृत्य किञ्चिज् ज्ञातुमिच्छामि।

---

# सम्यक्

शिक्षकश्छात्रान् पुनः पुनरनुशास्ति, न खलु जगति वर्तते तथाविधं किमपि वस्तु यत् स्थिरनिश्चयेन मनसा साधयितुं न शक्यते। इति। हरिचरणेनोक्तम्—आर्य, ममात्र वैमत्यं वर्तते। इति। शिक्षकेणोक्तं ब्रूहि मां च सतीर्थ्यांश्च किं तदिति। "फेनकखण्डे दीपशलाकां ज्वालयितुं यतस्व" इति बालकस्योत्तरमासीत्।

---

Lat. Homo homini aut deus aut lupus.

नरो नराय दैवतं वा वृको वा ।

The fairest silk is soonest stained.

मनोज्ञतमं कौशेयं द्रुततमं मलदूषितं भवति ।

Things that are hard to come by are much set by.

Lat. Quae rarissima carissima.

French. Les choses nous sont plus chères, qui nous ont plus cousté. MONTAIGNE.

German. Was teuer ist, das hält man wert.

दुर्लभतमं वल्लभतमम् । दुर्लभं हि वस्तु प्रियं भवति ।

---

# भारतरत्नमञ्जूषा

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥

शान्ति० ३०५।१२-१३

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत् परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ शान्ति० २५८।२०
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥
वेदविद् वेद भगवान् वेदाङ्गानि बृहस्पतिः ।
भार्गवं नीतिशास्त्रन्तु जगाद जगतो हितम् ॥
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् ॥

शान्ति० २१०।१९-२१

---

# समग्रस्य ऋग्वेदस्यानुवचनम्

यस्याखिले शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात् । शबर ३।१।२६ ।

---

कवीन्द्र-रवीन्द्रनाथस्य

# हिं-टिं-छट्

## ( राजस्वप्नः )

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

( १ )

रात्रौ शयानो हवुचन्द्रभूपः स्वप्नं विचित्रं समपश्यदेकम्
पुनः पुनस्तस्य विभाव्य चार्थं बभूव निर्वाग् गवुचन्द्रमन्त्री ॥१॥
त्रयः प्लवङ्गा नृपमूर्धजस्थान् समुद्धरन्ते तरसा स्म यूकान् ।
दभ्राङ्गकम्पे तु कपोलयुग्मे नखक्षतैस्ते ददते चपेटाम् ॥२॥
लीनेषु शून्ये सहसा च तेषु चक्राट एकः समुपस्थितोऽभूत् ।
"खगो विनष्टो मम हे"ति शोचन् धृत्वा नृपं स्कन्धगतं चकार ॥३॥
ततः स भूपं कृतपादबन्धमुच्चैकदण्डे समधत्त यावत् ।
कापि प्रवीणाधरभूमिमेत्य कण्डूयते स्माङ्घ्रितलं सहास्यम् ॥४॥
प्रोवाच राजा "विपदद्भुतैषा न कोऽपि यन्मुञ्चति मां समीक्ष्य" ।
उद्धर्तुकामोऽप्यथ पादयुग्ममुन्नेतुमेकं न शशाक सोऽपि ॥५॥
पक्षीव राजाऽस्थिरतां गतोऽभूत् तद्वीक्ष्य तूर्णं समुपेत्य पार्श्वम् ।
चक्राट ऊचे श्रवणस्य मूले हिं-टिं-छडेतत् त्रिकमक्षराणाम् ॥६॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥७॥

( २ )

गतानि षट्सप्तदिनानि राज्ये नान्नं न निद्रां समवाप कोऽपि ।
विशुष्कगण्डाहितशीर्णहस्तास्तस्थुश्च लोका नतमस्तकेन ॥८॥
सर्वेऽपि राज्यस्थितबालवृद्धाश्चिन्तातुरा ह्यस्थिरतां प्रयाताः ।
क्रीडां च बाला विबुधाश्च पाठं स्त्रियश्च वाक्यानि विसस्मरुर्द्राक् ॥९॥
एकाग्रदृष्टिं विनिधाय पृथ्व्यां विचेतुकामा इव गर्भतत्त्वम् ।
श्रेणीनिबद्धाः सकला निषेदुरमूर्तभोजेष्विव वाक्यहीनाः ॥१०॥
चिन्ता हि यावद् गुरुतामवाप शिरोऽपि तावद् विनतं बभूव ।
क्षणे क्षणे ते विकटं श्वसित्वा हिं-टिं-छडेतत् त्रिकमुज्जगर्जुः ॥११॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥१२॥

( ३ )

कनौजकाञ्चीमगधादिभूषा दिग्भ्यश्चतुर्भ्यो विबुधाः समेताः ।
श्रीकालिदासस्वसुरेव वंशात् समागतश्चापि बुधावतंसः ॥१३॥
व्यावर्तयन्तो बृहतां बुधास्ते जीर्णानि पत्राण्यथ पुस्तकानाम् ।
शिखासमेतं निजमुत्तमाङ्गमान्दोलयामासुरशेषवारान् ॥१४॥
एकः पुराणं श्रुतिमेव चान्यो ददर्श कोऽपि स्मृतिशासनानि ।
कश्चिच्च कोषानुत शब्दशास्त्रं तथापि शक्ता न हि बोद्धुमर्थम् ॥१५॥
स्तूपः सदा बिन्दुविसर्गयोस्तु द्रुतं समन्ताद् गत एव वृद्धिम् ।
क्षेत्रस्थकाशस्तबका व रेजुः सञ्चाल्यमानाः पवनेन केशाः ॥१६॥
निपत्य घोरोत्कटसङ्कटे सा तूष्णीं स्थिताभूत् समितिर्बुधानाम् ।
क्षणे क्षणे सा विकटं जगाद हिं-टिं-छडेतत् त्रिकमक्षराणाम् ॥१७॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥१८॥

( ४ )

चख्यौ निराशो हवुचन्द्रभूपः "श्रुतं मया यद् यवनप्रदेशे ।
सन्ति प्रभूता विदुषां समाजा आहूय सर्वान् समितिं नयध्वम् ॥१९॥
स्वप्नार्थमाप्तुं यदि शक्नुयुस्ते धनक्षये नास्ति ममापि दुःखम् ।
अथागतास्ते विदुषां समाजा ढक्का निनेदुः पटहाश्च राज्ये ॥२०॥
नीलेक्षणाः पिङ्गलकेशपाशा आरक्तगण्डा शशिशुभ्रवर्णाः ।
कृष्णान् दधाना गुरुकुञ्चकांस्ते निदाघतापज्वलनेन रुद्राः ॥२१॥
एत्यैव वाक्यान्तरमन्तरेण चख्युर्घटीयन्त्रनिबद्धनेत्राः ।
"दण्डार्धमात्रः समयोऽस्ति हस्ते यदस्ति वाच्यं त्वरयोच्यतां तत्" ॥२२॥

( युग्मकम् )

श्रुत्वैव तेषां वचनं सभायामुपस्थितास्तत्र जनाश्च सर्वे ।
विदार्य कर्णौ युगपज्जगर्जुर्हिं-टि-छडेतत् त्रिकमक्षराणाम् ॥२३॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥२४॥

( ५ )

तत्स्वप्नवाक्यश्रवणेन तेषां मुखान्यभूवन् परमारुणानि ।
निर्गत्य वह्निर्मुखनेत्रगर्भात् समुद्यतोऽभूत् सकलांश्च दग्धुम् ॥

आहत्य सव्येतरहस्तमुष्ट्या सव्यस्य पाणेस्तलमेव वेगात् ।
प्रोचुस्ततस्तेऽप्रतिरुद्धरोषाद् "आहूतभद्रेष्ववहास एषः" ॥२६॥
आसीत् फरासीविषयाधिवासी सुस्मेरवक्त्रो विबुधस्तु तेषु ।
हस्तं निधायोरसि नम्रशीर्षश्चख्यौ स चान्ते विनयेन वाचम् ॥२७॥
"स्वप्नः श्रुतो यः स हि राजयोग्य ईदृक्षभाग्यं सकलस्य न स्यात् ।
स्वप्नस्तथापि प्रतिभाति मे स दृष्टोऽपि राज्ञा निज एव मस्ते ॥२८॥
अर्थोऽस्ति भूरिर्नृपकोषमध्ये स्वप्ने तु राज्ञः स हि नास्ति दभ्रः ।
तथापि वाच्यं मधुवर्षि कर्णे हिं-टि-छडेतत् त्रिकमक्षराणाम् ॥"२९॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥३०॥

( ६ )

धिक्कारशब्दैर्जनताचचक्षे "पाषण्डमूर्खः कुत आगतोऽयम् ।
स्वप्नोऽस्त्यलीको मनसो विकारः श्रद्धेयमेतद्वचनं न जातु ॥३१॥
विश्वेऽत्र नो भारतसन्ततीनां स्वधर्मनिष्ठा विदिता न कस्य ।
स्वप्नोऽस्य वाचा यदि लोप्य एव माध्याह्निकी सा ननु दस्युता स्यात्" ॥३२॥
प्रोवाच रुष्टोऽथ गवुं स भूप "एषां विधेयः कृतियोग्यदण्डः ।
आमस्तकं कण्टकगर्तमध्ये क्षिप्त्वा श्वभिः खादय देहमांसम्" ॥३३॥
अन्तं न याते समयार्धदण्डे लयं गता म्लेच्छबुधास्तु सर्वे ।
मग्नाश्च सभ्या नयनाश्रुनीरे प्रत्यागता शान्तिरभूच्च राज्ये ॥३४॥
पूर्वागतास्तत्र विपश्चितोऽथ नेत्रे मुखं चैव भृशं विकृत्य ।
सुतारशब्दैर्युगपज्जगर्जु-हिं-टि-छडेतत् त्रिकमक्षराणाम् ॥३५॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥३६॥

( ७ )

अत्रान्तरे तत्र समागतोऽभूत् सज्जाविहीनस्त्रपयापि शून्यः ।
गौडोद्भवो यावनपण्डितानां सुनम्रशीर्षो गुरुघातिशिष्यः ॥३७॥
पश्चात्-पुरःस्थौ वसनान्तभागौ स्थितौ गलन्तौ शतकृत्व एव ।
अस्त्येव नो वा कृशखर्वदेहो गम्योऽभवत् केवलवाक्यवर्षात् ॥३८॥
एतावदल्पे गलयन्त्रमध्ये शब्दस्तु तावानिति चित्रमेव ।
नासीत् प्रणामः, कुशलस्य पृच्छा, चुकोप घोरं पितृनाम्नि पृष्टे ॥३९॥

चख्यौ सगर्वं समितिं गतः स "तर्केऽत्र युष्मद्विषयं निशम्य ।
द्वित्राणि वाक्यान्यलमस्मि वक्तुं वाग्भिर्विपर्यासमतोऽपि कर्तुम्" ॥४०॥
आकर्ण्य विद्यामदमिश्रवाचं राज्ञः सभायां बुधपुङ्गवस्य ।
समस्वरेणैव जना जगर्जु-र्हिं-टिं-छडेतत् त्रिकमक्षराणाम् ॥४१॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥४२॥

( ८ )

श्रुत्वेतिहासं समुवाच विद्वान् गम्भीरवक्त्रः प्रहरं स्थितः सन् ।
"पुराणभावस्य नवावतारो नितान्तमर्थः सरलः सुबोधः ॥४३॥
सृष्टेर्विधातुः प्रथमप्रकाशे त्रिसंख्यकास्ते गुणवह्विकालाः ।
भवन्ति शक्तिप्रविभेदमात्रे व्यत्ययन्तिके हि द्विगुणा विगौणाः ॥४४॥
विवर्तनावर्तनकृत्यमध्ये शिवस्य जीवस्य च शक्तियुग्मम् ।
नित्यं प्रयात्येव विरुद्धभावमित्येवमुक्तं मुनिभिः पुराणे ॥४५॥
आकर्षणं चैव विकर्षणं च सार्धं प्रकृत्या पुरुषस्य योगः ।
सर्वाकृतिस्तद्विकृतिश्च कृत्स्ना फलं ह्यणोश्चुम्बकचण्डशक्तेः ॥४६॥
जीवात्मविद्युद् वहते कुशाग्रे तस्याः प्रसूतिः परमैव शक्तिः ।
सा त्रिस्वरूपा भवति प्रपञ्चे हिं-टिं-छडेतत् त्रिकमक्षराणाम्" ॥४७॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥४८॥

( ९ )

दिशश्चतस्रः समितेश्च कोष्ठश्चकम्पिरे तं प्रति साधुवादैः ।
उक्तं जनैः "संशयमेघमुक्तं जातं नभोवद् विशदं मनो नः" ॥४९॥
त्यक्त्वासनं द्राक् सुघनं श्वसित्वा स्वोष्णीषमादाय करे च भूपः ।
तेनैव गौडीयबुधस्य शीर्षं सहर्षघोषैः समलञ्चकार ॥५०॥
उष्णीषभारेण शिरस्तदास्य भुग्नं भवद् भग्नमिवाबभौ तत् ।
राज्यं च कालस्य बहोः परस्ताच्चिन्ताविमुक्तं जडतामसुञ्चत् ॥५१॥
क्रीडां च बालाः स्थविरास्तमाखुं स्त्रियश्च वाक्यान्यलभन्त सद्यः ।
शिरोव्यथामुक्तजनैरबोधि हिं-टिं-छटां चापि यथार्थतत्त्वम् ॥५२॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥५३॥

( १० )

स्वप्नाश्रितं मङ्गलकाव्यमेतच्छृणोति यो नित्यविशुद्धचित्तः ।
असंशयं तस्य भवेद्विमुक्तिः सर्वभ्रमेभ्यः सह पापजातैः ॥५४॥
विश्वं सदा चिन्तयतश्च विश्वे प्रवञ्चना तस्य कदापि न स्यात् ।
यदेव सत्यं प्रतिभाति पृथ्व्यां तदेव मिथ्येति भवेद्विबोधः ॥५५॥
'यदस्ति तन्नास्ति तदस्ति यन्न' स्यात् स्पष्टमेतत् सविधेऽस्य सत्यम् ।
पश्यन्ति सर्वं सरलं यदेव स तत्र पिच्छं निजमेव युञ्ज्यात् ॥५६॥
आयाहि बन्धो शयने शयानो ध्यायात्र नित्यं भुवि सत्यमेकम् ।
असत्यमायामयविश्वमध्ये स्वप्नो हि सत्यो न च किञ्चिदन्यत् ॥५७॥
स्वप्नाश्रितं मङ्गलकाव्यमेतन्मर्त्येऽत्र लोके सुरपेयतुल्यम् ।
वक्तास्य गौडीयकविर्वरेण्यः श्रोतास्य विश्वे धृतपुण्यवृत्तिः ॥५८॥

---

# छात्रहितैषिणी

## *शाकुन्तलगतस्य श्लोकस्य सरलार्थः*

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥

ये तावच्चत्वारः श्लोकाः कालिदासस्य सर्वस्वतयाभिमतास्तेष्वेवायमन्यतमः। शकुन्तलां पतिगृहं प्रेषयिष्यतः कण्वस्य दुष्यन्तं प्रति सन्देशोऽयम्।

गान्धर्वेण विवाहेन शकुन्तलां परिणीय कतिचिद्दिनानि तया सह सुखमनुभूय राजधानीं प्रस्थितस्य ते बहवो मासा व्यतीताः। एतावन्तं कालं न केवलं शकुन्तलायाः स्वसमीपे नयनाय विश्वस्ता जना न प्रेषितास्त्वया, लेखमात्रमपि न विसृष्टम्। एतस्माच्च सम्भाव्यते शकुन्तला त्वया निष्पीडितेक्षुलतावदत्यन्ताय परित्यक्तेति। यद्यपि पतिकुलेनैव सादरं वधूरानीयते तथापि बान्धवेषु चिरवासो हि नारीणां न युज्यत इत्यतः समुदाचारमुल्लङ्घ्यास्माभिरेव दुहिता प्रहीयते। न चाप्रार्थितोपनतेषु वस्तुषु जनानामादरो भवति विशेषतश्च भवादृशां महीतलरत्नभुजाम् अतोऽस्माभिः स्वप्रयत्नेनैव

प्रेषिता शकुन्तला त्वया स्वीकरिष्यते वा न वेत्यत्र सुमहान् संशयः समुन्मिषति। त्वयात्र त्रयो विषया विशेषतो विचारणीयाः। प्रथमतो ये तावद् रत्नमिदं तुभ्यं प्रसादीकुर्वन्ति ते संयमधनाः। ये खलु पार्थिवसम्पदे न स्पृहयन्ति, तप एव येषां परमा सम्पत्, तैर्यत् प्रेष्यते सादरं तदवश्यमेव शिरसि करणीयम्। किञ्च न खलु धनलिप्सया वा गौरव-वाञ्छया वा धराधीशेन सम्बन्धविशेषमभिकामयमानैर्धर्मधनैरस्माभिर्धर्मपत्नीव्यप-देशेनाभिव्यक्तसत्त्वलक्षणा स्वैरिणी त्वत्सविधे संप्रेष्यत इति निपुणं विभावनीयम्। किञ्च त्वयास्माकमनुमतिमन्तरेणाप्यस्मद् दुहिता पत्नीभावमापादितेति क्रोधवशमगत्वा संयमवैभवैरस्माभिर्मुषितं वस्तु मोषकायैव प्रतिपाद्यत इत्यपि सम्यग् विमर्शनीयम्। ततश्च त्वं खलु पितृभक्तस्यानन्यसाधारणगुणोपेतस्य पुरोरापञ्चाभयसत्रे दीक्षिते वंशे समधिगतजन्मासि। मा खलु त्वदीयेनाचरणेनोदात्ततमेऽस्मिन्नन्वये कलङ्ककालिम्नो नवावतारो भूत्। पुरुवंशप्रत्ययादेव शकुन्तला तव हस्ताभ्यासमुपगतेत्यपि न विस्मर्त-व्यम्। एवं दातृनस्मान् प्रतिग्रहीतारं चात्मानं विचिन्त्य दत्तं वस्त्वपि विवेचनीयम्। शकुन्तलाया यः स्नेहानुबन्धस्त्वयानुभूतः स खलु लेशतोऽपि वाचा वेङ्गितेन वा तस्याः स्वजनेन नोपजनितः परं कुमारीहृदयान्तरालात् स्वत एव समुत्सृतः। ईदृशस्य स्नेहस्याव-हेलनं न खलु कदाचिदपि श्रेयसे कल्पते न वानुरूपं भवत्यभिजातस्य। एतत् सर्वं निपुण-मभिसमीक्ष्य शकुन्तला त्वया पत्नीत्वेन स्वीकरणीया पत्नीगौरवं च प्रापणीया। इतरासु यः स्नेहश्च बहुमानश्च स शकुन्तलायामपि प्रदर्शनीयः। एतावतैवास्माकं तोषः स्यात् तवापि धर्मपरिपालनं स्यात्। महादेवीपदमपि तस्या भवेच्चेद् भवतु नाम, परं वध्वाः स्वजनेन तन्न महता कण्ठेन वक्तव्यम्। तस्य कीर्तनेन पक्षपातित्वदोषश्च प्रसज्येत, अपरासां राजपत्नीनां तत्स्वजनानां च क्षोभः स्यात्।

अत्रास्मच्छब्देन न केवलं कण्वस्य परं तदाश्रमवासिनां सर्वेषामृषीणां परामर्शः, अत एव बहुवचनम्। यद्वा अस्मदो द्वयोश्चेति सूत्रस्य वार्त्तिकेन सविशेषणस्य प्रतिषेधो वक्तव्य इत्यनेन प्रतिषेधेऽपि विधेयविशेषणे न दोषः। अत एव त्वं राजा वय-मप्युपासितगुरुप्रज्ञाभिमानोन्नता इत्यादयः प्रयोगा उपपद्यन्ते। उच्चैरिति सुबन्त-प्रतिरूपकमव्ययमुन्नतार्थे वर्तते। अबान्धवकृतामित्यत्राश्राद्धभोजी ब्राह्मणः, असूर्यम्पश्या राजदारा इत्यादिवत् प्रसज्यप्रतिषेधेनापि नञा समासः। प्रक्रान्तप्रसिद्धानुभूतार्थस्त-च्छब्दो यदुपादानं नापेक्षते इति यच्छब्दस्यानुपादानेऽपि तच्छब्दप्रयोगस्तामिति। "आक्षेपोऽत्रालङ्कारः। अस्या दारविशेषप्रतिपत्त्या दर्शनं भाग्यायत्तत्वाद् वधू-बन्धुत्वेनास्मास्वविश्वासाच्च किमर्थं वयं ब्रूम इति कैमर्थक्यपरामर्शनमत्राक्षेपः। अनेनावश्यवक्तव्यलक्षणो विशेषो द्योत्यते। निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया'

वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ इति ।" इत्यभिरामव्याख्यानं चिन्त्यम् ।
आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत् । कथापि खलु पापानामलमश्रेयसे यतः ॥
इति माघपद्ये ईदृशस्याक्षेपस्य सम्भवेऽपि कण्ववचनेऽसम्भवात् । महिषीपदप्राप्त्यादिक-माप्तजनैराशास्यं न तु कण्ठत उच्चारणीयमिति परमार्थत एव महर्षेररण्यौकसोऽपि लौकिकज्ञस्याभिमतम् । अत एव वक्ष्यते—यदिच्छामि ते तदस्तु इति ।

सरस्वतीकण्ठाभरणे श्लोकोऽयं दैन्यस्योदाहरणत्वेनोपन्यस्तः । तत्र द्वितीये चरणे "भावप्रवृत्तिं च ताम्" इति पाठः । सोऽपि समीचीनः । "निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति हि भावलक्षणम् ।

---

# भाषायां सङ्करः (Contamination)

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कुमारसम्भवस्य षष्ठसर्गस्यादिमः श्लोकः—

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ इति ।

अत्र "गौरी सखीं सन्दिदेश" "गौरी विश्वात्मने सन्दिदेश" इत्यनयोः सङ्करः स्फुट एव । सखीमुखेन सन्दिदेशेति वाक्यमनवद्यं स्यात् । परस्मिन्नेव श्लोके दृश्यते "तया व्याहृतसन्देशा सा बभौ निभृता प्रिये" इति । अत्र तया सख्या सखीमुखेनेत्यर्थ इति मल्लिनाथो व्याचष्ट । मेघसन्देशेऽपि मेघेन सन्देशप्रदानावसरे कथितम्—मन्मुखेनेदमाह । महाभारतेऽपि ( ५।१९२।२ ) दृश्यते—"दूतैर्मधुरसम्भाषैर्नैतदस्तीति सन्दिशन्" इति ।

अत्र न केवलं छन्दोऽनुरोधेनैव सख्येत्यनुक्त्वा सखीमिति वचनम् , द्वितीयया कर्तु-रीप्सिततमया सखीमुखोक्तिः स्वमुखोक्तिरेवेति प्रतीयते ।

तया व्याहृतसन्देशा सा बभौ निभृता प्रिये [ कु० स० ६।२ ] इत्यत्र नाराय-णेनोक्तम्—तया सख्या । प्रिय इति विषयसप्तमी । प्रिये विषय इत्यर्थः । व्याहृत-सन्देशा व्याहृतः कथितः सन्देशो यस्याः सा तथा । अत्र व्याहरणे सखी कर्त्री । अन्त-र्भूतण्यर्थो वा । व्याहारित इत्यर्थः । अत्र सख्याः करणत्वम् । हृक्रोरन्यतरस्याम् [ १।४।५३ ] इति कर्मसंज्ञाभावपक्षे करणसंज्ञा । सख्या व्याहारितः सन्देशो ययेति विग्रहः । इति ।

अस्य विचारो वारान्तरे विधास्यते ।

---

# शब्दार्थरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## क्रतुः

क्रतुशब्दो वेदे बहुलं प्रयुज्यते लोकेऽप्यन्तरान्तरास्य प्रयोग उपलभ्यते। अस्य को वार्थ इति साम्प्रतं विचार्यते।

क्रतुशब्दो निघण्टौ कर्मनामसु [ २।१ ] प्रज्ञानामसु [ ३।१ ] चाम्नातः। उणादिषु कृञः कतुः [ १।७८ ] इति कृधातोः क्रतुशब्दो निष्पन्नः। अत एव येन कर्म क्रियते स एव क्रतुः। कर्म च सम्यगनुष्ठानार्थं मानसीं शक्तिं शारीरं सामर्थ्यं चापेक्षते। अत एव क्रतुशब्दस्य प्राथमिकोऽर्थः शारीरं मानसं वा सामर्थ्यं शारीरं मानसं च सामर्थ्यमिति च। अत एव शतक्रतुशब्दस्य प्राथमिकोऽर्थः यस्य बलं वा प्रज्ञा वा शतस्य बलेन प्रज्ञया वा तुल्यकक्षां विगाहत इति। शतं क्रतवो यस्य स शतक्रतुः। यज्ञकर्मस्वेव समधिकसामर्थ्यस्यापेक्षा वर्तत इति क्रमेण क्रतुशब्दो यज्ञपरः सञ्जातः। लोके यज्ञक्रतू इव वेदे क्रतुदक्षौ सहचरशब्दौ। शतपथब्राह्मणे श्रूयते—स यदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत् समृध्यते स दक्षः। मित्र एव क्रतुः, वरुणो दक्षः। ब्रह्मैव मित्रः क्षत्रं वरुणः। अभिमन्तैव ब्रह्म कर्ता क्षत्रियः। [ ४।१।४।२ ] इति। अत्र भाष्यम्—क्रतुदक्षशब्दयोरर्थं विवृणोति स यदेवेत्यादि। स लोकः इदं पुरोवर्ति मे स्याद् भवेत्। इदं कुर्वीयेति मनसा कामयते अभिलषतीति यत् स क्रतुः। सङ्कल्प इत्यर्थः। तत् सङ्कल्पितमस्मै लोकाय येन समृध्यते स दक्षः। दक्ष वृद्धौ। क्रतुदक्षाविति क्रमो विवक्षित इत्याह—मित्र एवेत्यादि। मित्रावरुणयोराधिभौतिकरूपं सोपपत्तिकमाह—ब्रह्मैवेत्यादिना। ब्रह्मेति ब्राह्मणजातिः, सैव मित्रो देवः। क्षत्रं क्षत्रियजातिरेव वरुणो देवः। अभिगन्ताभिगमनशीलः। ज्ञानशक्तियुक्त इत्यर्थः। कर्ता क्रियाशक्तियुक्तः। इति।

सुप्रवाचन तव वीर वीर्यं यदेकेन क्रतुना विन्दसे वसु [ ऋ० सं० २।१३।११ ] इत्यत्र क्रतुशब्दः कर्मपरः। एकेनैव सङ्कल्पेन केवलया प्रज्ञयेति केचिद्व्याचक्षते।

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः।

इन्द्र क्रतुर्हि ते बृहन्॥ [ ३।५२।४ ]

इत्यत्र क्रतुशब्दः प्रज्ञावचन इति वेङ्कटमाधवः, कर्मपर इति सायणः।

अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः। प्रातःसावे धियावसो॥ [ ३।२८।१ ] इति समानार्थायामृचि धियावसो इत्यामन्त्रणपदप्रयोगान्माधवव्याख्यानमेव समीचीनतया प्रतिभाति।

परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत् ।

उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥१०।३१।२

अत्र क्रतुशब्दः प्रज्ञापरो दक्षशब्दश्च सङ्कल्पपर इति प्रतीयते ।

इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।

ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥८।४२।३

इत्यृचि क्रतुं प्रज्ञानं दक्षं बलं च संशिशाधि तीक्ष्णीकुरु इति सायणः। विचारशक्ति चेच्छाशक्ति चेति पाश्चात्त्याः ।

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।

हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥५।८५।२

इति मन्त्रस्य व्याख्याने क्रतुं प्रज्ञानमिति वेङ्कटमाधवः। कर्मसङ्कल्पं यद्धि मनसा ध्यायति तत् कर्मणा करोतीति सायणः। अत एव शतपथब्राह्मणे श्रूयते—हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टः [ ३।३।४।७ ] इति ।

अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते [ ४।४।५ ] इति बृहदारण्यकश्रुतिभाष्य आचार्यपादैरुक्तम् क्रतुर्नामाध्यवसायो निश्चयो यदनन्तरा क्रिया प्रवर्तते इति ।

अहं क्रतुरहं यज्ञः [ गीता ९।१६ ] इत्यस्य व्याख्याने श्रीधरस्वामिनोक्तम्—क्रतुः श्रौतोऽग्निष्टोमादिः, यज्ञः स्मार्तः पञ्चयज्ञादिरिति। अन्यत्राप्युक्तम्—यज्ञा अयूपाः क्रतवः सयूपाः। इति ।

ग्रीसीय-भाषायां kratos-शब्दस्यार्थः बलम् , शारीरी वा मानसी वा शक्तिः, kratus शब्दस्य चार्थः बलवान् , शक्तिमान् । आवेस्तायां ख़तुशब्दस्यार्थः मानसी शक्तिः, प्रज्ञा ।

---

# वैदिकसूत्रव्याख्यानविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

चतुर्थ्यर्थे बहुलं छन्दसि [ २।३।६२ ] इति सूत्रस्य काशिकायां दृश्यते—छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम्। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्यः। बहुलग्रहणं किम्? कृष्णो रात्र्यै हिमवतो हस्ती। इति। अत्र न्यासः। "बहुलग्रहणं किमि"ति। विभाषाग्रहणानु-

वृत्तेरेव सिध्यतीति मन्यमानस्य प्रश्नः। कृष्णो रात्र्यै हिमवतो हस्तीति। अत्र बहुल-ग्रहणात् सप्तम्यर्थेऽपि चतुर्थी भवति। इति।

न्यासकारेण काशिकाया आशयः सम्यगेव विवृत इति प्रतिभाति, परं मतमिदं सर्वथा प्रामादिकमेव। "कृष्णो रात्र्यै" [ वाजसनेयि० २४।३६ ] इत्यस्यार्थः कृष्णमृगो रात्र्यै आलभ्य इति। "हिमवतो हस्ती" इत्यस्यार्थः—हस्ती हिमवते आलभ्य इति। अत्र सप्तम्या गन्धोपि नास्ति। वाजसनेयिसंहितायां हिमवते हस्ती [ २४।३० ] इति श्रूयते तैत्तिरीयसंहितायां च हिमवतो हस्ती [ ५।५।११।१ ] इत्याम्नायते।

अत्र बहुलशब्दो बाहुल्यार्थे प्रयुक्त इति प्रतिभाति। वेदे समधिकस्थलेषु चतुर्थ्यर्थे षष्ठी भवतीत्यर्थः। अत एव भट्टोजिभट्टेन शब्दकौस्तुभे व्याख्यातम्—चतुर्थ्यर्थे बहुलं छन्दसि। षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसे। गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्। बहुलग्रहणाच्चन्द्रमसश्चतुर्थी। इति। कौमुदीव्याख्यायां सुबोधिन्यामप्युक्तम्—बहुलग्रहणात् चन्द्रमसेरुदमी रात्र्यै इत्यादौ षष्ठ्यभावः। इति। अत्र चन्द्रमसे हिमवते रात्र्यै इति शुद्धः पाठ इति प्रतीयते।

शब्देन्दुशेखरे नागेशभट्टेनाप्युक्तम्—बहुलग्रहणाच्चन्द्रमसश्चतुर्थी। व्यत्ययो बहुलमित्यस्यैवायं प्रपञ्चः। इति। व्याख्यातं चेदं भैरवमिश्रेण—ननु पुरुषमृग इति वाक्ये चन्द्रमश्-शब्दादपि षष्ठी स्यादत आह—बहुलग्रहणादिति। वार्त्तिके बहुल-ग्रहणादित्यर्थः। अयं वार्त्तिकद्वयरूपः। इति। एतस्माच्च प्रतीयते भैरवमिश्र-मतेन—चतुर्थ्यर्थे बहुलं छन्दसीति वार्त्तिकं न पुनः सूत्रम्। महाभाष्ये त्वेतत् सूत्र-रूपेणोपलभ्यते।

मुद्रिते शब्दकौस्तुभे सिद्धान्तकौमुदीग्रन्थेषु च गोधाकालकादार्वाघाट एकशब्द-रूपेण मध्ये विरतिमन्तरेणैवोपलभ्यते।

अयमत्र निष्कर्षः—

(१) काशिकायां चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रे "बहुलग्रहणं किम्। कृष्णो रात्र्यै हिमवतो हस्ती"ति वचनं न्यासे च तद्व्याख्यानम् "अत्र बहुलग्रहणात् सप्तम्यर्थेऽपि चतुर्थी भवती"ति चिन्त्यम्।

( २ ) सुबोधिन्यां चन्द्रमसे रुदमी रात्र्यै इत्यत्र चन्द्रमसे हिमवते रात्र्यै इति पठनीयमिति प्रतिभाति।

( ३ ) कौस्तुभे कौमुद्यां च गोधा कालका दार्वाघाट इति पृथक् पदानि पठनीयानि।

( ४ ) भैरवमिश्रमतेन चतुर्थ्यर्थे बहुलं छन्दसीति वार्त्तिकं न तु वृत्तिसूत्रम्। इति।

———

# अहो वैषम्यम् !

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

ऋग्वेदे 'यथाकामम्' 'यथावशम्' इत्युभावपि शब्दावुपलभ्येते। तत्र यथावश-शब्दोऽन्तोदात्तः, यथाकामं पुनरुपान्तोदात्तम्।

ब्रह्मणस्पतेरभवद् यथावशं सत्यो मन्यु र्महि कर्मा करिष्यतः। २।२४।१४

यथावशं यथाकामं सत्यः अवितथः अभवत्। स यथा कामयते तथा करोतीत्यर्थः। सायणः।

उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः। ३।४८।४

यथावशं यथाकामम्। सायणः।

इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः। ५।३४।६

यथावशं यथेच्छम्। सायणः।

स्तरीरु त्वद्भवति सूत उ त्वद् यथावशं तन्वं चक्र एषः। ७।१०१।३

यथावशं यथाकामम्। सा०।

तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्व। १०।१५।१४

यथावशं यथाकामम्। सा०।

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम॥ १०।१६८।४

यथाकाममिति पदमुपान्तोदात्तं सकृदेव दशमे मण्डले प्रयुक्तम्। तद्यथा—

न वारण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते॥ १०।१४६।५

अत्रेदमवधेयम्। कामशब्दोऽपीच्छार्थकः, वशशब्दोऽपीच्छार्थकः। प्रकृत्या काम-शब्दोऽप्याद्युदात्तः, वशशब्दोऽप्याद्युदात्तः। उभयोरेव यथाशब्देनाव्ययीभावः। तथापि यथावशशब्दः प्रभूतप्रयोगः समासस्य इति विधानमनुवर्तते। अनुकामं प्रतिकाममित्यव्ययी-भावद्वयमपि शास्त्रनियन्त्रितम्। यथाकामं पुनरुच्छृङ्खलसत्त्वं सर्वान् विधीन् पर्युदस्य परादिश्छन्दसि बहुलमिति बाहुलकस्य दृष्टान्तत्वमास्थाय दशममण्डल एव प्रथमतो रङ्गभूमिमवतरति। अत्राव्यवहितपूर्ववर्तिनो दीर्घत्वमेव बीजं प्रतिभाति। दीर्घत्व-स्पर्धयैवाव्यहितोत्तरवर्तिवर्णः स्वयं दीर्घोऽप्युदात्तत्वमादत्ते। उक्तं च—

"स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति" इति।

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते। इति॥

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ इति च ।

The fire i' the flint shows not till it be struck. *Timon of Athens.*

That carries anger, as the flint bears fire,
Who, much enforced, shows a hasty spark,
And straight is cold again. *Julius Caesar.*

It lies as coldly in him as fire in a flint, which will not show without knocking. *Troilus and Cressida.*

तपस्विनो वशस्य दीर्घस्वर एव नास्ति कथं स स्पर्धेत ? न हि भवति मशको मातङ्गस्य प्रतिस्पर्धी ।

---

# बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति

बेतारजगत्-पत्रिकायां [ Vol. XXIX, No. 20 ] दृश्यते—

पृथिवी शान्तिरन्तरिक्षं शान्तिर्विश्वे शान्तिभिः,
यदिह घोरं, यदिह क्रूरं यदिह पापं तच्छान्तम्,
तच्छिवं तच्छिवं, सर्वमेव शमन्तु नः ।

अधस्तात् स्वरलिप्यामपि दृश्यते श० मन्० तु नः इति ।

अथर्ववेदगतस्य मन्त्रस्य [ १९।९।१४ ] शुद्धः पाठः —

पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः शान्तिभिः । इति ।

[ मञ्जूषाया द्वितीयवर्षस्य प्रथमोऽङ्को द्रष्टव्यः । ]

---

# समीकुरु वैषम्यम्

रविवासरीयानन्दबाजारपत्रिकायाम् ( ४ठा माघ, १३६५, पृः ४, स्तः ७ ) दृष्टं बृहद्भिरक्षरैर्मुद्रितम्—काण्टारवारिर आर्कविशप इति । ततश्च लघुतरैरक्षरैर्मुद्रितम्—काण्टारवारिर आर्कविशपके ये अभिनन्दन जानान हइयाछे इत्यादि । अभिधान-कोशेषु archangel इत्यस्योच्चारणं दृश्यत आर्क् एञ्जेल् इति, ततश्चाव्यवहितोत्तरवर्ति

# अहो वैषम्यम् !

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

ऋग्वेदे 'यथाकामम्' 'यथावशम्' इत्युभावपि शब्दावुपलभ्येते। तत्र यथावश-शब्दोऽन्तोदात्तः, यथाकामं पुनरुपान्तोदात्तम्।

ब्रह्मणस्पतेरभवद् यथावशं सत्यो मन्यु र्महि कर्मा करिष्यतः। २।२४।१४

यथावशं यथाकामं सत्यः अवितथः अभवत्। स यथा कामयते तथा करोतीत्यर्थः। सायणः।

उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः। ३।४८।४

यथावशं यथाकामम्। सायणः।

इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः। ५।३४।६

यथावशं यथेच्छम्। सायणः।

स्तरीरु त्वद्भवति सूत उ त्वद् यथावशं तन्वं चक्र एषः। ७।१०१।३

यथावशं यथाकामम्। सा०।

तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्व। १०।१५।१४

यथावशं यथाकामम्। सा०।

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।

घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम॥ १०।१६८।४

यथाकाममिति पदमुपान्तोदात्तं सकृदेव दशमे मण्डले प्रयुक्तम्। तद्यथा—

न वारण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते॥ १०।१४६।५

अत्रेदमवधेयम्। कामशब्दोऽपीच्छार्थकः, वशशब्दोऽपीच्छार्थकः। प्रकृत्या कामशब्दोऽप्याद्युदात्तः, वशशब्दोऽप्याद्युदात्तः। उभयोरेव यथाशब्देनाव्ययीभावः। तथापि यथावशशब्दः प्रभूतप्रयोगः समासस्य इति विधानमनुवर्तते। अनुकामं प्रतिकाममित्यव्ययीभावद्वयमपि शास्त्रनियन्त्रितम्। यथाकामं पुनरुच्छृङ्खलसत्त्वं सर्वान् विधीन् पर्युदस्य परादिश्छन्दसि बहुलमिति बाहुलकस्य दृष्टान्तत्वमास्थाय दशममण्डल एव प्रथमतो रङ्गभूमिमवतरति। अत्राव्यवहितपूर्ववर्तिनो दीर्घत्वमेव बीजं प्रतिभाति। दीर्घत्व-स्पर्धयैवाव्यहितोत्तरवर्तिवर्णः स्वयं दीर्घोऽप्युदात्तत्वमादत्ते। उक्तं च—

"स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति" इति।

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते। इति॥

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ इति च।

The fire i' the flint shows not till it be struck. *Timon of Athens.*

That carries anger, as the flint bears fire,
Who, much enforced, shows a hasty spark,
And straight is cold again. *Julius Caesar.*

It lies as coldly in him as fire in a flint, which will not show without knocking. *Troilus and Cressida.*

तपस्विनो वशस्य दीर्घस्वर एव नास्ति कथं स स्पर्धेत? न हि भवति मशको मातङ्गस्य प्रतिस्पर्धी।

---

## बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति

बेतारजगत्-पत्रिकायां [ Vol. XXIX, No. 20 ] दृश्यते—

पृथिवी शान्तिरन्तरिक्षं शान्तिर्विश्वे शान्तिभिः,
यदिह घोरं, यदिह क्रूरं यदिह पापं तच्छान्तम्,
तच्छिवं तच्छिवं, सर्वमेव शमन्तु नः।

अधस्तात् स्वरलिप्यामपि दृश्यते श० मन्० तु नः इति।

अथर्ववेदगतस्य मन्त्रस्य [ १९।९।१४ ] शुद्धः पाठः—

पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः शान्तिभिः। इति।

[ मञ्जूषाया द्वितीयवर्षस्य प्रथमोऽङ्को द्रष्टव्यः। ]

---

## समीकुरु वैषम्यम्

रविवासरीयानन्दबाजारपत्रिकायाम् ( ४ठा माघ, १३६५, पृः ४, स्तः ७ ) दृष्टं बृहद्भिरक्षरैर्मुद्रितम्—काण्टारवारिर आर्कविशप इति। ततश्च लघुतरैरक्षरैर्मुद्रितम्—काण्टारवारिर आर्कविशपके ये अभिनन्दन जानान हइयाछे इत्यादि। अभिधान-कोशेषु archangel इत्यस्योच्चारणं दृश्यत आर्क् एञ्जेल् इति, ततश्चाव्यवहितोत्तरवर्ति

archbishop शब्दस्योच्चारणं दृश्यते आर्च् बिशप् इति। वैषम्येणानेन कस्य वा सचेतसश्चेतो नोद्विजेत? अत एव सहृदयया सहयोगिन्यासकृत् आर्क् विशप विलिख्यात्मनः सुविवेकित्वमेव प्रतिपादितम्। जागताखिलवैषम्यस्य मूले कुठाराघात एव साम्प्रतिकानां व्रतं भवतु।

archangel : आर्क् एञ्जेल् :: archbishop : $x$

∴ $x$ = आर्क् बिशप् !!!

राजदेवदूततो राजबिशपस्य विभेद इदानीं दूरीभूतः!

राजदेवदूत-राजबिशपप्रभृतयो राजदन्तादिषु द्रष्टव्याः।

इदानीम् architect शब्दस्योच्चारणं कीदृशं स्यादिति चेत्, उच्यते Archibald शब्दे चकारो वर्तते, अत एव architect शब्देऽपि चकारेण भवितव्यम्।

Archibald : आर्चिबल्ड् :: architect : $x$

∴ $x$ = आर्चिटेक्ट् !!!

---

## रसमञ्जरी

अध्यापकः। अरे कृष्णचन्द्र! किमिदं विलिखितम्?

कृष्णचन्द्रः। "ह्रस्वानां दीर्घानां च" इति।

अध्यापकः। दीर्घानामित्यत्र मूर्धन्यो णकारोऽपेक्ष्यते।

कृष्णचन्द्रः। आर्य! एतत्तु कथमपि न सम्भवति। ह्रस्वस्य पुरतो दीर्घः कथं वा नतिं स्वीकुर्यात्। दन्त्यस्य मूर्धन्यापत्तिर्नतिरिति हि प्रामाणिकाः प्रतिजानते।

अध्यापकः। अरे मूढ, अपि न जानासि वङ्गीयमाभाणकम्—बड़ हवि त छोट ह ( गौरवं कामयसे चेल्लघुर्भव ) इति?

हरिश्चन्द्रः। आर्य! कविकुलचूडामणिना कालिदासेनाप्युक्तम्—

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्॥ इति।

ज्योतिश्चन्द्रः। आर्य, ख्रिस्तधर्मिभिरप्युच्यते—Do justly, walk humbly, love mercy ( न्यायेन व्यवहर, नमनेन विचर, क्षमायां प्रणयी भव ) इति।

अध्यापकः। वत्सौ ममैव संक्षिप्तस्य वचसो भाष्यभूतानि युवयोर्वचनानि। कुशलिनौ भवतम्।

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

March, 1959. | १८८०-शकीय-चैत्रस्य १३श-वर्षस्य सप्तमी संख्या | Vol. XIII No. 7

## नामिक्यो विभक्तयः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

*यत्नेनापादितोऽप्यर्थः कुशलैरनुमातृभिः ।*
*अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ भर्तृहरिः ।*

अष्टाध्यायीमतेन नामिक्यो विभक्तयो यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्रथमा | सुँ | औ | जस् | पञ्चमी | ङसि | भ्याम् | भ्यस् |
| द्वितीया | अम् | औट् | शस् | षष्ठी | ङस् | ओस् | आम् |
| तृतीया | टा | भ्याम् | भिस् | सप्तमी | ङि | ओस् | सुप् |
| चतुर्थी | ङे | भ्याम् | भ्यस् | सम्बोधनम् | सुँ | औ | जस् |

इति ।

### सुँ

तत्र प्रथमैकवचनस्य विभक्तिः सुँरिति। उपदेशेऽजनुनासिक इत् [ १।३।२ ] इति सूत्रेणानुनासिकस्योकारस्येत्संज्ञा । अयं चोकारः सुँप्प्रत्याहारार्थमुच्चारणसौकर्यार्थं चावश्यकः, विशेषणार्थं च । अत्र व्याख्याकर्तां मतान्युद्ध्रियन्ते ।

काशिका । उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः । ४।१।२

न्यासः । तत्र प्रथमैकवचनस्योकार उच्चारणार्थः । अनङ् सौ [ ७।१।९३ ] इति विशेषणार्थः कस्मान्न विज्ञायते ? व्यावर्त्याभावात् ।

पदमञ्जरी। तत्र प्रथमैकवचनस्योकार एतत्तदोः सुलोपो हल्ङ्याब्भ्यो दीर्घात् सुतिसीत्यत्र [ ६।१।१३२,६।१।६८ ] केवलस्य व्यञ्जनस्योच्चारयितुमशक्यत्वादु-च्चारणार्थः। [ स्वौजसिति ] अत्र तु सूत्रे औकारोपश्लेषाच्छक्यते सकारमात्रमुच्चार-यितुम्। अनङ्साविंत्यत्र विशेषणार्थस्तु न भवति, व्यावर्त्याभावात्। न चानङ्सी-त्युच्यमाने वर्णनिर्देशे च तदादिविधिसम्भवात् सप्तमीबहुवचनेऽतिप्रसङ्गः सर्वनामस्थान इत्यनुवृत्तेः।

शब्दकौस्तुभः। प्रथमैकवचन उकार एतत्तदोः सुलोप इत्यत्रोच्चारणार्थः। केवल-व्यञ्जनस्य तु तत्रोच्चारणं क्लिष्टं स्यात्। अर्वणस्त्रसावित्यत्र विशेषणार्थो वा। असी-त्युक्तेऽसकारादावित्यर्थः स्यात्। तथाच "वाजमर्वत्सु पय उस्रियासु" [ ऋ० सं० ५। ८५।२ ] इति न सिध्येत्। अनङ् सावित्यादौ विशेषणार्थस्तु न। सीत्युक्तेऽपि सर्वनामस्थानग्रहणानुवृत्त्याभिमतसिद्धेः।

किमिति स्वरान्तरं वर्जयित्वोकार एवानुबन्ध आसञ्जितो महर्षिणेति साम्प्रतं विचारपदवीमवतरति। तत्रामुखे प्रतीयते सुशब्दः शोभनार्थकः। अत एव माङ्गलिक आचार्यः सुशब्दं विभक्तीनामादावुपन्यस्यति। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च समृद्धि-युक्ता यथा स्युः। यद्यप्यत्र सानुनासिकः सुँशब्दो न पुनः सुः, तथाप्यानुनासिक्यस्य गुणत्वाद् गुणानां चाभेदकत्वान्मङ्गलार्थत्वं न व्यपैति।

किञ्च ससजुषो रुः [ ८।२।६६ ] इति सूत्रेण प्रथमैकवचनविभक्तिस्थाने प्रायेण र्वादेशो भवति, रौ चोकारो जागर्ति, अत एव स्थानिन्यप्युकार आसज्यते। रोः स्थाने कदाप्युकारो भवति (देवस् अत्र देवोऽत्र), कदाचिच्च रेफः (कविस् अयम् कविरयम्), अत एव रेफोकारयोः संयोगेन रुरित्यादेशो विहितो महर्षिणा। रोरुकारानु-रोधेन प्रथमैकवचनेऽप्युकारो विहितः।

यद्यपि सप्तमीबहुवचनविभक्तिरप्यनुबन्धविनिर्मुक्ता सुरित्येव भवति, तथापि प्रथमैक-वचनविभक्तेः सानुनासिकत्वात् सङ्करो न भवति। सावेकाचस्तृतीयादिर्विभक्तिः [ ६।१।१६८ ] इति सूत्रगतं भाष्यं प्रौढिवादमात्रमवबोद्धव्यम्। अत एव हरदत्ते-नोक्तम्—प्रथमैकवचने तु त्वाहौ साविति त्वादेशे कृते युष्मच्छब्द एकाज् भवति। शेषे लोपे कृतेऽकारान्तत्वात् साववर्णेति [ ६।१।१८२ ] प्रतिषेधो भविष्यति। तदिह प्रथमैकवचनाग्रहणे को हेतुरिति चिन्त्यम्। इति।

कातन्त्रे तदनुसारिणि मुग्धबोधे च सोः स्थाने सिरित्युपलभ्यते। जसि-शस्योर-नुरोधेन ङसीत्यत्रेकारस्तदनुरोधेन च साविकारः।

## जस् । शस् ।

यद्यपि प्रथमाद्वितीययोर्बहुवचने विभक्तिरसेव तथापि प्रथमायां जसिति द्वितीयायां च शसिति चाम्नायते। तत्र च बीजं रूपभेदः। तथाहि देवशब्दस्य प्रथमाबहुवचने देवा इति रूपम्, द्वितीयाबहुवचने च देवानिति। एवमन्यत्रापि। कथं वा प्रथमैकवचने जकारोऽनुबन्धो द्वितीयैकवचने च शकार इति चेत्, उच्यते। महर्षिणा यास्केन स्मर्यते—षड् भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति [ निरुक्त १।२ ]। महाभाष्येऽप्युक्तम्—षड् भावविकारा इति ह स्माह वार्ष्यायणिरिति [ १।३।१ ]। एषां च मुख्यौ जन्मनाशौ। तत्र प्रथमभावविकारे जन्मनि प्रथमो वर्णो जकारः, स च चवर्गस्य तृतीयो वर्णः। अत एव प्रथमाया विभक्तेर्बहुवचने जकार आसञ्जितः। अन्तिमश्च भावविकारो नाश इति। तत्र चान्ते शकारो वर्तते, अत एव द्वितीयाया बहुवचने शकार आसञ्जितः।

जसि जुसि च जकारोऽनुबन्धो दृश्यते। उभयत्रापि प्रथमत्वं बहुत्वं च स्पष्टमेव। जसिति प्रथमाबहुवचनविभक्ते रूपम्। जुसित्यपि प्रथमपुरुषबहुवचनस्यादेशः। शकारः प्रायेण सर्वार्थकविश्वशब्दस्यांशः सर्वबोधकोऽनुबन्धः। अत एव तिङ्शित् सार्वधातुकम् इति, अनेकाल्शित् सर्वस्येति चोपपद्यते। शसि पुनः शकारो जन्मानन्तरभाविनो नाशस्यैकदेशः।

जस् प्राचीनेषु व्याकरणेषु जसिरूपेणावर्ततेति प्रतीयते। अष्टाध्यायीगतानि वैदिकसूत्राणि प्रायेण पूर्वाचार्यग्रन्थेभ्योऽविकलान्येवोद्धृतानीत्यभियुक्ता आशेरते। रात्रेश्चाजसौ [ ४।१।३१ ] आज्जसेरसुक् [ ७।१।४० ] इत्यत्र जसिरिति दृश्यते। तत्रान्तिम-सूत्रस्य न्यासे जिनेन्द्रबुद्धिनोक्तम्—जसेरिति पूर्वाचार्यनिर्देशः। पूर्वाचार्या हि जसिरित्येवं विहितवन्तः। इति। हरदत्तेनापि पदमञ्जर्यामुक्तं जसेरिति पूर्वाचार्यानुरोधेन निर्देशः। इति। जश्शसोः शिः [७।१।२० ] इति सूत्रेण वैयाकरणैर्जसः शसश्च स्थाने श्यादेशो विधीयते। तत्र चान्त इकारो वर्तते तदनुसारेण स्थानिनोरपीकारः सन्निवेश्यते। समानन्यायेन शसपि शसिरूपेणावर्ततेति प्रतीयते।

अत्र न्यासः। जसो जकारोऽसन्दिग्धोच्चारणार्थः। असति हिं तस्मिन्नौकारस्यावादेशे सन्देहः स्यात् कीदृशस्य प्रत्ययस्योच्चारणमिति। तत्र व्याख्यानं कर्तव्यमापद्यते। अथ जसः शी [ ७।१।१७ ] इत्यत्र विशेषणार्थः कस्मान्न विज्ञायते? असः शीत्युच्यमानेऽतिप्रसङ्गाभावात्।

शसः शकार औटष्टकारस्य खरि च [ ८।४।५५ ] इति चर्त्वेनासन्दिग्धोच्चारणार्थः। शकारः सन्देहनिरासार्थः, इतरथा हि औडसित्युच्यमाने सन्देहः स्यात्

पदमञ्जरी। तत्र प्रथमैकवचनस्योकार एतत्तदोः सुलोपो हल्ङ्याब्भ्यो दीर्घात् सुतिसीत्यत्र [ ६।१।१३२,६।१।६८ ] केवलस्य व्यञ्जनस्योच्चारयितुमशक्यत्वादुच्चारणार्थः। [ स्वौजसिति ] अत्र तु सूत्रे औकारोपश्लेषाच्छक्यते सकारमात्रमुच्चारयितुम्। अनडुहः साविदत्यत्र विशेषणार्थस्तु न भवति, व्यावर्त्याभावात्। न चानडुःसीत्युच्यमाने वर्णनिर्देशे च तदादिविधिसम्भवात् सप्तमीबहुवचनेऽतिप्रसङ्गः सर्वनामस्थान इत्यनुवृत्तेः।

शब्दकौस्तुभः। प्रथमैकवचन उकार एतत्तदोः सुलोप इत्यत्रोच्चारणार्थः। केवलव्यञ्जनस्य तु तत्रोच्चारणं क्लिष्टं स्यात्। अवर्णस्त्रसावित्यत्र विशेषणार्थौ वा। असीत्युक्तेऽसकारादावित्यर्थः स्यात्। तथाच "वाजमर्वत्सु पय उस्रियासु" [ ऋ० सं० ५।८५।२ ] इति न सिध्येत्। अनड् सावित्यादौ विशेषणार्थस्तु न। सीत्युक्तेऽपि सर्वनामस्थानग्रहणानुवृत्त्याभिमतसिद्धेः।

किमिति स्वरान्तरं वर्जयित्वोकार एवानुबन्ध आसञ्जितो महर्षिणेति साम्प्रतं विचारपदवीमवतरति। तत्रामुखे प्रतीयते सुशब्दः शोभनार्थकः। अत एव माङ्गलिक आचार्यः सुशब्दं विभक्तीनामादावुपन्यस्यति। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च समृद्धियुक्ता यथा स्युः। यद्यप्यत्र सानुनासिकः सुँशब्दो न पुनः सुः, तथाप्यानुनासिक्यस्य गुणत्वाद् गुणानां चाभेदकत्वान्मङ्गलार्थत्वं न व्यपैति।

किञ्च ससजुषो रुः [ ८।२।६६ ] इति सूत्रेण प्रथमैकवचनविभक्तिस्थाने प्रायेण र्वादेशो भवति, रौ चोकारो जागर्ति, अत एव स्थानिन्यप्युकार आसज्यते। रोः स्थाने कदाप्युकारो भवति ( देवस् अत्र देवोऽत्र ), कदाचिच्च रेफः ( कविस् अयम् कविरयम् ), अत एव रेफोकारयोः संयोगेन रुरित्यादेशो विहितो महर्षिणा। रोरुकारानुरोधेन प्रथमैकवचनेऽप्युकारो विहितः।

यद्यपि सप्तमीबहुवचनविभक्तिरप्यनुबन्धविनिर्मुक्ता सुरित्येव भवति, तथापि प्रथमैकवचनविभक्तेः सानुनासिकत्वात् सङ्करो न भवति। सावेकाचस्तृतीयादिर्विभक्तिः [ ६।१।१६८ ] इति सूत्रगतं भाष्यं प्रौढिवादमात्रमवबोद्धव्यम्। अत एव हरदत्तेनोक्तम्—प्रथमैकवचने तु त्वाहौ साविति त्वादेशे कृते युष्मच्छब्द एकाज् भवति। शेषे लोपे कृतेऽकारान्तत्वात् साववर्णेति [ ६।१।१८२ ] प्रतिषेधो भविष्यति। तदिह प्रथमैकवचनाग्रहणे को हेतुरिति चिन्त्यम्। इति।

कातन्त्रे तदनुसारिणि मुग्धबोधे च सोः स्थाने सिरित्युपलभ्यते। जसि-शस्योरनुरोधेन इसीत्यत्रेकारस्तदनुरोधेन च साविकारः।

## जस् । शस् ।

यद्यपि प्रथमाद्वितीययोर्बहुवचने विभक्तिरसेव तथापि प्रथमायां जसिति द्वितीयायां च शसिति चाम्नायते। तत्र च बीजं रूपभेदः। तथाहि देवशब्दस्य प्रथमाबहुवचने देवा इति रूपम्, द्वितीयाबहुवचने च देवानिति। एवमन्यत्रापि। कथं वा प्रथमैकवचने जकारोऽनुबन्धो द्वितीयैकवचने च शकार इति चेत्, उच्यते। महर्षिणा यास्केन स्मर्यते—षड् भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति [ निरुक्त १।२ ]। महाभाष्येऽप्युक्तम्—षड् भावविकारा इति ह स्माह वार्ष्यायणिरिति [ १।३।१ ]। एषां च मुख्यौ जन्मनाशौ। तत्र प्रथमभावविकारे जन्मनि प्रथमो वर्णो जकारः, स च चवर्गस्य तृतीयो वर्णः। अत एव प्रथमाया विभक्तेर्बहुवचने जकार आसञ्जितः। अन्तिमश्च भावविकारो नाश इति। तत्र चान्ते शकारो वर्तते, अत एव द्वितीयाया बहुवचने शकार आसञ्जितः।

जसि जुसि च जकारोऽनुबन्धो दृश्यते। उभयत्रापि प्रथमत्वं बहुत्वं च स्पष्टमेव। जसिति प्रथमाबहुवचनविभक्ते रूपम्। जुसित्यपि प्रथमपुरुषबहुवचनस्यादेशः। शकारः प्रायेण सर्वार्थकविश्वशब्दस्यांशः सर्वबोधकोऽनुबन्धः। अत एव तिङ्शित् सार्वधातुकम् इति, अनेकाल्शित् सर्वस्येति चोपपद्यते। शसि पुनः शकारो जन्मानन्तरभाविनो नाशस्यैकदेशः।

जस् प्राचीनेषु व्याकरणेषु जसिरूपेणावर्ततेति प्रतीयते। अष्टाध्यायीगतानि वैदिकसूत्राणि प्रायेण पूर्वाचार्यग्रन्थेभ्योऽविकलान्येवोद्धृतानीत्यभियुक्ता आशेरते। रात्रेश्चाजसौ [ ४।१।३१ ] आज्जसेरसुक् [ ७।१।४० ] इत्यत्र जसिरिति दृश्यते। तत्रान्तिम-सूत्रस्य न्यासे जिनेन्द्रबुद्धिनोक्तम्—जसेरिति पूर्वाचार्यनिर्देशः। पूर्वाचार्या हि जसिरित्येवं विहितवन्तः। इति। हरदत्तेनापि पदमञ्जर्यामुक्तं जसेरिति पूर्वाचार्यानुरोधेन निर्देशः। इति। जश्शसोः शिः [७।१।२० ] इति सूत्रेण वैयाकरणैर्जसः शसश्च स्थाने श्यादेशो विधीयते। तत्र चान्त इकारो वर्तते तदनुसारेण स्थानिनोरपीकारः सन्निवेश्यते। समानन्यायेन शसपि शसिरूपेणावर्ततेति प्रतीयते।

अत्र न्यासः। जसो जकारोऽसन्दिग्धोच्चारणार्थः। असति हि तस्मिन्नौकारस्यावादेशे सन्देहः स्यात् कीदृशस्य प्रत्ययस्योच्चारणमिति। तत्र व्याख्यानं कर्तव्यमापद्यते। अथ जसः शी [ ७।१।१७ ] इत्यत्र विशेषणार्थः कस्मान्न विज्ञायते? असः शीत्युच्यमानेऽतिप्रसङ्गाभावात्।

शसः शकार औटष्टकारस्य खरि च [ ८।४।५५ ] इति चर्त्वेनासन्दिग्धोच्चारणार्थः। शकारः सन्देहनिरासार्थः, इतरथा हि औडसित्युच्यमाने सन्देहः स्यात्

किं टकारस्येदमुच्चारणमुत डकारस्य। तत्र डकारोच्चारणाट्टिलोपः स्यात्। ननु च सत्यपि शकारे भवितव्यमेव सन्देहेन—किमिदं कृतचर्त्वस्य डकारस्योच्चारणं टकारस्य वेति। नैतदस्ति। यदि हि डकारस्य स्याच्छकारोच्चारणमनर्थकं स्यात्। अथ तस्माच्छसो नः पुंसि [ ६।१।१०३ ] इत्यत्र विशेषणार्थः शकारः कस्मान्न भवति? असग्रहणेऽपि सत्यतिप्रसङ्गाभावात्।

अत्र प्रौढमनोरमा। जश्शसोर्जकारशकारौ जसः शी [ ७।१।१७ ] तस्माच्छसो नः [ ६।१।१०३ ] इत्यनयोर्विषयविभागार्थौ। अन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेन्न। जसो जकाराभाव औ इत्यस्याव् स्यात्, ततश्च प्रत्ययस्य वकारान्ततापि सम्भाव्येत। एवं शसः शकाराभाव औटो ङित्त्वं सम्भाव्येत। [ तथा च तेजसी इत्यादौ टिलोपः स्यात्। तत्त्वबोधिनी। ] अतोऽसन्देहार्थं तत्करणौचित्यात्।

## औट्

प्रथमाद्विवचने द्वितीयाद्विवचने च रूपं समानम्, अतस्तयोर्विभक्तिभेदो न युज्यते इति चेन्न। इदम्-शब्दस्यान्वादेशे प्रथमाद्विवचने इमाविति, द्वितीयाद्विवचने पुनः एनाविति रूपं भवति। ( द्वितीयाटौस्स्वेनः २।४।३४। ) एवमेव ऋग्वेदे युष्मच्छब्दस्य प्रथमाद्विवचने युवमिति भवति, द्वितीयाद्विवचने पुनर्युवामिति। अतः प्रथमाद्वितीया-द्विवचनविभक्त्योः रूपभेदो न दोषाय।

औटष्टकारः सुँट्प्रत्याहारार्थः। सर्वनामस्थानविभक्तय एव सुँट्प्रत्याहारेण क्रोडीक्रियन्ते, अत एव शकार एवानुबन्धो युज्यते। परम् अम् औश् शसित्यु-च्यमाने औसः सकार एवात्र शकारभावमापन्नः, विभक्तिस्त्वौस् एवेति कदाचिद् भ्रमः स्यात्, अतष्टकार एव आसञ्जितः। अयं च प्रथमः प्रत्याहारः, द्वितीयश्च सुँप् इति। टकारश्च मूर्धन्येषु प्रथमः, मूर्धापि शरीरावयवेषु प्रथमः, अत एव टकारोऽत्रानुबन्धः।

कातन्त्रव्याकरणे प्रायेण संज्ञा अन्वर्था दृश्यन्ते, परं तत्रापि सुँट्प्रत्याहारच्छायया घुट्संज्ञा स्वीकृता। घकारो हि प्रथमवर्गीयश्चतुर्थवर्णः, घुटा च सु औ जस् अम् एताश्चतस्रो विभक्तयो बोध्यन्ते, अतोऽत्र घकारेण निर्देशो युक्त एव। अथवा कातन्त्रे घुकारो लघुशब्दस्य प्रतीकः, लाघवायैव प्रत्याहारस्य प्रवृत्तेः।

## टा

टकारः खलु तृतीयवर्गीयः प्रथमो वर्णः, अतस्तस्य तृतीयैकवचनेऽनुबन्धतयासञ्जनं युक्तमेव। अत्र टकारो विशेषणार्थः, द्वितीयाटौस्स्वेन इत्यत्र द्वितीयौस्स्वेन इति कृते

तृतीयैकवचनस्याप्रतिपत्तेः। मन्त्रेष्वाङ्यादेरात्मनः [ ६।४।१४२ ] आङि चापः [ ७।३।१०५ ] आङो नास्त्रियाम् [ ७।३।१२० ] इत्यादिषु तृतीयैकवचनबोधनाय आङ्शब्दः प्रयुक्तः पाणिनिना। एतस्माच्चावसीयते पूर्वाचार्यैः कैश्चिट् टा इत्यस्य स्थान आङिति प्रयुज्यते स्म। उक्तञ्च न्यासकृता—आङिति। तृतीयैकवचनस्यैषा संज्ञा पूर्वाचार्यैर्विहिता। इति। ङे ङसि ङस् ङीति चतसृषु ङकारो वर्तते, अतस्तृतीयैकवचनेऽपि ङकार आसञ्जितः। व्यञ्जनादिस्वरान्तमेकमेव प्रकृतेर्विकृतिरूपमक्षरं पाणिनये न रोचते स्म, अत एव तथाविधस्थले ङः ङि इत्यादिकमप्रयुज्य आङः आङि इत्यादिकं प्रयुज्यते। अत एव ङा इत्यविधायाङ् विधीयते।

## ङे

चतुर्थीपञ्चमीषष्ठीसप्तमीनामेकवचनेषु ङितो विभक्तयो दृश्यन्ते। न्यङ्शब्दस्यैव प्रतीको ङकारः। न्यङ्नीचखर्वह्रस्वाः स्युरित्यमरवचनान् न्यङ्शब्दः खर्वार्थकः। चतुर्थ्येकवचनादिषु विभक्तिषु प्रायेण गुणादिप्रतिषेधादकारलोपात् सम्प्रसारणाच्च खर्वत्वं भवति। अत एवासु ङकारोऽनुबन्धः।

## ङसि, ङस्

यद्यपि प्रायेण पञ्चमीषष्ठ्येकवचनयो रूपे समाने तथाप्यजन्तपुंलिङ्गनपुंसकलिङ्गानां रूपेषु पार्थक्यमुपलभ्यत इति ङसिङसोर्वैविध्यं युज्यत एव। जश्शसोः शिरिति शेरनुरोधेन जसीत्यत्रेकारः समागतः, तदनुसारेण च ङसीत्यत्रापीकारः सन्निविष्टः। किञ्च ङेराम् नद्याम्नीभ्यः [ ७।३।११६ ] इति सूत्रेण ङेः स्थाने आम् भवति, टाङसिङसामिनात्स्या इति सूत्रेण च ङसेः स्थान आत् भवति। उभयत्राप्यादेश आकारो दृश्यत इति स्थानिन्यपीकारो युज्यते। किञ्च, इकारः पञ्चम्येकवचने संयोज्यते न पुनः षष्ठ्येकवचने विभक्तिशरीरस्याविकारवाञ्छया। तथाहि ङसि भ्याम् भ्यस् ङस् ओस् आम् इति पाठे विभक्तयो विस्पष्टमेवानुभूयन्ते। ङस् भ्याम् भ्यस् ङस्योसाम् इति पाठे पुनः ङस्योसित्यत्र सन्धिजो विकारः स्यात्। यथासम्भवं चाविकृतमेव रूपमुपास्यते वर्ज्यते च विकारः।

अत्र न्यासः। चतुर्थ्येकवचनादिषु ङकारो घेर्ङिति [ ७।३।१११ ] इति विशेषणार्थः। पञ्चम्या एकवचने इकारः षष्ठ्येकवचनाद् विशेषणार्थः। इतरथा हि युष्मदस्मद्भ्यां ङसोऽश् [ ७।१।२७ ] इत्यत्र पञ्चम्येकवचनस्यापि ग्रहणं स्यात्। इति।

सप्तम्येकवचने पकारः सुँप्प्रत्याहारार्थः। पृथुशब्दस्य पीनशब्दस्य पीवञ्छब्दस्य वा प्रतीकः पकारः। अत एव पित् प्रत्ययः सगुण इत्युच्यते। अत एव च पितोऽनुदात्ता

भवन्ति। सुँपोऽपि प्रायेणानुदात्ता एव। अत एव पकारेणानुबन्धेन सुँप्प्रत्याहारः, अनुदात्तौ सुँप्पितौ [ ३।१।४ ] इति च सूत्रम्। इति शम्।

---

# मृत्योर्मारकाः

आसन् फुल्लेन्दीवरपत्तने त्रयः पुरुषाः। ते खल्वहर्निशं दुष्कृतमेवाचरन्ति स्म। कदाचित् काननभूमौ पथिकान् निहत्य तेषां सर्वस्वं लुण्ठन्ति, कदाचित् स्त्रियोऽपहरन्ति, कदाचिदन्यान्यपि बहुविधानि दुष्कार्याणि कुर्वन्ति। सर्वेषां व्यसनानां लीलानिकेतनान्यासन्निमे दुरात्मानः। एकदाट्टशूले निषण्णा मद्यं पिबन्त इमे मरणसूचकं हरिध्वनिं शुश्रुवुः। ततस्तेषामेकः प्रेष्यमपृच्छत्, कोऽयं मृत इति। स प्रत्युवाच, अयं खलु भवतां चिरसुहृद् रात्रौ मनोहत्य मैरेयं पिबन् मरणसमाख्येन तूष्णीकेन स्तेनेन निहत इति। अट्टशूलाध्यक्षेणापि परिचारकस्य वचनम् "एषमो बहवो नराश्च नार्यश्च शिशवश्चानेनैव मरणहतकेन सन्निहिते ग्रामे व्यापादिता" इत्युक्त्वा समर्थितम्।

तदाकर्ण्य त्रयस्ते दुरात्मानो मरणमन्विष्य मारयितुं विनिबद्धपरिकरास्तस्मै ग्रामाय प्रतस्थिरे। मध्येमार्गं च ते जरन्तमेकं दृष्ट्वावदन्, अरे वृद्ध, ब्रूहि नः कुत्रास्तेऽयं मरणतस्करो यः सर्वान्नः सुहृदो नाशयतीति। स उवाच, आर्या एतावांश्चेद् भवतामाग्रहो मरणसन्दर्शने जिह्मेनानेन मार्गेण गम्यताम्। अमुष्मिन् कानने वटवृक्षस्याधस्तादसौ वर्तत इति।

तच्छ्रुत्वा ते दुरात्मानो द्रुततरं गत्वा वटवृक्षमासाद्य तन्मूले सुवर्णराशीन् ददृशुः। ततश्च विस्मृतमरणान्वेषणाध्यवसायास्ते तत्रैव निषेदुः। तेषाञ्चैक उवाच, अहो प्रसन्नोऽद्यास्माकं विधिः! इयता सुवर्णेन सुखेनोल्लासेन च वयमामरणं वर्तिष्यामहे। परं रात्रावेवायं हाटकराशिर्गृहं नेतव्यः, अन्यथा चौरव्यपदेशेनारक्षिकपुरुषा अस्मान् गृह्णीयुरिति।

ततश्च तेषामेकेन नगरं गत्वा खाद्यं मद्यं चानेयम् अपराभ्यां च हिरण्यं रक्षणीयमिति स्थिरीकृतम्। प्रस्थिते चैकस्मिन् द्वाभ्यां मन्त्रितम्, त्रिभागाद् द्विभागः श्रेयान्। तत् प्रत्यागतमंशहारं मारयित्वाऽऽवामेव सर्वं वैभवमात्मसात्करिष्याव इति।

अवसरे चास्मिन् नगरगामी पुरुषो व्यचिन्तयत्, अर्धात् पूर्णं श्रेयः। तत् किमिति सुवर्णस्य भागौ दुरात्मभ्यामाभ्यां प्रदेयौ? मयैव समग्रं स्वीकरिष्यते

इति। एवं निश्चित्य तेन चषकत्रितये मद्यं गृहीतम्। तत्र च द्वयोर्विषं मिश्रितम्, यथा तत्पानेन सुहृदोर्जीवनावसानं स्यात्।

ततश्च मद्यादिकमादाय प्रत्यावृत्तोऽसौ नर्मच्छलेन खड्गघातेन निहतो मित्रेणैकेन। ततश्च शेषौ सुहृदौ प्रमोदेन पानकर्मणि प्रवृत्तौ विषसंमिश्रेण मद्येन परलोकं नीतौ। एवमेव त्रिभिरेवान्वेषणफलं लब्धम्—मरणं साक्षात्कृतम्।

---

## विशेषतो द्रष्टव्यम्

काञ्चनकुञ्चिकप्रकरणस्य समाप्तिर्भविष्यति वैशाखाङ्के। अभिनवं च नाटकं श्रीमद्विष्णुपद्मभट्टाचार्यविरचितमचिरादेव प्रकाशयिष्यते।

---

## वेदान्तविमर्शः

[ श्रीचारुकृष्णदर्शनाचार्यः ]

ज्ञानप्रसादेन विशुद्धसत्त्व"स्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतेर्यथा सन्न्यासिनां ध्यानस्यैव चित्तशोधकत्वं तथा "धर्मेण पापमपनुदति" "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।" अविद्यया कर्मणा। "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते।" "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।" इति श्रुतिस्मृतिभ्यां कर्मणामपि नित्यनैमित्तिकानां तथात्वाद् गृहस्थादेर्ध्यानं कर्म च कर्त्तव्यम्। ताभ्यां क्षिप्रमेव चित्तस्य संशुद्धेः क्षिप्रमेवोत्पद्यते दर्शनं ब्रह्मणः। "योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति" इति स्मृतेः। योगोऽत्र कर्म।

"ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्मयोगेण चापरे॥"

इति भगवता ध्यानादिवत् कर्मणोऽपि स्वातन्त्र्येणात्मदर्शनहेतुत्वोक्तेश्च। आह च योगियाज्ञवल्क्यः—

"कर्त्तव्यमितिविध्युक्तं कामसङ्कल्पवर्जितम्।
येन तत् क्रियते सम्यग् ज्ञानयुक्तं निवर्त्तकम्॥
निवर्त्तकं हि पुरुषं निवर्त्तयति जन्मतः।
प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम्॥
वर्णाश्रमोक्तं सर्वत्र विध्युक्तं कामवर्जितम्।
विधिवत् कुर्वतस्तस्य मुक्तिर्गार्गि करे स्थिता॥" इति।

ननु यस्य कर्मणैव चित्तस्य संशुद्धिस्तस्य शुद्धेन मनसा ब्रह्मसाक्षात्कारान्मोक्षप्राप्तेरलं श्रवणेनेति चेन्न, शुद्धेऽपि चित्ते स्यादेव श्रवणापेक्षा खधूपस्य सुकल्पितस्याप्यग्निसंयोगापेक्षावत्, यथोपकोसलस्य यथा वा जनकस्य, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "आचार्यवान् पुरुषो वेद"

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥"

इति श्रुतिस्मृतिभ्याम् । ध्यानस्य तु चित्तशुद्धिमात्रोपयोगित्वान्नापेक्षा। सन्न्यासिनां पुनरसम्यक्शुद्धानामस्त्येव ध्यानापेक्षा, तेषां तस्यैव शुद्धिहेतुत्वात् "ज्ञानप्रसादेन विशुद्धसत्त्व" इति श्रुतेः। गृहस्थादेस्तु द्रुतमेव ब्रह्मदर्शनप्राप्तये ऽस्त्येव ध्यानस्याप्यपेक्षेति ज्ञेयम् ।

जातेऽप्यात्मदर्शने "यावज्जीवमग्निहोत्रं जुहोति" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" "अहरहः सन्ध्यामुपासीते"तिश्रुतिस्मृतिभ्यां "वीरहा वा एष देवानां योऽग्निमुद्वासयते"इतिनिन्दाश्रुतेश्च कर्म यावज्जीवमेव कर्तव्यं, यावदायुषं कर्माचरणादावृत्तिरहितब्रह्मलोकगत्या ब्रह्मप्राप्तेरुक्तेर्ज्ञानेन कर्मणा चात्मसाक्षात्कारद्वारा संपाद्यते मोक्षः कर्मिणेति प्राप्तम् । तदुक्तमाचार्य्येण "अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनादि"ति ।

अतः सांख्यसम्मतजीवन्मुक्तस्यापि भगवता कर्माचरणमुक्तम्,

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥" इति ।

योगियाज्ञवल्क्योऽप्याह—

"ज्ञानेनैव सहैतेन नित्यकर्माणि कुर्वतः ।
निवृत्तफलसङ्गस्य मुक्तिर्गार्गि करे स्थिता ॥" इति ।

"प्लवा ह्येते अदृढा यज्ञरूपाः" इति "यत् कर्मिणो न प्रवेदयन्तीति" इति च श्रुतिः सकामकर्मप्रतिषेधपरा "रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते" इत्युत्तरश्रुतेः ।

"नान्यैर्देवैस्तपसा कर्मणा वे"ति च केवल-कर्म-प्रतिषेधपरा ज्ञेया ।

अग्निहोत्रादेर्न विविदिषामात्रसाधनत्वं किन्तु जाते ऽप्यात्मदर्शने तत्सं संरक्षणार्थमेव यावज्जीवं तत् कार्यम् । अत एवाचार्येण ज्ञानेन पुण्यपापयोरश्लेषनाशप्रकरणे अग्निहोत्रादेर्नित्यस्याप्यश्लेषादनुष्ठानाभावमाशङ्क्य तत्र प्रवर्त्तयितु"मग्निहोत्रादि तु तत्कार्यायैवे"ति सूत्रितम् । अग्निहोत्रादि तु नित्यं कर्म यावज्जीवं ज्ञानिना कर्त्तव्यं "यावज्जीवमग्निहोत्रं जुहोति" "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति यावज्जीवंकर्त्तव्यत्वदर्शनात्, अन्यथा नित्याकरणाच्चित्तमालिन्याज्

ज्ञानव्याघातापत्तेरिति निरङ्कुशज्ञानसन्तानरक्षार्थमेवाग्निहोत्रादि नित्यं कर्म ज्ञानिनापि यावज्जीवं कर्त्तव्यमित्यर्थः। कर्मणामश्लेष-श्रुतिस्तु कर्मान्तरपरा, अग्निहोत्रादेरन्यापि साधुकृत्यास्ति, तस्या एवासंश्लेषः सुहृत्संक्रमदर्शनात्। तथाच श्रुतिः—"सुहृदः साधुकृत्यामुपयन्ति द्विषन्तः पापकृत्या"मिति। स्मृतिश्च—

"प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्॥" इति।

तदेतत् सूत्रं "ततोऽन्यापि ह्येकेषामि"ति। "अत एवाग्नीन्धनाद्यनपेक्षे"ति च सन्न्यासिपरम्, तथाहि यज्ञादेर्विद्यासाधनत्वस्य शास्त्रप्राप्तत्वात् तदभावे कथमूर्ध्वरेतसां विद्या तत्राह—अत एवेति। पूर्वं ताव"दूर्ध्वरेतःसु च शब्देही"ति सूत्रेण वेदबोधितानां सन्न्यासिनां चात्मज्ञानदर्शनान्न कर्माङ्गत्वं विद्याया इति दर्शितं, तदुद्दिश्यैवोक्तं सूत्रमिदम्। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति प्रतिषेधसत्त्वेऽपि यथा शास्त्रप्रामाण्यादेव तुर्याश्रमसद्भावस्तथा यज्ञादे विद्यासाधनत्वेऽपि शास्त्रप्रामाण्यादेवोर्ध्वरेतसां कर्माभावादग्नीन्धनसाध्याग्निहोत्रादेरपेक्षाभावो विद्यायामिति न वैतथ्यं सूत्रस्य ज्ञ यम्।

न च विषयवैराग्यादेव कर्माभावः, जातेऽपि वैराग्ये निष्कामकर्माचरणसम्भवात्, दर्शनाच्च मुनीनां व्यासात्रिपराशरादीनाम्। ध्यानानुरागाद् वा सन्न्यासिसंसर्गाद् वा कर्मासामर्थ्याद् वा निरीश्वरसांख्यप्रसङ्गाद् वा पुत्रादिभिर्विरोधाद् वा पत्नीवियोगाद् वा सन्न्यासो विप्राणाम्। सन्न्यासिनामनवरतध्यानस्यैव चित्तशुद्धेर्हेतुत्वात् कर्मानपेक्षा, "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतेः "ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः" इति स्मृतेश्च। गृहस्थादेरस्त्येव तु कर्मापेक्षा विद्यायां "यज्ञेन दानेन तपसा नाशकेने"ति श्रुतेः। तदुक्तं "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति। यथाऽश्वेन गच्छतीति तृतीययाऽश्वस्य करणत्वं तथा यज्ञेनेतितृतीयाश्रुत्या यज्ञादेर्विद्यासाधनत्वं श्रुत्यैव दर्शितमित्यर्थः। सन्न्यासिनां ध्यानवद् गृहस्थादे र्यज्ञादीनामात्मसाक्षात्कारहेतुत्वं भगवताप्युक्तम्—

"ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्मयोगेण चापरे॥" इति।

याज्ञवल्क्येनापि वेदाध्ययनादेर्ज्ञानहेतुत्वमुक्तं यथा—

"वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः॥" इति

नात्र सन्न्यासस्य नामापि। अत"स्तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने"ति श्रुतेरर्थवादत्वकल्पनं दुराग्रहग्रहिलत्वमेव सूचयति। तथा सति ब्रह्म "वे

भवति" "अहं ब्रह्मास्मी"त्यादेरप्यर्थवादत्वापत्तिः। अग्निजननयोग्यत्वाद् यदि दण्डस्य घटं प्रति कारणत्वं तदा किमु वक्तव्यं यावज्जीवं चित्तवैशद्याधायकस्य यज्ञादेरात्मसाक्षात्-कारहेतुत्वमिति। यथा चक्रादिसहकाराज्जायते घटाकारता मृदि तथाऽग्निहो-त्रादिपुण्यसहकाराज्जायते ब्रह्मसाक्षात्काराकारा वृत्तिश्चेतसीत्यग्निहोत्रादेः कारणत्वं ब्रह्मज्ञाने, तदिदं सुष्ठूक्तम् "अग्निहोत्रादि तु तत्कार्यायैवे"ति। विद्यासाधनत्वादेव च यज्ञादेर्विविदिषासाधनत्वमन्यथा विविदिषासाधनत्वमपि न स्यात्। मा भूद् गमनासाधनस्य दात्रादेर्जिगमिषासाधनत्वं किन्तु गमनसाधनस्यैवाश्वादेस्तत्, अश्वेन जिगमिषतीति। भगवताप्युक्तं "कर्मयोगेण चापरे" इति। तस्मात् श्रुति-स्मृतिसूत्रैर्यज्ञादेर्ज्ञानसाधनत्वप्राप्तेस्तद्विरुद्धोक्तिः साहसमात्रम्।

न च "सदेव सौम्येदमित्यादितत्त्वमसी"त्यन्तवाक्याभ्यामदात्मतत्त्वावबोधे जातेऽप्यविद्यासंस्कारात् सांसारिकप्रत्ययव्यवहारा अनुवर्त्तन्ते तेषु च श्रद्धाभावान्न कर्माधिकार इति वाच्यम्। तादृशात्मावबोधाच्छाब्दज्ञानरूपान्न प्रत्यक्षात्मकसांसारिकप्रत्ययानां विनाशा दिङ्मोहालातचक्रादौ तथा दर्शनात्, किञ्च तद्विषयाणां मिथ्यात्वं दृढं निश्चिन्वन् न कश्चिदपि तान् व्यवहरेदेवं लोके दर्शनात्, न खलु पटं दग्धं जानन् सत्यवत् पश्यन्नपि कश्चिद् वस्ते, व्यवहरति च विषयान् फलं च यथावत् भुङ्क्ते, करोति च श्रद्धया श्रौतं स्मार्त्तं च क्रियाजातं, नैवं युज्यते मिथ्यात्वे, मिथ्या-भूतैरर्थसिद्ध्यसिद्धेः, मिथ्यारूप्याद् भूषणानुत्पत्तेः, रज्ज्वां सर्पभ्रमाद् भयकम्पादिश्च नार्थ इष्टत्वाभावात्। परीक्षकाणां च मायिकानां लौकिकवैदिककर्मजातविलोप-प्रसङ्गो ध्यानादिलोपप्रसङ्गश्च दृश्यते च तत्त्वदर्शिनां व्यासजनकादीनामविद्यालोपेऽपि श्रौतस्मार्त्तकर्मानुष्ठानम्। तदुक्तं जनकेन—

"सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः॥"इति। ( क्रमशः )

---

## समीचीनम् !

Statesman पत्रे ( Calcutta, December 25, 1958, Late City Edition, p. 1, col. 8) दृष्टम्—*Both* Dr. Kunzru and Mr. Bhupesh Gupta did *not* seem convinced इत्यादि। अहो शुद्धत्वं वाक्यस्य! Both Dr. Kunzru *as well as* Mr. Bhupesh Gupta इत्युक्तौ संशुद्धिः समधिकं वर्धेत !!!

---

कवीन्द्र-रवीन्द्रनाथस्य

# आवेदनम्

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

भृत्यः। जयोऽस्तु राज्येश्वरि विश्वधन्ये! दासानुदासे करुणां कुरुष्व।

राज्ञी। निधाय शीर्षे मम शिष्टिमानौ निनादयन्तो भुवि जैत्रशङ्खान्
अन्ये नियोज्या निजकर्मसिद्ध्यै त्यक्त्वा सभां वै सकलाः प्रयाताः।
निशान्तचन्द्रप्रतिमः सभान्ते मद्भक्तभृत्यः समुपैषि यस्माद्
यत् प्रार्थितं स्याद् वद मां प्रसन्नाम्।

भृत्यः। भृत्याधमस्तेऽस्मि महत्तमे! यत् स्थानं ततो मे सकलस्य निम्ने।
सन्तृप्तकामाः सकला यदैव पृथक् पृथक् स्वं प्रतियान्ति गेहं
क्षणे हि तस्मिन् समुपेत्य देवि स्थितां सभायां जनवर्जिताया-
मेकाकिनीं त्वामभिलभ्य चैव त्वत्पादभूमेः सविधे निषण्णो
भुक्तावशिष्टं सकलस्य याचे।

राज्ञी। अबोध भिक्षोऽसमयागतस्य को मे प्रसादस्तव नाम लभ्यः?

भृत्यः। गच्छामि ते स्मेरमुखं विलोक्य।
भिक्षापरैका ननु मेऽस्ति देवि,
ददासि चेत् तां सफलो भवेयम्।
त्वत्तोऽभिलेभे विविधार्थिसार्थः
सम्प्रार्थ्य नानापदकर्मजातम्।
अयाचितं तिष्ठति कार्यमेकं
तदेव मह्यं सदयं प्रयच्छ।
उद्यानवाट्यां तव माल्यकारो
दीनातिदीनो भवितास्मि देवि!

राज्ञी। किं तुच्छमेतत् पदमिच्छसि त्वम्!

भृत्यः। विहाय बाढं निजकर्मजातं त्वन्माल्यकारो भवितुं सकामः।
कोदण्डबाणादिकसङ्गरास्त्रमेषोऽहमस्यां भुवि निक्षिपामि।
उष्णीषमेतत् तव पादमूले रक्षामि कृत्स्नामपि राजसज्जाम्।
याचे, प्रदत्तं प्रतिगृह्य मत्तो मा दौत्यकार्ये विनियुङ्क्ष्व भूयः।
त्वत्स्वर्णनौकानयनाय विश्वे, त्वद्वैजयन्तीवहनाय दिक्षु,
नूतनस्य देशस्य जयाय वापि मा जातु मां प्रेषय देवि दूरे।

परत्र पारे सरितो ह्यमुष्या दिगन्तरेखावलयातियातं
राज्यं स्थितं ते विततं सुदूरं कर्मप्रजावित्तयशःप्रपूर्णम्।
कियन्ति पुर्यो नगराणि तत्र, लोकालयाश्चापि कियन्त एव!
महाविपण्यां कति पण्यभाराः, पोताश्रये वा कति पोतपुञ्जाः!
अमूश्च चूडा गृहमन्दिराणां दिशां निकायं दशनैर्दशन्ति।
कोलाहलश्चापि समुत्थितः खे भनक्ति भागां चिरनीरवत्वम्।
अमुत्र देशे निवसन्ति भृत्याः सैन्याः प्रभूतास्तव वीर्यवन्तः;
नित्यं तथा जाग्रति रक्षिसंघास्त्वदेककार्ये सुनिविष्टचित्ताः।
अस्मिन् हि पारे जनशून्यतीरे समुत्थितस्ते गिरितुङ्गशृङ्गे
तुषारशुभ्राऽम्बररागमध्ये प्रासादसौधो मणिभूषिताङ्कः।
अत्रैव वातायननिम्नभूमौ कपोतगीतैर्मुखरे वनान्ते
छायासुशीते विरले विविक्ते मल्लीविताने तव याति कालः।
वार्यन्त्रधारा स्फटिकाङ्गने तु निःसृत्य दीर्घं दिवसं समन्तात्
कल्लोलमालारुदितैस्त्वदीयां मध्याह्नवेलां करुणातिपूर्णां
निदारुणं क्लेशकरीं विधत्ते। अलिन्दमध्येऽनतिदूरसंस्थे
विस्तार्य पुञ्जीकृतपिच्छभारं नृत्यन्ति गर्वाद् गृहकेकिनस्ते।
चरन्ति शैवालवने सरावं ग्रीवाविभङ्गैः सितराजहंसाः।
छायातरूणां हिमपाददेशं श्रयन्ति तप्ता विवशाः कुरङ्गाः।
एभिश्च जीवैस्तव पार्श्वसंस्थ उद्यानवाट्यामयि सन्निहीने!
त्वन्माल्यकारो भवितास्मि देवि!

राज्ञी। भोः कर्मभीरोऽलस! किङ्करेण त्वया नु कार्यं वद किं ममास्ति।

भृत्यः। अकर्मकर्माणि लसन्ति यानि सहस्रतुच्छालससञ्चितानि
तत्रैव मे स्युर्निजकर्मचेष्टास्त्वत्प्रीतिसम्पादनमुख्यलक्ष्याः।
मेघान्तकाले ह्यथवा वसन्ते प्राचीदिगन्ते सति रागरक्ते
वायुप्रवाहे शिथिलाङ्गसङ्गाद् विसृज्य निद्रालसतां कवोष्णां
मार्गेण येनाटविपादपान्तरेकाकिनी सञ्चरसे प्रभाते,
नवीकृतां तां हि विधाय वीथीं नित्यं प्रतीक्षे तव पादपातम्।
पुष्पाक्षरैर्मल्लिखिता त्वदङ्घ्रि स्तुतिर्हि कल्ये प्रतिवासरं च
त्वत्स्पर्शतृष्णातुरतामवाप्य शष्पान्तरे यास्यति वै विकाशम्।
यां पुष्पमालां रमणीयशोभामावेष्ट्य वेणीं स्वयमेव सायं

ललाटलग्नां विदधासि नित्यं, सुगन्धिसायन्तनपुष्पवृन्दै-
स्तां चित्रमालां स्वकरेण बद्ध्वा निधाय चाष्टापदपात्रमध्ये
निर्वाङ् नतास्यस्तव सम्मुखेऽहं निःशब्दमागम्य च धारयिष्ये।
तत्रैव काले निभृते स्वकक्षे मुक्तं तमिस्राभ्भरभङ्गकल्पं
वितत्य पृष्ठे घनकेशपाशं स्थिता समक्षं मणिदर्पणस्य
हस्ताब्जशुभ्राङ्गुलिचालनेन नूनं रता स्याः कचबन्धकृत्ये।
कुमुद्वतीपूर्णसरःप्रतीरे सप्तच्छदानोकहपादभूमौ
निषत्स्यसि त्वं हि यदा प्रमोदाज्जातीप्रतानैः कृतदोलिकायां,
ललाटनेत्रोरसि केशपाशे पतिष्यतीन्दोश्छदरन्ध्रमार्गे
धारासहस्रं करचुम्बनानाम्। आनन्दमग्नां परितस्तनूं ते
मन्दो नभस्वानिव सङ्गकामः समुत्थितः स्यादटवीसुगन्धः।
त्वदीयशय्याशिरसि स्थितो यः प्रसुप्तिमध्ये सकलां त्रियामा-
मुन्मील्य निद्रारहिताक्षिपक्ष्म स्वप्नातिभूमिं दिविषन्नराणां
पश्यन्नकम्पस्तव सुप्तमङ्गं निमेषहीनं ज्वलति प्रदीप-
स्तं गन्धतैलैर्निशि दीपयामि। शेफालिकावृन्तसमूहरागैः
करोमि वासस्तव हेमवर्णम्। विधाय मूर्तं निजचित्तभावं
त्वत्पादपीठं च करोमि नित्यं सुचित्रितं कुङ्कुमचन्दनाभ्याम्।
एतद्धि सर्वं हृदये निखाय त्वन्माल्यकारो भवितुं सचेष्टः।

राज्ञी। ग्रहीष्यसे कां वद दक्षिणां त्वम्?

भृत्यः। नित्यं प्रभाते रचयामि देवि प्रसूनवृन्दैस्तव कङ्कणे ये
आनीय पत्रे कमलस्य ते च सिताम्बुजानां कलिकानुकल्पा-
मेकैकशस्ते मृदुहस्तमुष्टिं स्वयं त्वयाहं परिधापयिष्ये—
स्यादेव देव्या मम दक्षिणैषा। यदा करिष्ये तव पादयुग्म-
मशोकपुष्पाद्रपरागरक्तं तदाङ्गुलिप्रान्तविलम्बिरेणोः
प्रमार्ज्मि लेशं मृदुचुम्बनेन—स्यादेव देव्या मम दक्षिणैषा।

राज्ञी। आवेदनं भृत्य! तवानुमन्ये।
अमात्यसैन्या बहवो मदीयाः
प्रभूतसेनापतयश्च सन्ति।
रताश्च नानाविधकर्मयन्त्रे
वसन्ति राज्ये बहुयन्त्रिसङ्घाः॥
तिष्ठ त्वमेकः कृतिकीर्तिहीनः
स्वकामबन्दिश्चिरदास एव।
बहिःसभं स्वे भवने स्थितः स-
न्नुद्यानपालो भवितासि मे त्वम्॥

---

# शब्दार्थरहस्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## मन्युः

प्रियवाचकमहाभागाः, क्रतुशब्दस्यार्थपरिवृत्तिरुपवर्णितास्माभिः, इदानीं मन्युशब्दमधिकृत्य किञ्चिदुच्यते।

निघण्टौ मन्युशब्दः क्रोधनामस्वाम्नातः। निरुक्तकारेणोक्तम्—मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वेति।

मन्यतेर्भावे युप्रत्ययेन मन्युशब्दो निष्पन्न इति प्रतिभाति। यजिमनिशुन्धिदसिजनिभ्यो युच् इत्युणादिषु [ ३।२१ ] पठ्यते। अत एवास्य प्राथमिकोऽर्थः—मतिः, अभिप्राय आग्रह इति प्रतीयते। ततश्च मननविशेषः क्रोध इति। ततश्च मननविशेषः शोक इति। यज्ञकर्मसु हि मननं सविशेषमपेक्ष्यत इति क्रमेण मन्युशब्दस्यार्थः सञ्जातो यज्ञ इति। यद्वा, शतक्रतुरपीन्द्रः, शतमन्युरपीन्द्रः। अत एव मन्युशब्दः क्रतुशब्दसमानार्थकः। परवर्तिनि काले क्रतुशब्दो यज्ञार्थकः सञ्जातः, अत एव मन्युशब्दस्याप्यर्थो जातो यज्ञ इति। यथा त्र्यम्बकशब्दोऽपि महादेवबोधकः, त्रिलोचन-शब्दोऽपि तथा। अत एव अम्बकशब्दस्यार्थो जातः—लोचनमिति !!! अत एवामरकोशे दृश्यते—"मन्युर्दन्ये क्रतौ क्रुधि" इति, "मन्युशोकौ तु शुक् स्त्रियाम्" इति च।

ऋग्वेदे शतमन्युशब्दः सकृदेव दशममण्डले श्रूयते—

अधि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकं सेना भवतु प्र युत्सु ॥

[ १०।१०३।७ ] इति। अयम् इन्द्रः गोत्राणि गोष्ठानि मेघान् वा सहसा बलेन अभिगाहमानः प्रविशन् अदयो निर्दयो वीरो विक्रान्तः शतमन्युः बहुक्रोधो दुश्च्यवनः अन्यैरचाल्यः स्वयं पृतनाषाट् शत्रुसेनानामभिभविता अयुध्यः संप्रहर्तुमशक्यः। छान्दसः क्यप्। ईदृगिन्द्रः अस्माकं सेनाः युत्सु संग्रामेषु प्रावतु प्रकर्षेण रक्षत्वित्यर्थः।

अत्र शतमन्युशब्दो विस्पष्टमेव शतगुणितः क्रोधो यस्येत्यर्थे प्रयुक्तः। ( क्रमशः )

## पुस्तक-परिचयः

**Astrological Magazine** edited by B. V. Raman. January 1959 (Annual Number). Price : Rs. 3.75. Annual Subscription Rs. 12. Raman Publications : Sree Rajeswari, Bangalore 3.

विदितमेवैतन्मञ्जूषाया वाचकमहाभागानां ज्यौतिषिकपत्राणां शिरोमणिरेव Astrological Magazine इति। पत्रमिदं प्रतिमासं विविधप्रबन्धभासुरं विपुलकायं यथावसरमेव प्रादुष्करोत्यात्मानम्। अत्रत्यानि मासफलानि वर्षफलानि च नितरां

विस्मयकराणि। अस्मिन् वार्षिकेऽङ्के पृष्ठानां शतद्वयेऽधोनिर्दिष्टनामानो निबन्ध विराजन्ते—World Predictions for 1959, Interpretation of a planet's influence, Foundation map of Independent India Gerantology and Ayurveda, Horoscope of Queen Elizabeth II planets and their gems, Troinsky's Tertiary Directions, The correct birth-time, A new method of progression, Astrological significance of basic instincts, Aryan myths, legends and traditions in the Bible, Astrological appraisement of behaviour patterns, Moon and menstrual disorders, Significance of lunar new year charts in mundane astrology, Astrology and infant mortality, Horoscope of Netaji Bose, Significance of fingers in Palmistry, Ambiguous terms in Hindu Astrology, influence of Planetary colours on Racing, the Riddle about a well-known verse of Varāhamihira (आसन्मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ। षड्द्विकपञ्चद्वियुक्तः शककालस्तस्य राज्ञश्च ॥), Astrology in Kerala, Electional Astrology, Around the world, Letters to the Editor, Your scientific difficulties solved, Astronomical notes, Ephemeris, Stars in their seasons, Airways Guide, General commercial indications, How is 1959 for you? Market forecasts for 1959, How is this month for you? Daily Guide.

मुद्रणप्रमादात् Gerontology-शब्दे ओकारस्थानेऽकारो दृश्यते। ग्रीक भाषागतो geront-शब्दः संस्कृतजरन्त्-शब्दस्यैव रूपान्तरम्। अवश्यं पठनीयं चानुशीलनीयं चेदं समीचीनं मासपत्रं ज्योतिषशास्त्रानुरागिभिः।

बृहज्जातकम्। वराहमिहिरविरचितम्। आङ्ग्लानुवादटीकानुवादविविध-टिप्पन्यादिविभूषितम्। स्वर्गतलक्ष्मीनारायणराओ-महोदयेन संस्कृतम्, वेङ्कटरमण-महोदयेन च सम्पादितम्। Raman Publications, Sri Rajeswari Bangalore 3 इत्यतः प्रकाशितम्। मूल्यं द्वादश रूपकाः।

कस्य वा न विदितो ज्योतिषशास्त्रानुरागिणः परःशतानां ग्रन्थानां व्याख्यात परःसहस्राणां च प्रबन्धानां प्रणेता लक्ष्मीनारायणराओ-महोदयस्तस्य चात्मीय Astrological Magazine इत्यस्य साम्प्रतिकः सम्पादको वेङ्कटरमणमहोदयः। वराहमिहिरेण विरचितं लक्ष्मीनारायणेन संस्कृतं वेङ्कटरमणेन च सम्पादितमिदं बृहज्जातकं कस्य वा सचेतसश्चेतो न समुल्लासयेत्? अत्रत्य आङ्ग्लभाषामयोऽनुवादः सुविशदः, व्याख्यानमपि सुसरलम्। भट्टोत्पलस्य मतान्यत्र संक्षेपेणोक्तानि मूल-

श्लोकानामुपपत्तयो विस्तरेण प्रदर्शिताः, बहवश्चोदाहरणरूपेण कुण्डलयोऽत्र सन्निविष्टाः। अवश्यं संग्राह्यं पुस्तकरत्नमिदं ज्योतिषशास्त्रं प्रविविक्षुभिश्च तत्र कृतश्रमैश्च।

जङ्घाशब्दस्य प्रतिशब्दोऽत्र buttock दृश्यते। एतत्तु न समीचीनम्। कालिदासस्य—

वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः॥

इति सुप्रसिद्ध-श्लोकस्य भाषान्तरे जङ्घाशब्दस्य स्थान इदानीन्तनैः प्रायेण thighs सन्निवेश्यते, तदपि न युक्तम्। जङ्घाशब्दस्य समीचीनः प्रतिशब्दः shanks इति।

अत्रत्यो द्वितीयः श्लोकः—

भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि।
होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे॥ इति।

अयं च स्मारयति कालिदासीयं पद्यम्—

क्व सूर्यप्रभवो वंशः चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ इति।

आशास्यते पुनर्मुद्रणावसरे होराशास्त्रव्याख्यानं होराभिप्रायनिर्णयश्च पर्यालोच्येत सम्पादकमहोदयेनेति।

**तुलसीदासविरचितं रामचरितमानसम्।** श्रीविजयकालीभट्टाचार्येण वङ्गभाषयानूदितम्। प्रतिखण्डं मूल्यं रूप्यकत्रितयम्। आर्यविद्यापीठम्, ८४ आमहार्ष्ट ष्ट्रीट् ( चतुर्थतलम् ), कलिकाता ९ इत्यतो लभ्यम्।

तुलसीदासरामायणस्य हिन्दीभाषामयस्य स्वादुरसं पायं पायं सुबहूनि वर्षशतानि मोमुद्यन्ते भारतवर्षीयाः। हालिका अपि आपणिका अपि दौवारिका अपि यदैवावसरं लभन्ते तदैव मधुरस्वरेण पठन्ति प्रकृतं रामायणं पुण्यं च पूतत्वं च विन्दन्ति। वङ्गीयानां सौकर्यायेदानीं भिषग्वरेण श्रीमता विजयकालीभट्टाचार्येण पुस्तकमिदं वङ्गभाषया विपरिणमितम्। भूमिकायां रामचरितमानसगतं वैशिष्ट्यं संवर्णितम्, प्रतिश्लोकं च विषमशब्दानां टीका सन्निविष्टा, परिशिष्टे च पात्राणां विवरणमुपनिबद्धम्। १४९-पृष्ठात्मकस्य प्रथमखण्डस्य मूल्यं रूप्यकत्रितयमात्रम्। अवश्यं पठनीयश्चानुशीलनीयं च पुस्तकमिदं वङ्गीयैश्चतुर्वर्गसिद्धिकामैः।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

| April, 1959. | १८८१-शकीय-वैशाखस्य १३शा-वर्षस्याष्टमी संख्या | Vol. XIII No. 8 |
| --- | --- | --- |

## मञ्जूषायाः प्रार्थनम्

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

---

## श्रीश्रीभगवत्प्रार्थनम्

[ श्रीफटिकलालदासकृतस्तोत्रपद्यानुवादः ]

दयामय त्वं सदयो हि भूत्वा, दीनाय मे स्वौ चरणौ प्रदेहि।
ममास्ति को यं निकषा समेत्य प्राणेषु शान्तिं परमां लभेय॥१॥
एतद्धि सारं विदितं मया यत् त्वमेव सारादपि सारवस्तु।
त्वामन्तरेणैव न मुक्तिरास्ते संसारपाशादिह देहिनां च॥२॥
विसृज्य दारांस्तनयांश्च दूरे भवाब्धिकूले स्थित एक एव।
पश्याम्यकूलं जलधिं यदैव को मां तदा नेष्यति पारमस्य॥३॥
दिने च तस्मिन्नयि दीनबन्धो मामीक्षते कः सदयाक्षिपातैः।
भवार्णवस्योच्छलवारिमध्ये त्वदङ्घ्रिनौका शरणं ममैकम्॥४॥
दयामयस्त्वं जलधिं दयाया ददासि तस्माद् यदि बिन्दुमेकम्।
नायिष्यते ते क्षयमम्बुराशिर्गास्यामि नित्यं जयमेव ते तु॥५॥
त्रितापदाहो विलयं प्रयातः प्राणेषु शान्तिं सततं च लप्स्ये।
न भावना स्थास्यति यन्त्रणा वा भवेऽत्र काचित् परमार्तिपूर्णे॥

अभ्यर्थनैषा तव पादपद्मे कृपैकबिन्दुं सदयं प्रदाय ।
कुरुष्व गत्या रहितस्य मे त्वं गुणैः स्वकीयैर्गतिमन्तकाले ॥७॥
प्राणास्त्वमेव, प्रियमेव वित्तं त्वत्तोऽधिको मे न निजश्च कश्चित् ।
प्राणान् समर्प्यारुणपादपद्मे तिष्ठामि भूत्वा भुवने त्वदीयः ॥८॥
सहात्मना मे सकलं च तुभ्यं दत्त्वा वितिष्ठे भुवि तावकीनः ।
उच्चार्य नामानि तवैव भक्त्या त्यक्ष्यामि नूनं भवधाम चैतत् ॥९॥
दिने हि तस्मिन् समुपेत्य पार्श्वं निराकुरु त्वं यमनामभीतिम् ।
दत्त्वाङ्घ्रिनौकामयि नित्यबन्धो भवाब्धिपारं गमय स्वदासम् ॥१०॥

---

## आभाणकमाला

Latin. Scire tuum nihil est, nisi te scire hoc sciat alter.

Your knowledge is of no account, unless others know that you know.

किं वा ते ज्ञानेन यद्यपरे न जानीयुस्त्वं जानासीति ।

Latin. Scire est nescire, nisi id me scire aliud scierit.

To know is not to know unless someone else also knows that I know.

नज्ञानमेव ज्ञानं न चेदपरो जानीयादहं जानामीति ।

Latin. Scientiae non visae, et thesauri absconditi, nulla est utilitas.

In knowledge unseen as in hidden treasure, there is no usefulness.

To have a thing is nothing, if you have not the chance to show it,

And to know a thing is nothing, unless others know that you know it.

किं तेन द्रव्येणाधिगतेन यदि तत् परेभ्यः प्रदर्शयितुं न पार्येत । किं तेन वस्तुना विज्ञातेन यद्यपरे न जानीयुस्त्वं जानासीति ।

Beauty unseen is not beauty.

रूपमनालोकितं रूपमेव न भवति । तद्रूपं यदवलोकितम् ।

किं काननकौमुदीकल्पया रूपसम्पदा ?

किं शून्यालयदीपदेश्येन रूपप्रकर्षेण ?

# रामायणरत्नमञ्जूषा

## *मैनाकहनूमत्संवादः।*

[ सुन्दर १।११०-१२८ ]

दुष्करं कृतवान् कर्म त्वमिदं वानरोत्तम।
निपत्य मम शृङ्गेषु *विश्रमस्व यथासुखम्॥
राघवस्य कुले जातैरुदधिः परिवर्धितः।
स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः॥
कृते च प्रतिकर्तव्यमेष धर्मः सनातनः।
सोऽयं त्वत्प्रतिकारार्थी त्वत्तः सम्मानमर्हति॥
त्वन्निमित्तमनेनाहं बहुमानात् प्रणोदितः।
तिष्ठ त्वं कपिशार्दूल मयि विश्रम्य गम्यताम्॥
योजनानां शतं चापि कपिरेषः समाप्लुतः।
तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति॥
तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु।
तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽनुगमिष्यसि॥
अस्माकमपि सम्बन्धः कपिमुख्य त्वयास्ति वै।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः॥
वेगवन्तः †प्लवन्तो ये प्लवगा मारुतात्मज।
तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर॥
अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता।
धर्मं जिज्ञासमानेन किं पुनस्त्वादृशो महान्॥
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर॥
पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः।
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम्॥
पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन्।
ते हि जग्मुर्दिशः सर्वा गरुडानलवेगिनः॥
ततस्तेषु प्रयातेषु देवसङ्घाः सहर्षिभिः।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया॥

---

* 'विश्राम्य' इति साधु। † प्लवमाना इति साधु।

ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः ।
पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ॥
स मामुपागतः क्रुद्धो वज्रमुद्यम्य देवराट् ।
ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥
अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तमः ।
गुप्तपक्षसमग्रश्च तव पित्राभिरक्षितः ॥
ततोऽहं मानयामि त्वां मान्यो हि मम मारुतः ।
त्वया मे ह्येष सम्बन्धः कपिमुख्यो महागुणः ॥
अस्मिन्नेवं गते कार्ये सागरस्य ममैव च ।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ॥
श्रमं मोक्षय पूजां च गृहाण हरिसत्तम ।
प्रीतिं च बहुमन्यस्व प्रीतोऽस्मि तव दर्शनात् ॥

---

## आख्यानरत्नमञ्जूषा

### *पर्वतपक्षशातनम् ।*

[ मैत्रायणीसंहिता १।५।१२ ]

प्रजापतेर्वा एतज्ज्येष्ठं तोकꣳ यत्पर्वताः । ते पक्षिण आसन् , ते परापातमासत यत्र यत्राकामयन्त । अथ वा इयं तर्हि शिथिरासीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमामदृꣳहत् । ये पक्षा आसꣳस्ते जीमूता अभवन् । तस्मादेते सदद्‌ि पर्वतमुप प्लवन्ते । योनिर्ह्येषामेषः ।

परापातम्—परापूर्वात्पततेर्णमुल् । अथवा इयं तर्हि—अथ वै इयं पृथिवी तदानीम् । सदद्‌ि—सर्वदा । योनिः—प्रभवः, उत्पत्तिस्थानम् ।

---

वरं पक्षोच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ नीतिशतकम् ।

---

# आख्यातिक्यो विभक्तयः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

पाणिनिव्याकरण आख्यातिक्यो विभक्तयो यथा—

परस्मैपदे

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | तिप् | तस् | झि |
| मध्यमपुरुषः | सिप् | थस् | थ |
| उत्तमपुरुषः | मिप् | वस् | मस् |

आत्मनेपदे

| | एकवचनम् | द्विवचनन् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | त | आताम् | झ |
| मध्यमपुरुषः | थास् | आथाम् | ध्वम् |
| उत्तमपुरुषः | इट् | वहि | महिङ् |

## *तिप्, सिप्, मिप्*

पकारः पृथु-शब्दस्य पीन-शब्दस्य पीवञ्छब्दस्य वा प्रतीकः। अत एव पिति प्रत्यये परे यथासम्भवं गुणवृद्धी भवतः। ततः पूर्ववर्तिनां गुणवृद्धिवशात् पितामनुदात्तत्वम्।

## *झि, झ*

नामिकीषु विभक्तिषु प्रथमाबहुवचने जकारोऽनुबन्ध आसञ्जितः, अत एवाख्यातिकीषु तदुत्तरवर्तिवर्णो झकार उपात्तः। नाम्नामनन्तरं ह्याख्यातानां स्थानम्। अत एव पदानां परिगणनावसरे भगवता यास्केनोक्तम्—एतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च [ निरुक्त १।१।८ ] इति।

## *इट्*

इटष्टकार इटोऽत् [ ३।४।१०६ ] इत्यत्र विशेषणार्थः। स्थाने खलूत्तमपुरुषस्यैकवचने मूर्धन्यवर्गस्य प्रथमो वर्णोऽनुबन्धतयासञ्जितः। मूर्धा हि सर्वेषु गात्रेषु प्रधानम्, अत एव तद्वर्णानामुत्तमपुरुष उपयोगः। टकारश्च मूर्धन्यवर्णेषु प्रथमः, अत एवैकवचने तस्य सन्निवेशः।

## *महिङ्*

महिङो ङकारस्तिङ्तङ्प्रत्याहारार्थः। ङकारो ह्यन्तिमवर्णेषु प्रथमः, अत एव बहुवचने तस्यानुबन्धतयासञ्जनमुपपद्यते। अत एव लडादीनां टितामनन्तरं ङादयो

ङित उपलभ्यन्ते। अत एव नामिकीषु विभक्तिषु औट् टा इत्यनयोष्टानुबन्धानन्तरं ङे ङसि ङस् ङि इत्यत्र ङानुबन्धो दृश्यते।

आत्मनेपदेन च साकं ङकारस्य घनिष्ठः सम्बन्धः सन्दृश्यते, प्रत्यङ्ङात्मा इत्यत्र ङकारस्य सद्भावात्। अत एवात्मनेपदबोधनार्थं ङानुबन्ध आसज्यते।

---

# गान्धर्वविवाहदोषः

पिता माता गुरवश्चैव येऽन्ये देहस्यास्य प्रभवन्ति प्रदाने।
नाहं धर्मं लोपयिष्यामि लोके स्त्रीणां वृत्तं पूज्यते देहरक्षा॥
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम्॥

महाभारते वनपर्वणि।

---

# सुबोधम् !!!

महाभारते दृश्यते श्लोकः—

नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः।
एषोऽङ्गनावेषधरः किरीटी जित्वाव यं नेष्यति चाद्य गावः॥

वि० ३९।१०

व्याख्यातश्चायं नीलकण्ठेन—हे नदीज हे गाङ्गेय हे भीष्म लङ्केशस्य रावणस्य वनं तस्यारिर्नाशको हनूमान् स केतुर्ध्वजो यस्य स लङ्केशवनारिकेतुः। नगो वृक्षस्तदाह्वयो वृक्षनामा। नामेति वितर्के निश्चये वा। अर्जुन इत्यर्थः। शैलवृक्षौ नगावगावित्यमरः। नगारिरिन्द्रस्तस्य सूनुः। एषः अङ्गनावेषधरः किरीटी एतन्नामा यं जित्वा वः युष्माकं गा धेनूः नेष्यति तं दुर्योधनम् अव पालय। इति।

---

# व्याकरणविमर्शः

## *ग्लायमानः*

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

परिभाषेन्दुशेखरे सर्वो द्वन्द्वो विभाषैकवद्भवति [ प० २४ ] इति परिभाषाया विवरणे नागेशभट्टेनोक्तम्—आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव

प्राणित्वात्। इति। तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् [ १।२।६६ ] इति सूत्रस्य भाष्यप्रदीपोद्द्योतेऽपि दृश्यते —आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणा एव लोके प्राणिन इत्युच्यन्त इति। ग्लैधातोश्च परस्मैपदित्वं लोकवेदयोः प्रसिद्धम्। इतिहासपुराणादिषु प्रायेण सर्व एव धातव उभयपदिनः। अत एव महाभारतान्तर्गतसावित्र्युपाख्याने दृश्यते—सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम् इति। नागेशभट्टेन महाभारतवासनावासितचित्तेनैवं विलिखितम्। अथवा ताच्छील्यवयोवचनशक्तिषु चानश् [३।२।१२९] इति सूत्रं मनसि निधाय चानशन्तं प्रयुक्तम्। अत्र ताच्छील्यार्थस्य स्फुटतया प्रतीतिरित्यत्र नास्ति संशयावकाशः।

---

## मणीषी, अपराभूय

"दैनिकवसुमती"-पत्रिकायां ( रविवार, १ला चैत्र, १३६५ ) पुस्तकपरिचयप्रसङ्गेन लिखितम्—"एइ ग्रन्थ मणीषी भक्त लेखकेर एक अपराभूय कीर्ति" इति। मणिशब्दे मूर्धन्यणकारो वर्तते, अत एव मणीषीत्यत्रापि मूर्धन्येन णकारेण भाव्यम् !!! अपराजेयशब्दस्य पदाङ्कानुसारेणापराभूयशब्दो रङ्गभूमिमवतीर्णः।

---

## विप्रतिषेधे परं कार्यम् !

### You and I am sitting in this room

Sunday Amrita Bazar Patrika (March 15, 1959, p. v, col. 5): He (M. Gandhi) merely asserted : I am surer of His existence than that of the fact that you and I am sitting in this room.

---

## द्वैतवनम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

किरातार्जुनीयस्य प्रथमे श्लोके द्वैतवनस्य समुल्लेखो वर्तते। इदं द्वैतवनं सरो वा वनं वेति संशेरते बहवः। महाभारते द्वैतवनं सरोऽपि दृश्यते, वनमप्युपलभ्यते। वनपर्वणि चतुर्विंशेऽध्याये दृश्यते—

इदं द्वैतवनं नाम सरः पुण्यजलोचितम्।<br>
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥१०॥

इति। षट्त्रिंशत्तमेऽध्याये दृश्यते—

स व्यासवाक्यमुदितो वनाद् द्वैतवनात्ततः।

ययौ सरस्वतीकूले काम्यकं नाम काननम् ॥४१॥ इति।

शतपथब्राह्मणे श्रूयते [ १३।५।४।९ ]—तेन हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा। यत्रैतद् द्वैतवनं सरः। तदेतद् गाथयाभिगीतम्—

चतुर्दश द्वैतवनो राजा संग्रामजिद्धयान्।

इन्द्राय वृत्रघ्नेऽबध्नात् तस्माद् द्वैतवनं सरः ॥

इति। तत्र द्वितवनपुत्रो ध्वसा नाम राजा यागमनुष्ठितवानिति तस्य द्वैतवनं नाम सञ्जातम्। सरःसम्बन्धाच्च वनमपि द्वैतवनाख्यामभजत्। द्वितवनशब्दस्यार्थो द्विसमृद्धिक इति।

---

## विनायकं प्रकुर्वाणो रचयामास वानरम्

मासिकवसुमतीपत्रिकायां दृष्टम्—ओ देर जातीय सङ्गीत तो जानो : Deufschland iibsr alles—जर्मनि सवार उपरे ( अग्रहायण १३६५, पृः २३७, स्त० १ ) इति। अहो Deutschland über alles इत्यस्य दुर्गतिः! कविना विलिखितम् Deutschland, Deutschland über alles, Ueber alles der Welt! इति।

---

## वेदेऽलङ्काराः

ऋग्वेदे [ १।१०१।६ ] श्रूयते—

यः शूरेभिर्हव्यो यश्च भीरुभि-

र्यो धावद्भिर्हूयते यश्च जिग्युभिः।

इन्द्रं यं विश्वा भुवनाभि सन्दधु-

र्मरुत्वन्तं सख्याय हवामहे ॥

इति। अस्यार्थः। यः शूरैर्भीरुभिश्च ह्वातव्यः, यः पलायमानैर्हूयते यश्च जयशीलैः, यमिन्द्रं सर्वाण्येव भूतान्यात्मकार्यार्थं ध्यायन्ति मरुत्सखं तं सख्याय वयमाह्वयाम इति। अत्र दण्ड्याचार्यानुमतो विरोधो दीपकश्चालङ्कारौ। विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्। विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥ तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम्। नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥ इति। जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना। सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा ॥ इति चोक्तः।

( क्रमशः )

---

## वङ्गभाषायां संस्कृतवचनम्

### बहुविघ्नानि

सुप्रथितयुगान्तरपत्रे इतश्चेतोविभागे (रविवार, १०इ फाल्गुन १८८०) दृष्टम्—"'फलेषु' बहुविघ्नानि" इति। लेखक-महोदयस्य मतेन बहुविघ्नानीत्यत्र कर्मधारय-समासः, विघ्नशब्दश्च नपुंसकलिङ्गः। वस्तुतस्तु विघ्नशब्दो विघ्नवाचकावन्तराय-प्रत्यूहशब्दौ च पुंलिङ्गा एव। येन खलु सर्वं विहन्यते तस्य क्लीबत्वं कथं नाम सम्भवेत्! "श्रेयांसि बहुविघ्नानि" इत्यत्र बहुव्रीहिसमासनिष्पन्नं बहुविघ्नानीति पदं श्रेयांसीति-नपुंसकलिङ्गपदस्य विशेषणमिति तस्य नपुंसकत्वम्। बहवो विघ्ना येषु तानि बहुविघ्नानि।

### इतश्चेतः

इतश्चेतः इति पदसमष्टिरपि न समीचीना। "इत इतः" "इतश्चेतश्च" "इत इतश्च" इति तिसृणां साधुत्वं सर्वैः स्वीक्रियते। इतश्चेतः इत्यत्र निपातोऽस्थानस्थ-पदतादोषदुष्टः।

---

## दूरीकुरु वैषम्यम्

१। दैनिकवसुमतीपत्रिकायाम् (कलिकाता, शनिवार १६इ फाल्गुन, १३६५) सम्पादकप्रबन्धे दृष्टम्—ये भोजे ताँहादेरइ क्षुण्णिवृत्ति हइतेछे ना (यस्यां सभायां तेषामेव क्षुन्निवृत्ति र्न भवति) इति।

मनीषिणो वङ्किमचन्द्रचट्टोपाध्यायस्य पदाङ्कमनुसरताक्षरग्रथकमहोदयेनैवं विपरि-वर्तितम्।

क्षुद् + क्त : क्षुण्ण : : क्षुध् + निवृत्तिः : $r$

$\therefore$ $c$ = क्षुण्णिवृत्तिः !!!

जडानां वैयाकरणानां मतेन पुनः क्षुन्निवृत्तिरित्यत्र णत्वस्य प्रसक्तिर्नास्ति।

२। Sunday Statesman पत्रे (February 10, 1959, p. 4, col. 7) Solitaire-कथाग्रन्थस्य समालोचनप्रसङ्गेन लिखितम्—the *humourous* patience with which she deals with her characters lives up to title of the book इति। विदितवेदितव्यानां मतेन humorous शब्द एव साधु र्न पुनः humourous इति।

humour + some : humoursome : : humour + ous : $x$

$\therefore x$ = humourous !!!

समानन्यायेन pronounciation इति पदमेव साधु !!! pronounceable pronouncement इत्यत्र ou वर्तते, किञ्च pronoun पदेऽपि ou देदीप्यते !

शास्त्राभ्यासजडानां मतेन pronunciation एव शुद्धम्। परमधिकन्तु न दोषाय प्रत्युत गुणायैव ! वङ्गीया अपि बहवः पुरश्चरणानुरोधेनोच्चारणस्य पक्षपातिनः।

---

# अहो शब्दसौष्ठवम् !

Sunday Amrita Bazar Patrika ( Feb. 22, 1959, p. 7, col. 4) वृत्तान्तपत्रे दृष्टम्—

**Conspiracy doubted**

Dr. Ghosh wondered how after 12 years the question of the transfer of Berubari could arise...He *doubted* that there was some conspiracy behind this proposed transfer.

Doubt = शङ्कते, suspect = शङ्कते ∴ doubt = suspect !!!

अनेन न्यायेन I *doubt* myself of coming to conclusions too rapidy, I *suspect* the wisdom of the policy इत्यादीनां साधुत्वं बोद्धव्यम् !!!

---

कवीन्द्र-रवीन्द्रनाथस्य

# स्पर्शशिला ( परश-पाथर )

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

( १ )

बृहज्जटा मूर्धनि पङ्कपिङ्गा छायेव तन्वी मलिना तनूश्च।
तीरे महाब्धेरुभयोर्हि वोढा क्षिप्तोऽटति स्पर्शशिलां विचिन्वन् ॥१॥
पुटेन बद्धा मिलिताधरोष्ठ' द्वारं च रुद्धा हृदयस्य नित्यम्।
ज्वालां स तीव्रां ज्वलितां बिभर्ति नक्तन्दिवं नेत्रयुगस्य मध्ये ॥२॥
उड्डीय खद्योत इवाक्षियुग्मं निजत्विषा कञ्चन मार्गतीव।
कौपीनमेकं परिधाय कट्यामङ्गान्यसौ लिम्पति भूतिचूर्णैः ॥३॥

नास्त्येव गेहं स्वजनश्च कश्चिदाहूय यस्तं वचनं ब्रवीति ।
मार्गाटभिक्षोरपि यः सुदीनो न वेद्मि तस्यास्ति कुतोऽभिमानः ॥४॥
लुच्छं ह्यकुप्यं सविधेऽस्य नित्यं न भूपसम्पत्स्वपि चास्ति लोभः ।
तत्स्पर्शपाषाणमृते स किञ्चिन्नाकाङ्क्षतीति श्रवणाद्धसामि ॥५॥

( २ )

सृष्टेर्बहिर्भूतविचित्रचेष्टां दृष्ट्वा तदीयां स पुरोविसारी ।
अपारगम्भीरमहार्णवोऽपि तं वीचिहास्यैरवहस्य चास्ते ॥६॥
पदं हि विष्णोरनिमेषपातं तिष्ठत्यधःस्थात् प्रतिबद्धदृष्टि ।
हूहूरवेण प्रबलो नभस्वान् निर्बाधगत्या दिशि धावते च ॥७॥
प्राच्यां प्रभाते समुदेति सूर्यः सायं च चन्द्रस्तत एव धीरम् ।
गूढं रहस्यं किमपि प्रवक्तुं शब्दायते वारिचयश्च नित्यम् ॥८॥
कुत्रास्ति काम्यं धनमेव, तस्य वृत्तान्तजातं स हि वेत्ति सिन्धुः ।
तद्वाक्यबोद्धा जन एव शक्तस्तदेव लब्धुं त्वरया विचिन्वन् ॥९॥
गायन् स सिन्धुर्महतीं स्वगीतिं करोति कस्मिन्नपि नाक्षिपातम् ।
उपेक्ष्य हासं रुदितं च तीरे क्षिप्तोऽटति स्पर्शशिलां विचिन्वन् ॥१०॥

( ३ )

ऐतिह्यमास्ते बहुकालपूर्वं रेखेव हेम्नो निकषाश्मपृष्ठे ।
अनन्तशून्ये जगतोऽस्य सृष्टेर्बभूव यावत् प्रथमः प्रकाशः ॥११॥
देवादिदेवाः सकला मिलित्वा निःशब्दपद्भ्यां मृदुमन्दगत्या ।
तीरेऽस्य सिन्धोः सुविशालमूर्तेः समेत्य तस्थुः कुतुकेन पूर्णाः ॥१२॥
( युग्मकम् )

दृष्ट्वा चिरं तं नतमस्तकेन तूष्णीं स्थितैस्तैः स्थिरनिर्निमेषैः ।
अश्रावि तस्यैव निमील्य नेत्रे चिरन्तनी सा महती च गीतिः ॥१३॥
अगाधवारिण्यथ कौतुकात्ते प्रदाय झम्पं तदनन्तगुह्यम् ।
प्रमथ्य दुःखैर्ददृशुश्च लक्ष्मीमाविर्भवन्तीमतुलां धरण्याम् ॥१४॥
तस्यैव सिन्धोर्महतस्तटेऽसौ सुजीर्णचीरं परिधाय कट्याम् ।
नक्तन्दिवं शुष्कविशीर्णदेहः क्षिप्तोऽटति स्पर्शशिलां विचिन्वन् ।

( ४ )

एतावतो वै समयस्य पश्चादाशा कुतो वाञ्छितवस्त्ववाप्तेः ।
तथापि नित्यं विचिनोत्यनिद्र आशा गता, नैव गतं तु शीलम् ॥१६

कृत्स्नक्षपां क्रन्दति सन्निषण्णस्तरौ विहङ्गो दयितावियुक्तः ।
आकार्य दुःखादसकृद् वराकः समीक्षते जातु न वाञ्छितां ताम् ॥१७॥
तथापि तां सर्वदिनं निराश आकारयत्येव स वीतखेदम् ।
आह्वानमस्या निशि जाग्रतोऽपि कार्यं हि तस्य स्थितमेकमात्रम् ॥१८॥
विस्मृत्य कृत्यं भुवि सर्वमन्यदुत्तोल्य वीचीर्गगने समुद्रः ।
कमाप्तुकामो विदधाति चेष्टां दिवा च नक्तं च न वेद्मि तच्च ॥१९॥
हाहाविरावैर्हृदयेऽपि पूर्णे नाप्नोति सोऽपि प्रियमेव जातु ।
तथापि शून्योत्क्रमणं भुजानां सदैव तस्य व्रतमेकमेव ॥२०॥
विश्वं समग्रं ग्रहतारकाभिश्चिरादुपास्ते हि यथैकवस्तु ।
तथाब्धितीरे जटिलो मलाक्तः क्षिप्तोऽटति स्पर्शशिलां विचिन्वन् ॥२१॥

( ५ )

तं ग्रामवासी शिशुरेकदाख्यत् "पश्यामि कट्यां किमिदं यते ! ते ।
त्वयाप्तमेतन्निगडं क्व हैमं ?" श्रुत्वा स वर्णी चकितं स्थितोऽभूत् ॥२२॥
कटीनिबद्धायसश्रृङ्खला सा कदाप हेमत्वमसौ न वेत्ति ।
पुनश्च भूयोऽपि परीक्षते स्म स्वप्नस्तु नैषा घटना विचित्रा ॥२३॥
आहत्य भालं भुवि सन्निविष्टो विधातुमैच्छन्निजनिग्रहं सः ।
सोन्माददृष्ट्या वदति स्म "हा हा लब्धप्रनष्टं सफलं ममेष्टम् ॥"२४॥
अभ्यस्तरीत्योपलसञ्चयानां कटिस्थलौहेन विधाय योगम् ।
अवीक्ष्य दूरे क्षिपति स्म भूयः कदाक्षिपत् स्पर्शशिलामपीत्थम् ॥२५॥

( ६ )

यात्यस्तमर्को मलिनस्तदानीं धत्तेऽन्तरिक्षं तपनीयवर्णम् ।
भवत्युदन्वान् गलितं हिरण्यं स्वप्नोऽपि हैमोऽपरदिग्वधूनाम् ॥२६॥
प्रत्यैति वर्णी धृतपूर्वमार्गः प्रनष्टरत्नोद्धरणाय भूयः ।
सास्ते न शक्तिर्नत एव कायश्छिन्नद्रुकल्पं लुठतीव चित्तम् ॥२७॥
पुरातनो दीर्घपथः पुरोऽस्ति मृतेन तुल्यो, न च तस्य निष्ठा ।
प्रान्तद्वयस्पर्शिमरुर्विभाति सम्प्राप्तदोषामलिनश्च देशः ॥२८॥
अर्धासुकालं व्ययितं विधाय स्पर्शं स यस्याः क्षणमात्रमाप्नोत् ।
भूयोऽपि तां स्पर्शशिलां विचेतुं दत्तेऽर्धभग्नायुष एव शेषम् ॥२९॥

# अनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## पकारः

भगवता पाणिनिना सूत्रितम्—अनुदात्तौ सुप्पितौ [ ३।१।४ ] इति। किमित्यनुदात्तत्वबोधनाय पकार एवानुबन्ध आसज्यत इति विचारयन्तो नूनं प्रतिपद्येरन् भवन्तः सुब्विभक्तय उत्सर्गतोऽनुदात्ता दृश्यन्ते, सुप्शब्दे च पकारोऽस्ति, अतोऽनुदात्तत्वस्फोरणाय पकारोऽनुबन्ध उपास्यते।

## सकारः

सिति च [ १।४।१६ ] इति सूत्रेण सकारानुबन्धे प्रत्यये परे प्रातिपदिकस्य पदसंज्ञा भवति। अत्रापि बीजं सुबिति। सुबन्तस्य पदसंज्ञा भवति, सुबन्तश्च प्रथमो वर्णः सकारः। अत एव सिति प्रत्यये परे पदसंज्ञा भवति।

---

## शाखादिभ्यो यत् [ ५।३।१०३ ]

काशिकायामुपलभ्यते सूत्रं शाखादिभ्यो यदिति, सिद्धान्तकौमुद्यां तु पठ्यते शाखादिभ्यो य इति। काशिकाकारस्य वेदबाह्यत्वात् कौमुदीकारस्य च वेदाब्धिपारदृश्वत्वात् प्रायेण कौमुदीगता एव पाठाः शुद्धा भवन्ति। अत्र पुनर्य इत्यपपाठ इत्यत्र नास्ति संशयस्यावकाशः। तथाहि शब्देन्दुशेखरे नागेशभट्टेनोक्तम्—शाखादिभ्यो यदिति पाठः। य इति त्वपपाठः। मुख्यादीनामाद्युदात्तत्वदर्शनात्, उगवादिभाष्यविरुद्धत्वाच्च। इति। व्याख्यातञ्चेदं भैरवमिश्रेण—"एवं भाष्ये शङ्का कृत्वोक्तम्। सिद्धन्तु शाखादिषु वचनाद्ध्रस्वत्वञ्च। सिद्धमेतत्। कथम्? शाखादिषु नाभिशब्दः पठितः, ह्रस्वत्वञ्च वक्तव्यम्। नाभिरिव नभ्यमिति। कः पुनरिहोपमार्थः? यत्तदक्षधारणं परिवर्तनं वा। एवम्प्रकारेण चक्रे नभ्यशब्दः साधितः। स च शाखादिभ्यो यदिति न्यास एवोपपद्यते। य इति पाठे तु प्रत्ययाद्युदात्तत्वेनान्तोदात्तत्वापत्तिरिति शाखादित्वात् सिद्धमित्यसङ्गतं स्यात्। इति। एतदनुसारेण बालमनोरमाकारेणाप्युक्तम्—य इत्यपाठः, तैत्तिरीये मुख्यो भवतीत्यादौ मुख्यशब्दस्याद्युदात्तत्वदर्शनात्, उगवादिसूत्रभाष्यविरुद्धत्वाच्च। इति।

## प्रार्थना

शक्तिं शरीरे हृदये च भक्तिं तव प्रियं साधयितुं प्रयच्छ।
ज्ञानं च मह्यं जगदीश देहि कृत्ये यथा मे न भवेत्प्रमादः॥

---

# श्वावराहम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

भट्टिकाव्ये दृश्यते [ १२।३३ ]—

शक्नोति यो न द्विषतो निहन्तुं विहन्यते नाप्यबलैर्द्विषद्भिः ।
स श्वावराहं कलहं विदध्यादासीत दुर्गादि विवर्धयंश्च ॥ इति ॥

महाभारते दृश्यते [ द्रोण १८०।८-१० ]—

यथा वराहस्य शुनश्च युध्यतोस्तयोरभावे श्वपचस्य लाभः ।
मन्ये विद्वन् वासुदेवस्य तद्वद् युद्धे लाभः कर्णहैडिम्बयोर्वै ॥
घटोत्कचो यदि हन्याद्धि कर्णं परो लाभः स भवेत्पाण्डवानाम् ।
वैकर्तनो वा यदि तं निहन्यात्तथापि कृत्यं शक्तिनाशात् कृतं स्यात् ॥

कौटिलीयार्थशास्त्रे दृश्यते—"व्यसनमस्य श्ववराहयोरिव कलहे वा" [प्र०.९९] इति ।

कामन्दकीयनीतिसारे दृश्यते [ १८।२१ ]—

प्रभूतेनारिसैन्येन प्रेषयेन्महतो रिपून् ।
श्वशूकरवधापेक्षी नयवान् समयं नयेत् ॥ इति ।

दशकुमारचरिते [ षष्ठोच्छ्वासे ] दृश्यते—अतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यरुत्सत" इति ।

वीणावासवदत्ते दृश्यते—*भोः सूयदत्त ! तत्रभवान् भरतरोहकस्त्वद्गुण-विभूतिमसहमानश्चण्डाल इव *श्वावराहकलहे द्वयोरेकतरवधेनात्मनो वृत्तिमपेक्षमाणस्त्वां नित्यं जिघांसुरीदृशेष्वासन्नापायेषु नियुनक्ति (?) ।

इदानीं श्वावराहशब्दः कथं निष्पन्न इति विचारपदवीमवतरति । अत्र जयमङ्गलः—श्वा च वराहश्च तदीयमिव श्वावराहं कलहम् । तस्येदमित्यण् । इति । सर्वपथीना-कारेणोक्तम्—श्ववराहयोरिमं श्वावराहम् । तस्येदमित्यण् । भरतमल्लिकेनाप्युक्तम्—श्वा च वराहश्चेति द्वन्द्वे श्ववराहे वेति परसूत्रेण पूर्वपदस्य विकल्पेन दीर्घत्वम् । स्वमते श्विराजोऽदा [ २१३ ] इत्यस्य योगविभागात् पक्षे पूर्वपदस्यादन्तत्वं सिद्धम् । अत्र तु तत्करणेऽपि न क्षतिः विकारसङ्घेत्यादिना [ ४३५ ] इदमर्थे ष्णे वृद्धैरेवेष्टसिद्धेः । इति । ( क्रमशः )

---

* Madras Oriental Series No. 2 पुस्तके "भो सूर्य" इति पाठ उपलभ्यते, स च व्यक्तमेव प्रामादिकः । श्वावरह इत्यत्र च केवलं वराह इति पाठस्तत्र श्वा-शब्द-स्त्रुटितः ।

# वेदान्तविमर्शः

[ श्रीचारुकृष्णदर्शनाचार्यः ]

उक्तं च भगवता "गतसङ्गस्य मुक्तस्ये"त्यत आत्मसाक्षात्काराकारवृत्तौ उपासनासहकारित्वं कर्म्मणां सिध्यति। तस्मात् "न कर्म्मणा न प्रजया धनेने"तिकर्म्मनिषेधः केवलकर्म्मपरः सन्न्यासश्रद्धापरो वा।

यदि च कश्चित् प्रह्लादजडभरतादिवत् पूर्वकर्म्मप्राबल्यात् जन्मत एव शुद्धसत्त्वो विषयविरक्तः समाधिमान् स्यात्, नास्ति तस्य कर्म्मापेक्षा सन्न्यासाद्यपेक्षापि, यस्य तु मुमुक्षोर्विषयविरक्तस्यापि गृहस्थस्य कुतश्चित् प्रतिबन्धात् कर्म्मणां बाधस्तस्यैव सन्न्यासोऽनुष्ठेयः।

आत्मसाक्षात्कारे विशुद्धं मन एव करणं तादृशमनःसम्पत्तौ च नित्यनैमित्तिकं कर्म्म ध्यानं च कारणं, गृहस्थादेः कर्म्मवत् सन्न्यासिनां ध्यानेनैव जायते वैशद्यं चेतसः। यथाह भगवान्— "ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।

अन्ये सांख्येन योगेन कर्म्मयोगेण चापरे॥" इति।

श्रुतिश्च "ज्ञानप्रसादेन विशुद्धसत्त्व"इति। न चैषा श्रुतिर्नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयति, किन्तु चक्षुरादिभिरगृह्यमाणस्याप्यात्मनः सन्न्यासिनां ध्यानैकसाध्यवैशद्योर्जितचित्तमात्रग्राह्यत्वम्। तथाच श्रुतिः—"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्म्मणा वा।

ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः॥" इति। "अत्र ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या ज्ञानपदेन बुद्धिरुच्यते, ध्यायमानो ज्ञानप्रसादं लभते ज्ञानप्रसादेन चात्मानं पश्यतीति क्रमो द्रष्टव्यः। संशयादिमलरहितस्य प्रमाणस्यैव तत्त्वसाक्षात्कारहेतुत्वात् ध्यानक्रियायाः प्रमितिसाधनत्वाप्रसिद्धेरि"त्यानन्दगिरिः। मुण्डकश्रुतिश्च मुण्डिनां सन्न्यासिनामुपासाप्रतिपादिकेतिकर्मनिन्दया ज्ञानप्रशंसामाह स्म।

तस्माज् ज्ञानोत्पत्तौ नाराद्रुपकारकत्वमात्रं कर्मणां किन्तु सन्निपत्योपकारकत्वमपि, यथाह भगवान् सूत्रकारः "विहितत्वाच्चाश्रमकर्मापि" "सहकारित्वेन चे"ति। श्रुतिश्चाह "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि संपद्यते न च पुनरावर्त्तते" इति। स्मृतिश्च "कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥ तस्मादसक्तः सततं कार्यं कर्म समाचर। असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥" "कर्मणैव हि संसिद्धिमास्थिता जनकादयः।" इति। "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति च योगैकदेशिमतमुक्तं। "वर्णाश्रमोक्तं सर्वत्र विषाक्तं कामवर्जितम्। विधिवत् कुर्वतस्तस्य मुक्तिं गार्गि करे स्थिता॥" इति योगियाज्ञवल्क्योक्तेरिति ज्ञेयम्॥

विद्या च श्रवणमननोपजातनिदिध्यासन-यज्ञादिसंस्कृतेन मनसा ब्रह्मणः साक्षात्कारं

नतु वाक्यार्थज्ञानं, वाक्यस्य प्रत्यक्षाहेतुत्वादित्युक्तमधस्तात्, दशमस्त्वमसीत्यत्रापि शाब्दज्ञानोत्तरमेव स्वस्य दशमत्वेनाध्यक्ष्यमिति दर्शितं सूत्रभाष्ये। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति ध्यानेनैव चित्तस्य शुद्धेरात्म-दर्शनमुक्तं सन्न्यासिनाम्, भगवता च "ध्यानेनात्मनि पश्यन्ती"ति ध्यानस्यैव दर्शनकरणत्वमुक्तं वेदान्तिनां न श्रवणस्य, न च श्रवणेन पश्यतीति कुत्राप्युक्त-मिति। श्रुतिस्मृतिभ्यां ध्यानस्यैव करणत्वप्राप्तेर्ध्यानमेव साक्षात्कारे साक्षात् साधनं श्रवणमनने च तत्साधनभूते प्रयोजकमात्रे इत्येव सम्यक्।

प्रसिद्धवेदान्तविशुद्धतत्त्वं प्रसाध्य निर्धूय च दोषजालम्।
निबद्धवेदान्तविमर्श एष तनोतु सातं सततं सतां वः॥ इति शम्।

इति श्रीचारुकृष्णदर्शनाचार्यकृतौ वेदान्तविमर्शे द्वितीयो भागः। समाप्तश्चायं ग्रन्थः।

---

# मृदूक्तेः परा काष्ठा

Paris-प्रदेशाच् श्रीकमलेशवन्द्योपाध्यायेनामृतबाजारपत्रिकायां ( March 25, 1959 ) तारवार्ता प्रेषिता—

तिव्वतप्रदेशगतव्यतिकरवर्णनप्रसङ्गेन नेहेरुमहोदयेन यदुक्तं "तत्र सङ्कल्पानां सङ्घातो न पुनः शस्त्राणां वा भौतिकशरीराणां वेति ( "a clash of wills rather than a clash of arms or physical bodies") सा खलु मृदूक्तेः परा काष्ठा। तिव्वतस्य चीनदेशांशरूपेण वर्णनमपि राजनीतिकभूगोलानुसारेण, न खल्वस्य भौतिक-भूगोलेन संवादो वर्तते (a piece of political geography not correspond-ing to physical geography) इति।

---

# शुद्धिपत्रम्

मञ्जूषायास्त्रयोदशवर्षस्य सप्तमाङ्के केचन प्रमादाः परिलक्षिताः। तेऽत्र प्रदर्श्यन्ते।

| पृ० | पं० | अशुद्धम् | पठनीयम् |
|---|---|---|---|
| १३० | २४-२५ | सावेकाच...अत एव | ० ( निष्काशनीयम् ) |
| १३३ | २८ | सप्तम्येकवचने | सप्तमीबहुवचने |
| १४० | १० | तुषारशुभ्राऽम्बर० | तुषारशुभ्रोऽम्बर० |
| १४० | १४ | करुणातिपूर्णा | करुणार्तिपूर्णा |
| १४१ | २२ | मेकैकशस्ते मृदुहस्तमुष्टिं | मेकैकशस्ते मृदुहस्तमुष्टिं यत्नेन धीरं स्वकरेण धृत्वा |

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

| May, 1959. | १८८१-शकीय-ज्यैष्ठस्य १३श-वर्षस्य नवमी संख्या | Vol. XIII No. 9 |
|---|---|---|

## प्रार्थना

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

[ ऋ० सं० ७।६०।१ ]

त्र्यम्बकं देवादिदेवं महेश्वरं यजामहे पूजयामः सुगन्धिं दिव्यगन्धोपेतम्। पुष्टिवर्धनम् सर्वविधसमृद्धवर्धयितारम्॥ उर्वारुकम् इव कर्कटीफलमिव पक्वं बन्धनात् वृन्तात् अहं तत्प्रसादेन मृत्योः मरणात् मुक्षीय मुक्तो भूयासम्। अमृतात् अमरणात् मा मुक्षीयेति शेषः॥

---

## आभाणकादयः

१। Make yourself an honest man and then you may be sure there is one rascal less in this world. CARLYLE.

आत्मानं साधुं विधेहि। तर्हि जगदिदमूनमेकेन दुरात्मनेत्यत्र निःसंशयः स्याः।

२। स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य।

Greek. Hapasa de khthōn andri gennaiōi patris.
Every land is a fatherland to the man of lofty courage.

विपुलधैर्यस्य पुरुषस्य सर्वा भूमिर्मातृभूमिः।

३। Greek. Autos ti nūn drā, khoutō daimonas kalei:
Tōi gar ponoūnti khō theos sullambanei.

Be active first thyself, then seek the aid of heaven ; for God helps him who helps himself.

आदौ स्वयं प्रयतस्व, ततो देवस्य साहायकं प्रार्थयस्व । यः खलु स्वात्मनः साहायकमारचयति देवोऽपि तस्य साहायकं करोति ।

---

## आख्यातिक्यो विभक्तयः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

लिड्विषये पाणिनिनोक्तं लिटस्तझयोरेशिरेच्, परस्मैपदानां णलतुसुस्थलथुसणल्वमाः [ ३।४।८१-८२ ] इति । तत्र एश् इत्यत्र शकारः सर्वादेशार्थः ।

शकारो हि सर्वार्थक-विश्वशब्दस्य प्रतीकः । अत एव शिदादेशः सर्वादेशो भवति, शित्प्रत्ययश्च सार्वधातुकसंज्ञो भवति ।

इरेजित्यत्र चकारः चितः [ ६।१।१६३ ] इत्यन्तोदात्तत्वार्थः। चकारो हि समुच्चीयमानानामन्ते सन्निवेश्यते। अत एवान्तोदात्तत्वबोधनाय चकारोऽनुबन्ध आसज्यते ।

णल् इत्यत्र णकारो धातोरन्त्यस्वरस्योपधाकारस्य च वृद्ध्यर्थः। गुणवृद्धिनिषेधार्थं ङकारोऽनुबन्ध आसज्यते। अनन्तरौ चानुनासिकौ ञकारणकारौ वृद्धिविधानार्थमुपादीयेते। किञ्च गुणशब्दे णकारो वर्तते। गुणश्च वृद्धेरप्युपलक्षणम्। अत एव गुणवृद्ध्यर्थं णकारोऽनुबन्धतयोपयुज्यते। ञकारे णकारे च घोषवत्त्वमानुनासिक्यं चेत्यतिरिक्तं ( वर्धितं ) गुणद्वयं वर्तत इति तयोर्वृद्धिविधान उपयोगः।

लिति परे प्रत्ययात् पूर्वमुदात्तं भवति। लितीति सूत्रे [६।१।१९३] भीह्रीभीहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पितीति पूर्वसूत्रात् प्रत्ययात् पूर्वमित्यंशस्यानुवृत्तेः। य र ल वा अन्तस्थाः। तत्रान्त्यात् पूर्वत्वं लकारस्य, अत एव लिति परे प्रत्ययात् पूर्वमुदात्तं भवति।

किञ्च तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तम्० [ ६।१।१८. ] इति सूत्रेण बहुत्र लसार्वधातुकप्रत्ययोऽनुदात्तो भवति, ततः पूर्ववर्ती च स्वरः प्रायेणोदात्तो भवति। अत एव लित्त्वं प्रत्ययात्पूर्वस्योदात्तत्वं संसूचयति।

लुटः प्रथमस्य डारौरसः [ २।४।८५ ] इति सूत्रेण लुटः प्रथमपुरुषैकवचनस्य डादेशो विधीयते। टेः [ ६।४।१५५ ] इति सूत्रेण डिति परे भस्य टेर्लोपो भवति, डित्करणसामर्थ्यादभस्यापि टेर्लोपो भवति। टेर्लोपो विधातव्यः, टकारोत्तरवर्णष्ठकारो महाप्राणतया समधिकप्रयत्नेनोच्चारणीयः, अत एव तदुत्तरवर्णो डकारोऽनुबन्ध आसज्यते।

---

## न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे

प्राज्ञः प्रागेव तत् कुर्याद् यद् विद्याद्धितमात्मनः। चरकसंहिता १।३।५४

---

## के त्याज्याः के च सेव्याः

पापवृत्तवचःसत्त्वाः सूचकाः कलहप्रियाः।
मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः॥
परापवादरतयश्चपला रिपुसेविनः।
निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः॥
बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः॥
सुमुखाः सर्वभूतानां प्रशान्ताः संशितव्रताः।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः॥ चरकसंहिता।

वृत्तं चेष्टितं शरीरव्यापारः। सत्त्वं मनः। एषां पापत्वं पापहेतुत्वात्। निर्घृणा निष्कृपाः। बुद्ध्यादिभिर्वृद्धाः प्रभूतप्रशस्तबुद्ध्यादियुक्ता इत्यर्थः। गतव्यथा गतशोकादय इत्यर्थः। सुमुखाः प्रसन्नमुखाः। संशितव्रताः सत्यसन्धाः।

---

# रवीन्द्रनाथस्य लेखेषु संस्कृतवचनानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विदितमेवैतत् प्रायेण सर्वेषामेव भारतीयानां यत् कविवर्यस्य रवीन्द्रनाथस्य संस्कृत-भाषायामप्यनितरसाधारणं प्रावीण्यमासीदिति। न केवलं तेनोपनिषदः परिपपिरे, सुप्रसिद्धानि काव्यनाटकाख्यानाख्यायिकादीनि चुलुकीचक्रिरे, सुभाषितसहस्राण्यपि कण्ठे चक्रिरे, मनियर् विलियम्स्प्रणीतविस्तृततरोऽभिधानकोषोऽप्यापादचूडमधिजगे। तन्नैतदाश्चर्यं यत् कविप्रवरस्यास्य लेखेषु संस्कृतकवीनां वचांसि श्लोकाश्च संस्कृतभाषा-मया आभाणकाश्च दृश्येरन्। अधन्यतया पुनरस्माकं शोधकमहोदयानां संस्कृतभाषा-नभिज्ञतया संस्कृतवचनानीमानि प्रमादशतशबलान्येव प्रायेण समुद्वेजयन्ति मानसानि सहृदयानाम्। अद्य "प्रजापतिर निर्बन्ध" समाख्याख्यायिकागतानि वचनानि विमृश्यन्ते।

तत्र प्रथमे परिच्छेदे दृश्यते कुमारसम्भवगतः श्लोकः—

स्वयं-विशीर्ण-द्रुमपर्ण-वृत्तिता परा हि काष्ठा तपसस्तया पुनः।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः॥ इति।

परमरमणीयोऽयं श्लोकः "क्वचिन्निपातेनाप्यभिधानम्" "सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्ये"ति च सूत्रद्वयस्योदाहरणभूतो विलसति।

रवीन्द्ररचनावल्याश्चतुर्थे खण्डे २२६तमे पृष्ठे पराहि एकपदरूपेण मुद्रितं दृश्यते तत्तु न समीचीनम्। न खलूत्तराहिवत् पराहिशब्दः समस्ति।

तृतीये परिच्छेदे दृश्यते—"अधिकन्तु न दोषाय" इति शास्त्रवचनमिति। समग्रः श्लोकः इदानीमस्माभिर्न स्मर्यते, वाचकमहोदयेषु कैरपि विज्ञायते चेत् कृपया नो निवेद्यताम्। तत्रैव प्रतिवचनं दृश्यते "सर्वमत्यन्तगर्हितम्" इति। एतस्य मूलं चाणक्यशतकम्। तत्र हि दृश्यते—

अतिदर्पाद्धता लङ्का अतिमानाच्च कौरवाः।
अतिदानाद् बलिर्बद्धः सर्वमत्यन्तगर्हितम्॥ इति।

रवीन्द्ररचनावल्याश्चतुर्थखण्डस्य २३१तमे पृष्ठे 'सर्वमत्यन्तगर्हितं' इति सानुस्वारं वचनं मुद्रितम्, तच्च न युक्तम्, संस्कृतभाषायामावसानिकस्य मकारस्यानुस्वारविधायकानां "मो बिन्दुरवसाने वा"-प्रभृतीनां सूत्राणामप्रामाणिकत्वात्।

तृतीयस्मिन्नेव परिच्छेदे ( र० र० पृः २३४ ) दृश्यते—"शुभस्य शीघ्रं" इति। अत्रापि शीघ्रम् इति पठनीयम्। "शुभस्य शीघ्रम्, अशुभस्य कालहरणम्" इत्याभाणको विहरति वङ्गेषु विदुषां वदनेषु। शुभस्य शीघ्रम् अनुष्ठानमपेक्ष्यत इति शेषः।

तस्मिन्नेव परिच्छेदे ( र० र० पृ० २४२ ) दृश्यते—

"कोपो यत्र भ्रू कुटिरचना, निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयं, यत्र दृष्टिः प्रसादः।"

इति। अत्र स्मितमित्यनुवादस्य नपुंसकत्वेऽपि अनुनय इति विधेयस्य पुंस्त्वमेवापेक्ष्यते अनुनयशब्दस्याजहल्लिङ्गकत्वात्। हेवरलिन्ग्रन्थे चिरकुमारसभानाटके च समीचीनः पाठ उपलभ्यते। अमरुशतके दृश्यते—

कोपो यत्र भ्रू कुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो यत्र दृष्टिः प्रसादः।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः॥ इति।

आख्यायिकायाः पञ्चमे परिच्छेदे योहानहेवरलिन्संस्कृतकाव्यसंग्रहानुरोधेन मुद्रितम्—

मुग्धस्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं।
चेतश्चूम्बतिचन्द्रचूडचरणध्यानामृते वर्तते॥

इति। अत्र "मुग्धस्निग्ध०" इत्यत्र "मुग्धे स्निग्धैः" इति पठनीयम्। चरणान्तरे च 'चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते' इति पठनीयम्। भर्तृहरिविरचितवैराग्यशतके समग्रः श्लोको दृश्यते—

किं कन्दर्प शरं कदर्थयसि रे कोदण्डटङ्कारितं
रे रे कोकिल कोमलं कलरवं किं वा मुधा जल्पसि।
मुग्धे स्निग्धविदग्धचारुमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते॥ इति।

रवीन्द्ररचनावल्या हे-गतप्रमादाः परिरक्षिताः, अधिकन्तु चुम्बधातोरुकारो दीर्घीकृतः। तत्रैव ( र० र० पृ० २५७ ) वर्तते—

इदमधिकमनोज्ञा चापकानेनापि तन्वी।
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

इति। एतस्य मूलं शकुन्तलागतं पद्यम्—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

इति। परम् "इयमधिकमनोज्ञा चापकानेनापि तन्वी" इत्यनुकरणश्लोके छन्दोभङ्गः सञ्जातः। स च कविना न लक्षित इति प्रतीयते, उत्तरत्र "श्लोकस्य चरणः परिवर्तनीयः, ( छन्दोभङ्गो भवेच्चेद् भवतु नाम )—वासन्तीनवपरिमलोद्गाररुमालां" (इति।) इत्युक्तेः, अत्र पुनस्तथाविधवचनानुपलब्धेः।

तत्रत्येऽष्टमे परिच्छेदे ( रवीन्द्ररचनावली पृः २८२ ) दृश्यते—यत्ने कृते यदि न सिध्यति कोऽत्र दोषः। समग्रः श्लोकः घटकर्परीये नीतिसारे ( पृः ५०५ ) पञ्चतन्त्रादिषु चोपलभ्यते—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
[ उद्योगिनं सततमत्र समेति लक्ष्मीरिति पाठान्तरम् ]
दैवेन देयमिति [ दैवं हि दैवमिति पा० ] कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥

इति। अविमारके च दृश्यते ( ३।२२ )—

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
को वा न सिध्यति ममेति करोति कार्यम्।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्यसिद्धिः॥

कैश्चित् पण्डितम्मन्यैः 'यत्ने कृते यदि न सिध्यति कोऽत्र दोषः' इति चरणोऽपि-शब्दाध्याहारेण कोऽप्यत्र दोषो जागर्ति इति व्याख्यायते। तत्तु न समीचीनम्। स्वशक्त्या कुर्वतः कर्म न चेत् सिद्धिं प्रयच्छति। नोपालभ्यः पुमांस्तत्र दैवान्तरित-पौरुषः॥ यच्च सम्यगुपक्रान्तं कार्यमेति विपर्ययम्। पुरुषस्त्वनुपालभ्यो दैवान्तरित-पौरुषः॥ इत्यादीनां श्लोकानामसामञ्जस्यापत्तेः। ( क्रमशः )

---

# लौकिकं निर्वचनम् (Folk Etymology)

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## *विष्कम्भ—विष्कुम्भ। विस्फोटक—विषफोड़ा।*

ज्योतिषशास्त्रे ये सप्तविंशतिर्योगा विलसन्ति तेषु सर्वथा प्राथम्यमधिगच्छति विष्कुम्भो नाम। अयं च योगोऽशुभ इति मङ्गलकर्मण्यस्य पञ्च घटिकास्त्याज्याः।

योगस्य पारमार्थिकं नाम विष्कम्भ इति। परमस्य विषवत्परित्याज्यत्वात् प्राकृतजनानां मतेन विषकुम्भ-शब्द एव पृषोदरादित्वादकारलोपेन विष्कुम्भे विपरिणतः। वस्तुतस्तु विपूर्वात् स्कभ्नातेर्घञि विष्कम्भशब्दो निष्पन्नः। स्कम्भुः सौत्रो धातू रोधनार्थः। वेः स्कभ्नातेर्नित्यमिति षत्वम्। यद्यपि स्कुम्भुरपि सौत्रो वर्तते तथापि तस्य षत्वं न विहितम्।

एवमेव संस्कृत-विस्फोटक-शब्दो वङ्गभाषायां विषवद्रुजाकरत्वाद् विषफोड़ा रूपं परिजग्राह।

---

कवीन्द्र-रवीन्द्रनाथस्य

## सत्य-रक्षा ( 'पणरक्षा' )

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

दुर्गाधिपालो दुमराज ऊचे "युद्धाय सज्जीभवतात्र सर्वे।
आयान्त्यमी रे चिरशत्रवो नः सैन्या महाराष्ट्रपटच्चराणाम्" ॥१॥
आसन् नियुक्ताः सकलाः प्रकोष्ठे मध्याह्नकाले यवपूपतापे।
शब्दायमाने पटहे तु दुर्गे ते धावमाना बहिरागता द्राक् ॥२॥
प्राकारमारुह्य जनैश्च सर्वैर्दृष्टं सुदूरे दिशि दक्षिणस्याम्।
चच्छाद कृत्स्नं गगनं पुरस्ताद् धूलिर्महाराष्ट्रतुरङ्गमोत्थः ॥३॥
उच्चैरगर्जद् दुमराजकण्ठ "एते महाराष्ट्रपतङ्गसङ्घाः।
कृपाणवह्नौ पतिता हि नोऽद्य प्रत्यागमिष्यन्ति न दुर्गभूमेः" ॥४॥
अत्रैव काले प्रभुपत्रवाही तं मारवारागतदूत ऊचे।
"आज्ञां प्रभोस्ते दुमराज! पश्य वृथा तवैषा रणसैन्यसज्जा ॥५॥
'फिरङ्गसेनापतिना समेत आयाति सिन्धिस्तव दुर्गदेशम्।
त्वमेव दुर्गाधिप! मन्निदेशात् प्रयच्छ दुर्गं प्रणिपत्य ताभ्याम् ॥६॥
जाता विरूपा समरे जयश्रीः सा साम्प्रतं मां प्रति चञ्चला या।
विनैव युद्धादजमीढदुर्गं देयं महाराष्ट्रभटेश्वराय' ॥७॥
"प्रभोर्निदेशो ननु पालनीयो वीरस्य धर्मोऽप्यविलङ्घनीयः।
जातो विरोधोऽद्य तयोर्हि मध्ये" श्वसन्नुवाचेति स दुर्गपालः ॥८॥
भूयः स दूतो दुमराजमूचे "विसृज्यतां ते समरस्य सज्जा।"
पाषाणगात्रे लिखितेव मूर्तिस्तस्थौ स तूष्णीं दुमराजशूरः ॥९॥

प्रायावसानं दिवसो जगाम गावो विचेरुः स्वदलाद्वियुक्ताः ।
छायाद्रुमूले पशुरक्षकाणां दध्वान वेणुः करुणस्वरेण ॥१०॥
"प्रभुर्यदादादजमीढदुर्गं चित्ते कृता तर्हि मया प्रतिज्ञा ।
प्राणेषु सत्सु प्रभुदुर्गमेतत् करे न शत्रोर्विसृजामि जातु ॥११॥
हा सत्यमेतन्नु मया किमद्य प्रभोर्निदेशेन विभञ्जनीयम् ।"
एवं सदुःखं हृदि चिन्तयित्वा शश्वास दीर्घं दुमराजवीरः ॥१२॥
तत्याज राजस्थलसैन्यवर्गः सरोषलज्जं निजयोद्धसज्जाम् ।
निर्वाग् वितष्ठे प्रतिहारभूमौ दुर्गाधिपालो दुमराजशूरः ॥१३॥
वासो वसाना गिरिधातुरक्तं सन्ध्यावतीर्णा दिशि पश्चिमायाम् ।
उद्धाय्य धूलिं दिवि सिन्धिसैन्या द्वारे च दुर्गस्य गतिं न्यरुन्धन् ॥१४॥
"द्वारप्रदेशे शयितो हि कोऽसौ भो भोः समुत्थाय विमुञ्च कीलम् ।"
निष्प्राणदेहो न शृणोति वाचं न कोऽपि तस्माद् वचनं चकार ॥१५॥
स्ववीरधर्मप्रभुकृत्यमध्ये जाते विरोधे प्रतिकारमाप्तुम् ।
प्राणानहासीत् प्रतिहारदेशे स दुर्गपालो दुमराजशूरः ॥१६॥

---

## भारतीय-स्वातन्त्र्यस्य मूलं वेदाः सुरसरस्वती च

[ ले० वेदप्राध्यापको रामनारायण-चतुर्वेदी ]

अमरभारतीसाहित्यजातस्य समुत्कर्षस्तावत्सर्वेषामेव सम्मतः। परमहो अस्माकं परा काष्ठेयं सुप्तुतेः यत्रान्यो जनोऽजरामरत्वलाभाय यतते तत्र सर्वतन्त्र-स्वतन्त्रा अपि साम्प्रतिका भाग्यविहीना भारतीया वयं सर्वसाधनसम्पन्नां भारत-भूषणायमानामजरामरभारतीं नाद्रियामहे। किमेतेन भारतीयानाम् अजरामरत्व-विरोधित्वमवगन्तव्यमुत जराप्रियत्वम्? यत् किमपि भवतु, अमरभारत्या अनादरे तु जराजर्जरिताङ्गानां समुत्साहरहितानां भारतीयानां दुर्दैवविलसितमेव नरीनर्ति संमुख-मिति निश्चप्रचम्।

यत्तु केषाञ्चिद् अमरभारत्यां काठिन्यकलङ्कारोपणमप्रसिद्धत्वदूषणारोपणञ्चेति, तत्तेषामविपक्वबुद्धिपरिचायकमात्रमेव। या हि भाषा सीमन्तादिसंस्कारेषु नवनीत-मृदुलेभ्यो गर्भस्थबालकेभ्यः श्राव्यते सापि किं कठिना? ययास्माकं दैनिकजीवनं व्याप्तमस्ति, जन्मोपनयनविवाहादिषु यामन्तरेण कार्यमेव न प्रचलति, मरणशय्यायां

मरणानन्तरञ्च यस्याः पाठमात्रेणात्मशान्तिः परलोकसिद्धिश्च संभवति सापि किमप्रसिद्धा ? तस्मादस्याः काठिन्याप्रसिद्धत्वकथनं मन्ये चिरात् परतन्त्राया हिन्दूजनताया दौर्भाग्य-संसूचकमेव। यथा चिरात्पारतन्त्र्यमापन्नः शुकस्तस्मान्मुक्तोऽपि न स्मरति सहसा स्वीयं वनविहारम्, अपि तु गृहस्योपर्येव भ्राम्यतीतस्ततस्तथैव वर्षशतानि पारतन्त्र्यमनुभूय मुक्ता अपि भारतीया यदि न स्मरन्ति स्वातन्त्र्यसुधाधवलितं स्वीयभाषाया अमरत्वं तन्न चित्रम्। परमेकस्मिन् दिने स्वत एव ते शुकवदस्मिन्मार्गे समेष्यन्ति। तदैव भारतस्योन्नतिरपि सम्भाविनी। यतो हि भारतस्य प्रधाना सम्पत्संस्कृतम्। गौरव-धर्मव्यापारयोश्च भित्तिः संस्कृतमेव। किन्तु संप्रति संस्कृतस्य न तथादरो यथाहि संभाव्यते। भारतभाग्यविधातारोऽपि वैषम्यदृशा परिपश्यन्ति सुरभारतीम्। हा हन्त! किं सर्वे भारतीया असंस्कृताः सञ्जाताः? किमसंस्कारस्यैतावान् प्रभावपातो यद्भारतवर्षेऽपि संस्कृतानादरो वैषम्यञ्च समुदेति। किमिदं परम-पावनं भारतभूतलम् "असंस्कृतस्थानम्" यदत्र परकीयैः संस्कृतभाषा समाद्रियते स्वकीयैः संस्कृतभाषा च तिरस्क्रियते। किमिदं राष्ट्रियत्वम्!

ये केचन कठिनमिति श्रीपाणिनिव्याकरणमधिक्षिपन्ति, ते तु बालबुद्धय एव। यतस्ते नेदं जानन्ति यद् व्याकरणमन्तरा कस्या अपि भाषायाः सुस्थिरत्वमद्यापि न भूतमस्ति भविष्यति च। परोलक्षवर्षप्राचीनमपि संस्कृतमद्यत्वेऽपि यन्नवनवतरं प्रतिभाति सोऽयं भगवतः श्रीपाणिनेरेव महिमा। किञ्च बालबुद्धीनाम्मतमभ्युपेत्यापि वच्मि यन्नाधिकं काठिन्यम् इङ्गलिशभाषापेक्षयामरभारत्याम्। दृश्यताम्—इङ्गलिशभाषायाम् "अहं गृहं गच्छामि" अस्मिन्नर्थे I go home इत्येषैव वाक्य-रचना भवितुमर्हति न त्वन्या Go I home इति Home I go इति वा विलोमानु-लोमेनेति। परममरभारत्यां नैषः प्रतिबन्धः, अपि तु वक्तुर्विवक्षैव वाक्यरचनायां मानम्। स हि यथेच्छम् अहं गृहं गच्छामि गच्छाम्यहं गृहम् गृहमहं गच्छामीत्यादीनि वाक्यानि व्याहरन्नापराध्यति। अपि च इङ्गलिशभाषायां स्पेलिङ्गरचने महान् क्लेशः कस्य न विदितः? सत्येवम् इङ्गलिशभाषापेक्षयामरभारत्यां काठिन्यमुत सुरसरस्वत्यपेक्षया इङ्गलिश-भाषायामित्युभयभाषाविदस्तटस्था विद्वांस एव विचारयन्तु। अथ च न्याय-व्याकरण-मीमांसा-वेदान्तादि-गम्भीर-शास्त्रीय-विषय-प्रतिपादनावसरे भवतु नाम गाम्भीर्यम्, किन्तु कविकुलगुरोः कालिदासस्य प्रसादादिगुणगणालङ्कृतां सरलसरलां कविताघनावलिमाकलय्य किन्नाह्लादमेति मनोमयूरः।

प्रधानस्यास्माकं दर्शनशास्त्रस्य तु कथैव का? तत्तु निखिलविश्वव्यापिविद्यानां मूर्ध्नि राराज्यत एव। किन्तु संस्कृतवाङ्मये राजनीतिशास्त्रस्यार्थशास्त्रस्य वाऽभावो

ऽपि न शक्यः। पश्यन्तु संस्कृतं राजनीते भण्डागारम्। यथा चाणक्यः स्वीयनैतिक-बलेन नव नन्दान्नाशयामास तद्वदेव भारतीयैरपि शान्तिमय्या नैतिकक्रान्त्या स्वातन्त्र्यमवाप्तम्। न केवलमेतदेव, पाकिस्तानविभागीया राजनीतिरपि वैदिकवाङ्मये जागर्तितराम्। तथाहि—

"देवाश्च वाऽसुराश्च। उभये प्राजापत्याः पस्पृधिरे। ततो देवा अनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥१॥ ते होचुः। हन्तेमां पृथिवीं विभजामहै, तां विभज्योपजीवामेति। तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः ॥२॥ तद्वै देवाः शुश्रुवुः। ··ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥३॥···ते प्राञ्चं विष्णुं निपाद्य। छन्दोभिरभितः पर्यगृह्णन् गायत्रेण त्वा छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा छन्दसा परिगृह्णामीति पश्चाज्जागतेन त्वा छन्दसा परिगृह्णामीत्युत्तरतः। इति शतपथब्राह्मणे १।२।३।२-६। अनुव्यं न्यग्मूर्तिं प्राप्ता इत्यर्थः।

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः॥

इति सूक्तिस्तु सुप्रसिद्धैव। किमधिकं "भारतभूमण्डलस्य विभागो भविष्यति" इत्यपि पुराणकाले श्रीमद्भागवते द्वादशस्कन्धे सुस्पष्टं समुद्घोषितमासीत्।

सिन्धोस्तटं चन्द्रभागां कौन्तीं कश्मीरमण्डलम्।
भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः॥

इति श्रीमद्भागवते १२।३।२७

किं महाभारतेऽपि नीतेर्न्यूनता? रामायणे वा तदभावः? अमरभारतीयवाङ्मये पदेपदे नीतिर्नरीनृत्यते। परमिदमवधेयम्, भारतीया राजनीतिः धर्मप्रधाना। पाश्चात्त्य-राजनीतिश्चार्थप्रधाना। तस्मादस्माकं नीतेर्मूले शान्तिः, तेषाञ्चाशान्तिः। एवं सत्यपि यदि मूलिकाकर्तनमिव जीवान् कर्तयितुं विदेशीया राजनीती रोचते आधुनिकेभ्य-स्तर्हि को हि भगवानवतरिष्यति इमानुपदेष्टुम्? प्रत्यक्षमीक्ष्यतां धर्मप्रधानाया भारतीयराजनीतेः फलं, यदस्माकं साधारणधर्मेषु प्रथमतया परिगणितं केवल-महिंसाव्रतमेव स्वराज्यप्राप्तये समर्थमभूत्। तच्चाहिंसाव्रतं संस्कृतसाहित्यवसन्ते प्रथमं पिकरुतम्, अन्ये सत्यादयस्त्ववशिष्यन्त एव। भोः पाश्चात्त्यसभ्यतासन्दूषितमतयः! किमनेनाहिंसाव्रतेन न ज्ञातमधुनापि भवद्भिर्यद्भारतीयधर्मे कियद्विज्ञानमिति। एकेनैव धर्मविज्ञानेनैतावत्फलञ्चेदन्येषामुपासनया कियत्फलं भविष्यतीति भवन्त एव सावधानाश्चिन्तयन्तु। उचितमासीद्यदनेन विज्ञानेन भारतीयधर्मे कलङ्कारोपादनुतप्यन्तां भवन्तः। परं तदल्पीयस्यापि बुद्ध्या साध्यम्। स्फुटं श्रूयतां धार्मिकः

पटहप्रणादः—'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' येन भारतीयधर्मस्य विज्ञानमूलत्वं स्फुटमेव मनुना घोषितम्।

यत्तु वदन्ति संस्कृतवाङ्मये समाजशास्त्रस्य नामापि नोपलभ्यत इति तत्तु तेषां संस्कृतसाहित्यानभिज्ञत्वपरिचायकमेव। महाभाष्ये ग्रामशब्दमवलम्ब्य कीदृशी ग्रामवसतिः? कति च तत्र जातयः? कथञ्च तेषां निवासालयविभागः स्यादिति सर्वमपि विस्तरेणोक्तम्। मनुस्मृत्यादिग्रन्थेषु पुराणेषु च बहुशः समुपलभ्यते सामाजिकी व्यवस्था। प्राचीनकाले समाजशास्त्रं राजनीतेरङ्गमासीन्न तु स्वतन्त्रं तस्य रूपमिति कथान्तरम्। परं पाश्चात्त्यदेशे यल्लभ्यते समाजशास्त्रं तस्य जनकः संस्कृतं वाङ्मयमेव। संस्कृतवाङ्मयस्यार्थशास्त्रीयं क्षेत्रमपि नैव संकुचितम्। अर्थोपार्जने यद्यदुपकरणं भवितुमर्हति तस्य सूक्ष्मातिसूक्ष्मरीत्या सारगर्भं विवेचनं संस्कृतसाहित्ये प्रचुरमात्रयोपलभ्यते। तन्निदर्शनस्वरूपं चाणक्यस्य "अर्थशास्त्रम्" पर्याप्तम्। वैदिकलौकिकसंस्कृतवाङ्मयस्य धार्मिक-दार्शनिक-क्षेत्रयोः समुन्नतिस्तु विश्वासां विद्यानां मौलिमण्डनायमानेत्येकस्वरेण स्वीकुरुते विश्वमिदं विश्वम्।

अतः प्रार्थये भूयो भूयो भारताधिनेतॄन् यत्पुनरपि भारतवर्षे सुखयन्तु परः-सहस्रेभ्यो वर्षेभ्यः पारतन्त्र्यपञ्जरपिण्डिताङ्गां स्वीयां मातरं वेदविद्यां सुरभारतीञ्च स्वातन्त्र्यसिंहासनारूढाः श्रीकृष्ण इव देवकीमिति शम्।

---

## "नृपतिसभाम्"

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

### *किमकार्यं टीकाकृताम्?*

नीतिवर्मविरचिते कीचकवधकाव्ये दृश्यते श्लोकः [ २।२५ ]—

अथ नयनजलेन नदीयमाना पितृपतये व्यसनेन दीयमाना।
मनसि परिभवेन वेपमाने नृपतिसभामगमन्नवेऽपमाने॥

इति। व्याख्यातं चेदं टीकाकृता—अथ अनन्तरं सा द्रौपदी नृपतेर्विराटस्य सभामगमत् इत्यादि। अत्र नृपतिसभामिति पदं दुष्टम्, सभा राजामनुष्यपूर्वा [ २।४।२३ ] इति सूत्रेण नपुंसकताविधानात्। स्वं रूपं शब्दस्याशब्दसंज्ञा [ १।१।६७ ] इति सूत्रे वार्त्तिकं जित्पर्यायवचनस्यैव राजाद्यर्थमिति। व्याख्यातं चेदं भाष्यकृता—जिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—पर्यायवचनस्यैव ग्रहणं भवति। किं प्रयोजनम्? राजाद्यर्थम्। सभा राजामनुष्यपूर्वा। इनसभम् ईश्वरसभम्। तस्यैव न भवति।

राजसभा। तद्विशेषाणां च न भवति। पुष्यमित्रसभा चन्द्रगुप्तसभा। इति। अत्र कैयटः। अराजेति पर्युदास आश्रीयते। तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति। इति। अत्र नागेशः कश्चित्तु अराजेतिच्छदाभावात्, किं च राजशब्दः शब्दपरो मनुष्यशब्दश्चार्थपर इति दुर्लभं स्यात्। किं च अमनुष्यशब्देनापि मनुष्य-पर्यायाणां ग्रहणं स्यादितीदं वाचनिकमेवेत्याह। इति। पदमञ्जरीकृतोक्तम्। द्वावत्र नञौ—अराजपूर्वा अमनुष्यपूर्वा चेति। तत्र नञिवयुक्तन्यायेन राजशब्दसदृशाः पर्याया एव गृह्यन्ते, अमनुष्यशब्दो रूढिरूपेणेति। कथं तर्हि अमनुष्यकर्तृके च [३।२।५३] पित्तघ्नं घृतमित्युदाहरिष्यते। व्याख्यानात्तत्र मनुष्यादन्यमात्रस्य ग्रहणं न रूढिरित्यर्थः। इति।

तन्त्रप्रदीपः। नृपतिसभामगमन्नवेऽपमान इति कीचकप्रयोगः नृपतिशब्दस्य मनुष्यराजवचनत्वेन राजविशेषणत्वात्। यथा चन्द्रगुप्तसभेति।

भाषावृत्तिः। नृपतिसभामगमन्नवेऽपमान इति तु विशेषविवक्षायां गजपतिवत्।

भाषावृत्त्यर्थविवृतिः। इनशब्द ईश्वरशब्दश्च राजपर्यायः, नृपतिशब्दोऽपि तथेत्याशङ्क्य परिहरति—विशेषेति। गजपतिवदिति। गजपतिर्यथा दाक्षिणात्य एव, पाश्चात्त्य एव यथाश्वपतिस्तथा पौरस्त्य एव नृपतिरिति विशेषणशब्दोऽयं नृपतिर्न तु राजपर्याय इत्यर्थः। विहसति युवतिसभा तत्र सकला। सर्वतोऽक्तिन्नर्थादिति ङीषि युवतीति सम्बोधनान्तम्।

दुर्घटवृत्तिः। नृपतिरिति गजपतिवन्न राजपर्याय इति रक्षितः। यद्वा नृणां पतिर्यस्यां सभायामिति बहुव्रीहौ कर्मधारयः। एवञ्चानञ् कर्मधारय इत्यनुवृत्तेर्न क्लीबत्वम्।

शब्दकौस्तुभे दुर्घटवृत्तिवचनान्युद्धृतानि।

प्रौढमनोरमा। कथं तर्हि नृपतिसभामगमन्नवेपमान इति कीचकवधे? गजपति-वद्राजविशेषवाचित्वादिति रक्षितः।

तत्त्वबोधिन्यां कौस्तुभमतमुद्धृतम्।

संक्षिप्तसारः। अराजराजार्थाच्च। ७।२४४

वृत्तिः। इनसभम्। ईश्वरसभम्। अराजार्थात्तु। चन्द्रगुप्तसभा। नृपतिसभा। तथाच कीचकवधः—नृपतिसभामगन्नवेऽपमान इति। केचिदत्र नृपादिशब्दानामपि राजार्थवत्त्वमिच्छन्ति। तथाचामरकोशः—दासीसभं नृपसभं रक्षःसभमिमा दिशः इति।

टीका। नृपति-शब्दोऽपि न राजपर्यायः किन्तु नराणां पतित्वेऽपि यौगिकः। केचिदित्यादि। एतेनैतदुक्तं न नृपादिशब्दा यौगिकाः किन्तु रूढित्वाद्राजार्था एवेति केषाञ्चिन्मतम।

सुपद्मम्। कथं नृपतिसभामगमदिति ? नृपत्युपलक्षिता सभा नृपतिसभेति शाकपार्थिवादित्वात्। ४।३।१०६ वृत्तिः।

प्रयोगरत्नमाला। शालार्थाप्यमनुष्यार्थाद्राजार्थादप्यराजतः। नृपतिसभामगमन्नवेऽपमाने इति कीचकवधे। नरः पतयो यस्यां सा चासौ सभा चेति नृपतिसभामगमदित्यर्थे न दोषः। हरति नृपसभे वादिसिंहासनानीति तारकस्तुतौ। चन्द्रगुप्तवद्राजविशेषपरो न राजमात्रवाचकः। अपिशब्दाद् वायं क्वचित्प्रयोग इति दिक्।

प्रभाप्रकाशिका। नवे अपमाने सति नृपतिसभां तच्छालागृहम् अगमत् इत्यत्र नृशब्दस्य बहुत्वे नरः पुरुषाः पतयो यस्यां सा सभा नृपतिः। पश्चात् कर्मधारयः। नृपतिशब्दस्य राजार्थत्वाभावात् ततो न क्लीबत्वम्। अथ नयनजलैर्नदीयमाना पितृपतये व्यसनेन दीयमाना। मनसि परिभवेन वेपमाने नृपतीति शेषपादः। हरतीति। नृपस्य सभा नृपसमूह इव आदिसिंहासनानि हरतीत्यत्र चन्द्रगुप्तशब्दो यथा राजविशेषार्थकस्तथा नृपशब्दोऽप्ययं यस्य कस्यापि राजविशेषस्य वाचको न तु राजमात्रस्य राजत्वावच्छिन्नस्य वाचकः। यथा द्रव्यपदादुक्ततात्पर्यमर्यादया द्रव्यत्वावच्छिन्नमध्यपतितस्य घटस्य द्रव्यत्वप्रकारेणैव प्रतीतिः। तथा नृपपदादपि तात्पर्यवशान्नृपत्वावच्छिन्नमध्यपतितनृपविशेषस्य राजत्वप्रकारेणैव प्रतीतिः, सामान्यशब्दस्य विशेषपरत्वात्। तथाच राजार्थादित्यनेन राजत्वावच्छिन्नवाचकपर्यायोपादानान्नृपशब्दस्य तु यत्किञ्चिद्राजवाचकत्वात् ततो न क्लीबत्वमिति भावः। अपीति। अपिशब्दस्य समुच्चयार्थकत्वात् तद्बलाद्राजसामान्यवाचकादपि वा कदाचिदप्राप्तस्यापि क्लीबत्वाभावस्य समुच्चितत्वादयं क्लीबत्वरहितः प्रयोगो न विरुद्ध इति दिग् दर्शिता। दिगर्थस्तु नॄन् पातीति योगार्थबलाच्छृङ्गग्राहिकया क्वचित् सङ्केतितो नृपशब्दोऽयं सामान्यवाचिनृपशब्दाद् भिन्न इति न दोष इत्याद्यूहनीयम्। ६।८८४

गूढप्रकाशिका। नृपतिसभामिति। अस्यार्थः। प्रकृतत्वाद् द्रौपदीपरिभवेन कीचकपादप्रहारप्राप्तपराभवेन वेपमाने कम्पमाने मनसि नवे अपमाने सति अथ परिभवानन्तरं नृपतिसभाम् अगमत्। कीदृशी ? नयनजलैः नदीयमाना नदीवाचरतीति क्विप्, ततः शानादिः। नयनजलप्रवाहवतीत्यर्थः। पुनः कीदृशी ? व्यसनेन दुष्खेण पितृपतये यमाय दीयमाना आत्मानमिति (?) शेषः। पितृपतिनाहं (?) नीयतामिति कथनविशिष्टेति फलितार्थ इति। नरः पतयो यस्यामिति। अनेन सामान्यनृमात्रपतिकत्वेन सभाया अनुग्रहनिग्रहक्षमत्वं सूचितम्। हरतीति। तारास्तुताविति केषुचित्पाठः, तारकस्तुताविति केषुचित्पाठो दृश्यते। परपाठ इदं पद्यम्।

संग्रामे संप्रवृत्ते त्वयि दनुजपते त्वच्चमूनिर्जितक्ष्मा
शक्रादीनां सुराणां हरति नृपसभे वादिसिंहासनानि।

तद् दृष्ट्वा नागवर्गा निजनिजविभुतां संपरित्यज्य नूनं
त्वामेव स्माश्रयन्ते तत इह नितरां त्वं त्रिलोकीश्वरोऽभूः ॥

इति। नृपसभा नृपसमूहो यथा उपवेशनार्थम् आदिसिंहासनानि प्रधानसिंहासनानि हरति नयति, तथा त्वच्चमूः सेना शक्रादीनां सुराणामादिसिंहासनानि हरति दूरीकरोति तेषां स्वस्वाधिकारान्नाशयतीति यावत्। गत्यन्तरसम्भवे क्लिष्टकल्पनमन्याय्य-मित्याशयेनाहापीति। तथाच राजार्थादपि सभा षष्ठीसमासे क्लीबे स्यात्, अपिना न स्यादपीत्यर्थः।

मुग्धबोधव्याकरणस्य तर्कवागीशटीका। कीचकवधे तु नृपतिसभामगमन्नेवपमाना [१] इत्यत्र नृपतिशब्दो राजविशेषवाची न तु राजसामान्यवाची। अत एव चन्द्र-गुप्तसभा इत्यत्र न स्यात्। नृणां पतिर्यत्र सभायां सा नृपतिसभेति कश्चित्। पृः २९८-९९।

हैमलिङ्गानुशासनम्। राजवर्जितराजार्थराक्षसादेः परापि च। २२ ॥ नृपतिसभा-मगमदिति बाहुलकात्। लिङ्गानुशासनावचूरिः।

सारस्वतव्याकरणम्। समासेऽराजराजपर्यायामानुष्यार्थप्राणिशब्दपूर्वायाः सभाया नपुंसकत्वम्।...... अनित्योऽयं विधिः। स्यात् सुधर्मा देवसभेत्यमरः। नृपति-सभामगमदिति रघौ (१)।

अमरकोषस्य रायमुकुटव्याख्यानम्। राजपर्यायवचनान्नेह। चन्द्रगुप्तशब्दो नृपतिशब्दश्च राजविशेषवाची। अन्ये तु राजपर्यायार्थत्वेऽपि नृपतौ सभा नृपतिसभा नृणां पतिर्यत्र सभायां सा तथेति समादधुः। राजपर्यायार्थत्वेऽपि न राजपर्यायः। अत एव नृपो नाम कश्चित् तस्य सभा नृपसभेत्यादि।

हरिनामामृतम्। राजशब्दो राजविशेषनाम च विनेश्वरवाचकाद्रक्षःपिशाचा-दिवाचकाच्च सभा।

वृत्तिः। सभात्र शाला। ईश्वरसभम्। इनसभम्। नृपतिसभम्।

टीका। नृपतिसभेति च भवतीति जुमरमतम्। तथाच कीचकवधे नृपतिसभा-मगमन्न वेपमानेति (१)। वेपमानेति। नृपतिशब्दस्य गजपतिशब्दवद्राजविशेषवाचित्व-मस्तीति नृपतिसभेति भवतीति भाषावृत्तिमतम्।

यद्यत्र कुशं काशं वावलम्ब्य यथाकथञ्चित् साधुत्वं संसाधनीयमिति दुराग्रहः, तर्हि विभाषा वृक्षमृगेति सूत्रात् [ २।४।१२ ] विभाषापदं मण्डूकप्लुत्यानुवर्तनीयं व्यवस्थि-तविभाषात्वं च कल्पनीयं तेन सर्वमभीष्टं सिध्येत्।

श्लोके नृपतिसभामिति पदं विस्पष्टमेव प्रामादिकम्। न जानीमः किमिति क्षुद्रकवेर्नीतिवर्मणः प्रयोगस्य साधुत्वसम्पादनायैतावानाग्रहो व्याख्याकृतामिति। मन्ये प्रथमतो नीतिवर्मणः सुहृदा वा सम्बन्धिना वा केनचन दुर्व्याख्याविषेण प्रयोगविष-मुपक्रमितुं समीहितम्। ततश्च वर्त्म कर्षतु पुरः परमेकस्तद्गतानुगतिको न महार्घ इति न्यायेनान्येऽप्यहमहमिकया प्रवृत्ता अस्मिन् महति कर्मणि !

## आशिषा काव्यस्य प्रारम्भः

आशीर्नमस्क्रिया वस्तुनिर्देशो वा काव्यस्य मुखम् इत्यालङ्कारिकाः। तत्राशीरूपः प्रारम्भः कीचकवधकाव्ये दृश्यते। स च यथा—

जितः सुचरितच्छेदी स्मरोऽयं दुःसहो मया।
इतीव देहमकरोदभिन्नं यः सहोमया ॥
बिभर्ति हारमनघं यो भस्मभिरहिंसितम्।
तेजश्च मन्मथशरैरिन्द्रियार्थैरहिंसितम् ॥
यस्याहुरतिगम्भीरजलदप्रतिमं गलम्।
स वः करोतु निःशङ्कमुदयं प्रति मङ्गलम् ॥
या त्रिलोकनता मूर्तिरुपायेन जुगोप ताम्।
योऽवहत् कंसनिधने प्रयुक्तामृजुगोपताम् ॥
बभार वपुरम्भोजप्रभया पूतनाभि यः।
पपात कर्मणा यस्य प्रभया पूतना भियः ॥
स पुनातु व्रजे यश्च गोरजःपातरूक्षितौ।
शिशुरुच्छिद्य यमजौ निष्पिपेष तरू क्षितौ ॥

## बहुवचनम्

पुंस्यसवोऽपि प्राणा दारा लाजाः सबल्वजाश्च गृहाः।
एके पठन्ति सक्तून् ग्रामाख्यायां शिरीषाः स्युः ॥
नीवृति कुरवो मत्स्याः सुह्माङ्गविदेहमद्रपाञ्चालाः।
कालञ्जराजमीढत्रिगर्तबाह्लीकवङ्गान्ध्राः ॥
चेदिरवन्तिकलिङ्गावुशीनरप्रभृतयोऽन्येऽपि।
शाल्मलयः पुरि वरणाः स्त्रियामुभे वारिणि तु गाव ॥

पुष्पे तु सुमनसो जलौकसः समा अप्सरसः ।
आपो वस्त्रस्य दशाः सिकता वर्षा मघा धानाः ॥
यत्कृत्तिकाश्च बहुलास्तदर्थाभिधायित्वात् ।
नीवृति पुण्ड्रो भूम्नि त्वेक इह त्वविशेषः ॥

---

## अधिकन्तु न दोषाय
### स-स-स-स-स-स

Statesman पत्रे दृष्टम्—...but his ends becomes confused with his means इति ।

means-शब्द एकवचनोऽतस्तत्सहचरेण end-शब्देनाप्येकवचनेन भवितव्यम् !!! एतत् सकारबाहुल्यं मृच्छकटिकगतं विदूषकवाक्यममरुकवेः पद्यं च स्मारयति । तथाच मृच्छकटिके पठ्यते—

चेटः । अले एशा शा ( अरे, एषा सा । )

विदूषकः । का एसा का ? ( कैषा का ? )

चेटः । एशा शा । ( एषा सा । )

विदूषकः । किं दाणिं दासीए पुत्ता दुब्भिक्खकाले वुड्ढरङ्को विअ उद्धकं सासाअसि—एसा सा सत्ति । ( किमिदानीं दास्याः पुत्र दुर्भिक्षकाले वृद्धरङ्क इवोर्ध्वकं श्वासायसे—एषा सा सेति । ) इति ।

अमरशतके दृश्यते—

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्व तवादः ॥ इति ।

---

## स्टेट्समानपत्रस्य कम्युनिस्ट्प्रीतिः

Sunday Statesman पत्रे ( March 1, 1959, Late City Edition) सम्पादकस्य लेखे दृष्टम्—to this adverse impression *is* joined *doubts* about the efficiency of the collection of taxes. एकवचन-बहुवचनयो-र्विभेदो दूरीकर्तव्यः !!!

---

# को वाधुनिक-युरोपीय-दर्शन-प्रवर्तकः ?

[ लेखकः – प्रो० आर० बी० जोशी, धारवाड़ ]

फ्रान्सदेशीय-तत्त्वज्ञो रने दे कार्त ( Rene Des Cartes ), आंग्लदेशीय-तत्त्वज्ञः फ्रान्सिस् बेकन् ( Francis Bacon ), शार्मण्यतत्त्वज्ञो निकोलाऊस् फोन् कूसा ( Nikolaus von Kusa ), इतालीदेशीय-तत्वज्ञो जिओर्दानो ब्रूनो ( Giordano Bruno ) एतेषां को वाधुनिक-युरोपीय-दर्शनस्य पितेव मन्तव्य इति प्रश्नमवलम्ब्य भृशं विप्रतिपन्नं युरोपीय-दर्शनेतिहासकारैः। तेषां विवदमानानां ख्यातनाम्नां दर्शनेतिहासकाराणां निर्णयाः प्रभूताध्ययनसमुद्भूता अपि स्वदेशाभिमानदोषग्रस्ताः। तथापि निष्पक्षपातनिर्णयः सर्वथा नाशक्यः। एतदर्थमेतेषां दर्शनेतिहासकाराणां मतानामाधारभूतविषयाणां सारं संगृह्य चिकित्सकदृशा विचारणा कर्तव्या।

प्रथमं तावत् फ्रान्सिस् बेकन्। किमर्थमयमांग्लदेशीयतत्त्वज्ञ आधुनिकयुरोपीयदर्शनस्य पितेव मन्यते ? अस्य समग्रगवेषणात्मकविचारजातस्यालोडनं कृतं चेद् एतत् सुस्पष्टं भवति—अस्य समग्रगवेषणाकार्यं प्राधान्येन तर्क-शास्त्रोपकारकमेव दृश्यते इति। तर्कशास्त्रं तु दर्शनशास्त्रस्य साधनमात्रं न तु स्वयं दर्शनशास्त्रम्। तस्मादयमाधुनिकयुरोपीय-दर्शनेतिहासे प्रग्रस्थानस्यानर्ह इति मन्यते कतिपयैर्युरोपीयदर्शनेतिहासकारैः।

अथ तु जिओर्दानो ब्रूनो। अस्य तु विचारजातं दर्शनशास्त्रविषयसम्बद्धमिति स्पष्टमेव दृश्यते। किन्त्वस्य विचारपद्धतिर्भावनाभूयिष्ठा काव्यमयी च, न तु बुद्धिभूयिष्ठा तर्कशास्त्रपूता च। तस्मादस्य विचारजातं दर्शनशास्त्रविषयसम्बद्धमप्यर्थपूर्णनिर्णयगर्भमपि पद्धतिदोषाद् दार्शनिकैरनादृतम्। एतदर्थमाधुनिकयुरोपीयदर्शनस्य पितृपदमानस्यायं दार्शनिकोऽप्यनर्ह इति मन्यते कतिपयैर्युरोपीयदर्शनेतिहासकारैः।

अथ तु निकोलाऊस् फोन् कूसा। अस्य विचारजातं पद्धतिदृशा च विषयसम्बन्धदृशा च समादृतं दार्शनिकैः। किन्त्वस्य दर्शनमप्याधुनिक-युरोपीय-दर्शनस्य केवलमस्फुटारम्भमेव मन्यन्ते विचक्षणाः।

अथ तु रने दे कार्त। अस्य दर्शनम् आधुनिक-युरोपीय-दर्शनस्य स्फुटरूपारम्भं मन्यन्ते सर्वेऽपि युरोपीयदर्शनेतिहासकाराः। अस्याधुनिकयुरोपीयदर्शनस्य पितृपदमान प्रापणस्य प्रधानं कारणमस्य पद्धति निर्णयश्च। कतिपयैस्तु केवलमस्य पद्धतिरेव समादृता, तदर्थं च केवलमाधुनिकयुरोपीयदर्शनस्य पितृपदमानमस्मै प्रदत्तम्। निर्णया

सम्बन्धदशाप्ययं महत्त्वपूर्णो दार्शनिकः। अस्य विषयावधारणं विस्मयजनकं परमसमादरणीयं स्पष्टत्वात्, सुसम्बद्धत्वात्, तर्कशुद्धप्रश्नप्रणालिकरणत्वात्, ऐतिहासिकपरिणामित्वात् च। अस्य प्रश्नप्रणालिकाक्षुण्णमार्गेणैव दीर्घकालव्यापिनी चिन्तनधाराधुनिकयुरोपीयदर्शनेतिहासे प्रचलितासीत्। एका चिन्तनपरम्परैव निबद्धासीद् या "द्रव्य-गुण-दर्शनं" (Substance-Attribute-Philosophy) इति नाम्नाधुना प्रसिद्धा।

अस्माकं तु मते पद्धतिः, विषयावधारणं, निर्णयसत्यता—एषा त्रयी समस्तैव दर्शनोपकारिकी न पुनरासामेकतमा। तस्मात् सारांशतयास्माकमेतदेव मतं यत् बेकन् प्रथमः पद्धति-प्रवर्तकः, ब्रूनो प्रथमः सत्यनिर्णय-दिग्दर्शकः, कूसा प्रथमः सम्यग्-विषयावधारणमार्गप्रदर्शक इत्येते त्रयोऽपि प्रथमाः पथिप्रदर्शकाः समकक्षवर्तिनो दार्शनिका आधुनिकयुरोपीयदर्शनेतिहासे। एतेषां त्रयाणां समकक्षवर्तिनां दार्शनिकानां दर्शनानि समानतयैवाधुनिकयुरोपीयदर्शनस्य स्फुटारम्भ इति मन्तव्यम्। आधुनिकयुरोपीयदर्शनस्य स्फुट आरम्भो देकार्तस्य दर्शने एवास्माकमपि मते यथा चान्येषां, यतोऽस्मिन् दार्शनिकेऽस्माकं मते पद्धतिः, विषयावधारणा, निर्णयसत्यता चैतासां तिसृणां रमणीयस्त्रिवेणिसंगम एव लभ्यते। अनेन त्रिवेणिसंगमेनास्य दर्शनमाधुनिक-युरोपीयदर्शनेतिहासे तीर्थीकृतम् इव वर्तते।

---

## सन्निधिरुक्ता !

मेघसन्देशस्य दक्षिणावर्तव्याख्याने दृश्यते—अनेन श्लोकेन शरद्धेमन्तशिशिरवसन्तग्रीष्मप्रावृषां षण्णामृतूनां लिङ्गभूतैरसाधारणैः पुष्पैरलकायां युगपदेव प्रवृत्तिरुक्ता। तद्यथा हस्ते लीलाकमलमित्यत्र शरल्लिङ्गेन कमलेन शरत्कालस्य सन्निधिरुक्ता। अलकं बालकुन्दानुविद्धमित्यपपाठः, अलकशब्दस्य पुंलिङ्गत्वात्। अलकाश्चूर्णकुन्तला इत्यमरः। अलके बालकुन्दानुवेध इति पाठः। अस्मिन् पाठे रीतिभङ्गश्च न भवति। कुन्देन हेमन्तसन्निधिरुक्तः। इति।

अत्र प्रवृत्तिरुक्ता इत्यस्यानन्तरं सन्निधिरुक्तेति लिपिकरप्रमादकृतम्। सन्निधिशब्दो हि पुंलिङ्ग इत्यत्र सर्वेषामैकमत्यात्। अत एवान्तिमवाक्ये सन्निधिरुक्त इत्युपलभ्यते। अवितथं खल्वुक्तमभियुक्तैः—संसर्गजा दोषगुणा भवन्तीति।

---

# भरतमेलनम्

## प्रस्तावना

नान्दी [ गानम् ]

शुभ्रतुषारकुन्दहारचन्द्रधवला
जयतु वाणी ज्ञानदायिनी स्मृतिशतदलपदकमला ।
त्वं हि विद्ये तमोनाशिनि
मानसहंसविलासिनि
ब्रह्मवादिनी चिन्मयी त्वं शुद्धसत्त्वतत्त्वविमला ।
प्रसीद मयि कवितामयि पुण्यपीयूषकाव्यकुशला ॥

नान्द्यन्ते सूत्रधारः। अहो ! विद्वज्जनसमाकीर्णा सूरिमालिनीयं परिषत् स्फुरद्रत्नप्रतीकाशा देवसभेव विराजते ।

( ततः प्रविशति नटी । )

नटी । आर्य ! कस्तावदद्य तनो नाटकविषयः ? किं वाभिनयार्थं कल्पते ?

सूत्रधारः । भोः, पितृसत्यपालनव्रतेन वनगामिना तत्रभवता श्रीरामचन्द्रेण सार्द्धं राजर्षे भरतस्य समागममधिकृत्य विरचितं भरतमेलनं नाम संस्कृतनाटकमद्याभिनयार्थं प्रकल्पितम् ।

नटी । ( सहर्षम् ) साधु । कस्येयं कृतिरस्माभिरभिनीयते ?

सूत्रधारः । श्रूयताम् ।

यत्रास्ते कमनीयशैलशिखरे श्रीचन्द्रनाथः स्वयं
शम्भुर्निर्झरनीरपुष्पनिकरै र्नित्याभिषिक्तः परम् ।
मैनाकाद्रिपतिं प्रणम्य गिरिजां यत्रैव फेनोच्छलः
सिन्धुर्गायति मौनमङ्गलजयं सा चट्टला दीप्यते ॥

नटी । ततः ?

सूत्रधारः । तत्रैव देशे तपसा च सिद्धिम् ऋषिर्गतः श्रौतपरः प्रतिष्ठाम् ।
तदात्मजः कृष्णपदाब्जचित्तो विद्याव्रतोऽभूत् किल कृष्णकान्तः ॥

नटी । बाढम् । ततश्च ?

सूत्रधारः । सारस्वतपदद्वन्द्वमकरन्दनिषेविणा ।
पुत्रेण तस्य दीनेन श्रीविश्वेश्वरशर्मणा ॥
प्रणीतं सह पुत्रेण ध्यानेशचक्रवर्तिना ।
भरतमेलनं नाम नाटकं रसमञ्जुलम् ॥

नटी । साधु ! साधु ! ( सहर्षं सूत्रधारेण सह निष्क्रान्ता । )

## प्रथमं दृश्यम् ।

[ अयोध्याप्रासादकक्षम्—लक्ष्मणश्चिन्तामग्नः प्रविशति । ]

लक्ष्मणः । एषा नूनमव्यवस्था तातपादस्य । अन्यथा को नु नारीजनसमीपे आत्मानं प्रतिज्ञाबद्धं कुर्यात् ?

इमौ च बज्रबाहू मे स्फुरतो मर्मपीडया ।
लज्जेऽहं पीड्यमानोऽपि प्रतिकर्त्तुं न तु क्षमः ॥

( ततः प्रविशति रामचन्द्रः । )

रामः । वत्स, न खलु रोषः समुचितः । चिन्तय, के वयम् । निमित्तमात्रमम्बा कैकेयी ।

लक्ष्मणः । ( सलज्जम् ) आर्य, क्षम्यतामपराधः । किन्तु—

वयं क्षत्रियसन्ताना अधर्मे दण्डधारिणः ।
अन्यायेनाभिभूता यदित्येव मर्मवेदना ॥

रामः । वृथेयमधीरता भ्रातः ! पितृसत्यं कथं मिथ्या क्रियते ?

पश्य— सत्यं च पालितं धीर पुरा पितृपितामहैः ।
तत् सत्यपालनं कार्यमिक्ष्वाकूणां कुलव्रतम् ॥

लक्ष्मणः । नमोऽस्तु गुरुपादेभ्यः । किन्तु विमातुः कूटकौशलेन भवान् स्वाधिकार-वञ्चित इत्येवानुशोचामि ।

रामः । मैवम् । अनुचिता खलु विमातरि दुरभिसन्धिकल्पना । वीरोऽसि । सत्सु विपर्ययेषु वीरधर्मः पालनीयः ।

लक्ष्मणः । तथास्तु । स्वधर्मं पालयिष्यामि । तेनैव वनवासे त्वामनुगन्तुमिच्छामि ।

रामः । ( लक्ष्मणस्य स्कन्धे हस्तमारोप्य ) वत्स, सदैव तेऽनुमतो रामभद्रः । किन्तु कथं वनवासक्लेशेनात्मानं पीडयिष्यसि ?

लक्ष्मणः । ( पादयोः पतित्वा ) राघव, आ बाल्याच्चिरसहचरं लक्ष्मणं केनापराधेन परित्यक्तुमिच्छसि ? नाहं रामभद्रविरहितो जीवामि ।

रामः । ( लक्ष्मणं सस्नेहमुत्तोल्य ) सौमित्रे, विजयते शिशोरिव ते प्रणयमधुरो व्यवहारः । किन्तु भ्रातः, अकारणस्तव क्लेशकरो वनवासः ।

लक्ष्मणः । नहि नहि । त्वया सार्द्धं वनवासो मे सुखाय कल्पते । अतस्ते व्रतपालने मयापि साहचर्य्यं प्रार्थ्यते ।

रामः। (स्वगतम्) न हि शक्यते वारयितुं प्रियलक्ष्मणः। अथवा—अनेन विरहितः कथं तिष्ठामि ?

स्नेहार्तो नैव जीवामि सौमित्रिसङ्गवर्जितः।
वृन्तोत्खातं यथा पद्मं हिमाम्भःशीर्णकेशरम्॥

(लक्ष्मणमालिङ्ग्य) प्रियोऽसि सौमित्रे। विजयस्व चारित्रमाधुर्येण।

(ततः प्रविशति काषायवसना सीता।)

सीता। आर्यपुत्र !

लक्ष्मणः। एषा जनकनन्दिनी समागच्छति। (सीतां प्रति) आगच्छत्वत्रभवती।

रामः। (सीतां प्रति) प्रिये, कथं ते काषायवासः ?

सीता। नाथ, अहं ते वनवाससहचारिणी भविष्यामि।

रामः। मुग्धे, दुर्गमं खलु दण्डकारण्यम्। श्वापदसङ्कुले च तत्र वनप्रदेशे निशाचरा विचरन्ति। अतो न युज्यते तव वनगमनम्।

सीता। कान्त, धर्मपत्नी तवाहम्। नाहं जानाम्यन्यद् व्रतम्। अतो मयापि छाययेव त्वमनुगंस्यसे।

रामः। प्रिये, कुसुमकोमलासि त्वम्, अनभ्यस्तक्लेशा च। तत् कथं वनवासदुःखं वरयसि ?

सीता। नाथ, त्वमेव मे गतिः। त्वत्सङ्गादरण्यमपि मम स्वर्गसौख्यं जनयिष्यति।

लक्ष्मणः। (रामं प्रति) आर्य, "सस्त्रीको धर्ममाचरेत्" इति धर्मशास्त्रकाराः समामनन्ति। अतो युक्तमेवार्य्या कथयति।

सीता। (लक्ष्मणं प्रति) वर्धस्व वत्स ! चिरं जीव ! (राम प्रति) अनुजानीहि नाथ !

रामः। प्रिये, किमहं ब्रवीमि ? किमकरुणो भवति रामभद्रः ? तत् त्वमेव जानासि सर्वम्।

सीता। (सहर्षम्) विजयतां राघवः। भवतां सङ्गगौरवादरण्यवासो मे सुखाय भविष्यति। किञ्च, श्रुतं मया—अतीव मनोहारिणी नाम काननसुषमा। तत्राहं पुष्पितकाननेषु मृगशावकैः सह क्रीडिष्यामि। नर्त्तयिष्यामि वनमयूरान्। आकर्णयिष्यामि च सानन्दं कुञ्जेषु विचरन्ती निर्झरतानसनाथं विहङ्गकलसङ्गीतम्।

(उल्लासं नाटयति।)

रामः। मुग्धे, स्थाने खलु वनलक्ष्मीप्रतिमायास्ते कुसुमवनविहारः। न जाने, कदापि गोदावर्यां कमलकानने क्रीडन्ती त्वम् आत्मानमपि हारयिष्यसि।

(सीता व्रीडां नाटयति।

लक्ष्मणः। ( सीतां प्रति ) आर्ये, अहमपि चिरसेवकः, सर्वथैव युष्माकं चित्तविनोदनार्थं यतिष्ये।

सीता। ( लक्ष्मणं प्रति ) वर्धतां सौमित्रिः। ( रामं प्रति ) आर्यपुत्र, अस्य सौमित्रेः साहचर्येणास्माकं सर्वः क्लेशोऽपगतो भवेत्।

रामः। बाढम्। तदलं कालक्षेपेण। अतो गुरुजनानां चरणवन्दनां विधायाचिरेणैव वनगमने समुद्योगः करणीयः।

सीतालक्ष्मणौ। तथास्तु। वयमवहिता भवामः। ( निष्क्रान्ता सीता। )

लक्ष्मणः। आर्य, अलं चिन्तया।

सलिले कानने घोरे शैलेषु दुर्गमेष्वपि।
सर्वथानुगतो रामं लक्ष्मणोऽहं धनुर्धरः॥

( निष्क्रान्तो लक्ष्मणः। )

रामः। इयं विमुग्धा जनकात्मजा मे विच्छेदभीता न हि दूरमास्ते।
आबाल्यसङ्गि-प्रियलक्ष्मणश्च वृन्तैकबद्धं न हि तं त्यजामि॥ ( निष्क्रान्तः। )

---

## द्वितीयदृश्यम्

### अयोध्याप्रासादकक्षम्

[ विमनायमानो दशरथः सिंहासनसमासीनः, कौशल्या चासीना। ]

दशरथः। दुर्विषहो रामभद्रविच्छेदः। अहो कष्टमहो कष्टम्! सन्तापः, सन्तापः!

कञ्चुकी। ( प्रविश्य ) महाराज!

दशरथः। मा खलु मा खल्वेवम्। महाराजेत्यामन्त्रणं मे उपहासाय भवति।

कञ्चुकी। नरमणे, अलं खेदेन।

दशरथः। कञ्चुकिन्, अपि पूर्णमनोरथा राजमाता कैकेयी?

कञ्चुकी। राजन्! अलौकिकं खलु श्रीमतो रामभद्रस्य पितृसत्यपालनम्। तदनेन सर्वथा विजयते भवान्।

दशरथः। धिङ् माम्।

मया तु मन्दभाग्येन परिणाममपश्यता।
प्रतिज्ञातं पुरा मोहात्, तद्धि शोकाय वर्तते॥

प्रतिहारी। ( प्रविश्य ) जयतु महाराजः।

दशरथः। आः कथं पुनर्मे जयघोषः? एष हृदयं व्यथयति।

प्रतिहारी। नरनाथ, चिरमभ्यस्ता वयं भवतो जयघोषणे। भवान् खलु—

दशरथः। ( आक्षिप्य ) तिष्ठ, तिष्ठ। ( कौशल्यां प्रति ) प्रिये!

कौशल्या। ( साश्रुणी नेत्रे प्रमृज्य ) नाथ!

दशरथः। देवि, कथमपत्यनिर्वासनकारिणो मे मुक्तिः?

कौशल्या। राजन्, दीनाहं मन्दभागिनी!

दशरथः। अयोध्या नगरी शून्या शून्यञ्च जीवितं मम।
यतोऽहं नानुपश्यामि रामभद्रमुखाम्बुजम्॥
( दशरथो मूर्च्छां गतः। कौशल्यादयो मूर्च्छापनोदनार्थं यतन्ते। )

कञ्चुकी। हा हा दुःखम्!

कौशल्या। राजन्, प्रसीद, प्रसीद।

दशरथः। ( संज्ञां लब्ध्वा ) विजयतां राजमाता भरतजननी!

कौशल्या। नाहं राजमातास्मि। जयति राजमाता कैकेयी। दीनाहं कोशलराजपुत्री। ( करतलेन वदनमाच्छादयति। )

दशरथः। अहो, दुःसहो रामभद्रविच्छेदः।

कञ्चुकी। समाश्वसिहि, समाश्वसिहि, महाराज।

कौशल्या। ( दशरथं प्रति ) देव, कथय, किं करवाम?

दशरथः। देवि, श्रूयताम्। कथयामि पूर्ववृत्तान्तम्।

कौशल्या। शृणोमि, कथ्यताम्।

दशरथः। स हि नीलजलधराभिरामो जलदकालः।

कौशल्या। बाढम्। ततः किम्?

दशरथः। तदा हि मेघमेदुरे गगनमण्डले केतकीगन्धसुवासितायां वनवीथिकायां— ( कष्टं नाटयति। )

कौशल्या। अलं क्लेशेन महाराज!

दशरथः। नहि नहि, श्रूयताम्। तदा हि पार्श्वतः प्रवहति कल्लोलमुखरा निर्झरिणी। गहनकुञ्जच्छन्नायां तस्यास्तटवीथिकायां मृगयाकामोऽहं विचरन् मोहमापन्नः।

कौशल्या। ततस्ततः?

दशरथः। अन्तराले पारेजलं कुम्भं पूरयन् मुनिकुमारो मया मृगभ्रमेण बाणेन निपातितः।

मयाति मन्दभाग्येन बालकोऽयमजानता।
पापात्मना नृशंसेन निहतो मुनिनन्दनः॥

भरतः। ( वशिष्ठस्य पादयोः पतित्वा ) आर्य्य, एषा कुलकलङ्किता गता पतिघातिनी मेऽम्बा।

वशिष्ठः। शान्तं पापम्। समाश्वसिहि राजपुत्र! अधुना निपतितस्त्वयि कार्यभारः। अतः शोकं विहाय पितुरौर्ध्वदैहिकेषु कार्येषु प्रवर्ततां भवान्।

प्रधानामात्यादयः। जयतु राजनन्दनः! रघुवंशानुगृहीता वयं सर्वथैव राजनिदेश-पालकास्तिष्ठामः। जयतु जयतु कैकेयीनन्दनः!

भरतः। ( उन्मत्तवत् प्रधाव्य ) विरमत विरमत जयघोषात्। चिरं जीवतु रघुकुल-तिलको रामभद्रः। विजयतां रामचन्द्रः!

अमात्यादयः। साधु, साधु!

वशिष्ठः। कुमार! अधुना कालोचितसाधने प्रवर्तितव्यम्। न हि युज्यते पितृकृत्येषु विलम्बः।

भरतः। आर्य, शिरोधार्यो मे गुरुजनादेशः। देव, रघुकुलहितैषिणस्तव स्नेह एवास्मा-कमवलम्बनम्। ( पादयोः पतति। )

वशिष्ठः। ( करेणोत्थाप्य ) उत्तिष्ठ राघव। विजयस्व चारित्रमाहात्म्येन।

भरतः। नमोऽस्तु गुरुचरणेभ्यः। श्रृण्वन्तु सर्वे। पितुरौर्ध्वदैहिकान्ते सपरिजना वयं रामभद्रसकाशं गत्वा सविनयं तमयोध्यां प्रत्यानेष्यामः, स्थापयिष्यामश्च तम् अयोध्यायां सिंहासने।

( भरतः प्रस्थितः, सर्वे च धन्योऽसीति साधुवादं कुर्वन्ति। )

सर्वे। धन्योऽसि, धन्योऽसि। ( कैकेयीवर्जं सर्वे प्रस्थिताः। )

कैकेयी। ( दीर्घं निःश्वस्य ) इत्थं कलङ्कमालिन्यहं प्राणानन्दं रामभद्रं रक्षितुकामा वैधव्यं वरयामि। को नु खलु कैकेयीचित्तम् अनुबुध्यते? (ऊर्ध्वमवलोक्य) महाराज, एवं मुनिशापजनितविपर्ययान्मुक्तो रामभद्रश्चिरं जीवतु। अहमपि जगति कलङ्ककनकमाल्यमुद्वहामि। ( प्रस्थिता। ) ( क्रमशः )

---

## संशोधनम्

धनञ्जयपुरञ्जय-नाटकस्योपान्त्ये श्लोके द्वितीये चरणे "मोहान्मुक्तं शश्वत्" इत्यत्र "तमोमुक्तं शश्वत्" इति पठनीयम्, तृतीये च चरणे "दुष्प्रापो यो योगैः" इत्यत्र "दुरापो यो योगैः" इति पठनीयम्।

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्णदर्शनाचार्यः ]

## सर्वत्र प्रसिद्धोपदेशात् ।१।२।१

सर्वज्ञं सर्वशक्ति परमेव ब्रह्म विशुद्धं जगज्जन्मादिकर्तृ । शास्त्रमेव तत्र प्रमाणम् । सर्वेषां च वेदानां साक्षात् क्रमेण वा सम्बन्धस्तस्मिन्नेव । प्रधानपरमाण्वादि च न कारणं, ब्रह्मपराणां च केषाञ्चिच्छब्दानां सन्दिग्धानां स्पष्टब्रह्मलिङ्गानां ब्रह्मपरत्वं च निर्णीतं प्रथमे पादे। साम्प्रतमस्पष्टब्रह्मलिङ्गानां सन्दिग्धानां शब्दानां ब्रह्मपरत्वनिर्णयाय प्रारभ्यतेऽयमग्रिमः पादः।

तत्र छान्दोग्ये दृश्यते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत।" "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लँोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः।" इति। किमिह ब्रह्मशब्देन जीवो निर्दिश्यते परमात्मा वा? कुतः संशयः? यतो यस्य सर्गादिकर्तुः शान्त उपासीतेत्युपासनं विहितं तस्यैव मनोमयत्वादिगुणगणोर्जितत्वमुक्तं, मनोमयत्वादिकं च प्रसिद्धं प्रत्यगात्मन्येव न परमात्मनि, "अप्राणो ह्यमनाः शुभ्रः" "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" इत्यादिश्रुतेः। ततः संशयः, तत्र विशुद्धस्य ब्रह्मणश्चिदानन्दमयस्य मनोमयत्वाद्यसम्भवात् अप्राणो ह्यमना इतिश्रुतेश्च जीव एव मनोमयत्वादिगुणकः पराचीनमणीयस्त्वादिकमपि तस्यैव सङ्गतम्। "एषोऽणुरात्मा चेतसा वेदितव्य" इति श्रुतेः। ज्यायस्त्व च मोक्षे ब्रह्मभावप्राप्तौ, "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतेः। ततश्च तज्जत्वादिकमपि तात्कालिकं बोध्यम्, सर्वकामत्वादयोऽप्येवमुन्नेया इति प्रकृतं ब्रह्मपदं जीवाभिप्रायम् इति प्राप्ते आह—"सर्वत्र प्रसिद्धोपदेशादि"ति। तथाहि नात्र ब्रह्मशब्दो जीवपरः किन्तु परमात्मपर एव। कुतः? यतः सर्वत्र वेदान्तेष्वेवं प्रसिद्धोपदेशो दृश्यते "यतो वा इमानि भूतानि जायन्ते" इति सृष्ट्यादिकर्त्तरि परमात्मन्येव ब्रह्मशब्दप्रयोगात्, अत्रापि तज्जलानिति ब्रह्मैवाभिप्रैति, "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मैवेदं सर्वम्" "तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्म सर्वानुभूः" "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादयो द्रष्टव्याः। मुक्तोऽपि जीवो न सर्गस्थित्यन्तकारीति वक्ष्यति "जगद्व्यापारवर्ज्जमि"ति। अणीयस्त्वं च हृदयच्छिद्रापेक्षया, "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्" "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरि"तिश्रुतिभ्याम् अणोरणीयानित्युक्तेश्च। मनोमयत्वं च निबिडध्यानेन मनसस्तन्मयत्वप्राप्तौ तप्तायःपिण्डवत् तत्तादात्म्यापन्नत्वम्। प्राणशरीर इति प्राणश्चैतन्यं तच्छरीरं स्वरूपं यस्य स तथा। "यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः" "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति श्रुतिभ्याम्। भारूपो ज्योतिर्मयः "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "तं देवा ज्योतिषां ज्योतिरायुर्होपासते" इति श्रुतिभ्याम् ॥१॥

## विवक्षितगुणोपपत्तेश्च ।१।२।२

किञ्च विवक्षिताः प्रतिपादिताश्च गुणाः सत्यसङ्कल्पत्वादयः परमात्मन्येवोपपद्यन्ते, न जीवे। सत्या अप्रतिहताः सङ्कल्पाः सृष्ट्यादिविषया यस्य स तथा, "सत्यकामः सत्यसङ्कल्प" इतिश्रुतेः। आकाशात्मा आकाशवद् व्यापी, नोपलिप्तो वा। सर्वकर्मा सर्वमेव जगत् कर्म कार्यं यस्य स सर्वकर्मा। सर्वकामः सर्वे च कामा भोग्या अन्नपानादयो यस्य स सर्वकामः। एवमुत्तरत्र। विवक्षितानामेषां च गुणानां परस्मिन्नेव ब्रह्मणि सम्यक्तयोपपत्ते र्ब्रह्मैवात्र ब्रह्मशब्दार्थः ॥२॥

## अनुपपत्तेस्तु न शारीरः ।१।२।३

तुशब्दश्चार्थे। सत्यसङ्कल्पत्वादीनां महतां गुणानां जीवे स्वल्पशक्तौ संसारिणि बहुलदुःखव्याकुले सर्वथानुपपत्तेरसम्भवाच्च न शारीरो देहस्वामी देहाभिमानी वा जीवो ब्रह्मशब्दार्थ इत्यर्थः ॥३॥

## कर्म्मकर्तृव्यपदेशाच्च ।१।२।४

किञ्च "एतमितः प्रेत्याभिसम्भवितास्मी"ति श्रुतौ एतमित्येतदा परामृष्टस्य सर्वकर्म्मत्वादिगुणोपबृंहितस्य प्राप्तिकर्म्मत्वेन जीवस्य च तत्कर्तृत्वेन व्यपदेशात्, जीवाद् भेदेन ब्रह्म दर्शितम्। न चैकस्य कर्तृत्वं कर्म्मत्वं च युक्तमुपायसत्त्वे इति ॥४॥

## शब्दविशेषात् ।१।२।५

किञ्च "एष स आत्माऽन्तर्हृदयेऽणीयान् व्रीहे र्वा यवाद् वा" इतिश्रुतावेष इति प्रथमान्तेन उपास्यस्य मे इति षष्ठ्यन्तेन चोपासकस्य निर्देशाज्जीवाद् भिन्न एव स इत्यर्थः ॥५॥

## स्मृतेश्च ।१।२।६

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इत्यादिस्मृतेश्चोपासकाज्जीवाद् भिन्न एवोपास्य इति ॥६॥

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।१।२।७

अर्भकं स्वल्पम् ओकः स्थानं यस्य तस्य भावस्तस्मात् स्वल्पाश्रयत्वादिति यावत्, "एष म आत्माऽन्तर्हृदये" इति श्रुते र्हृदयसुषिरस्थत्वात्, "अणीयान् व्रीहेर्वा यवाद् वा" इत्यणीयस्त्वव्यपदेशाच्च न ब्रह्मात्र ब्रह्मशब्दार्थस्तस्य सर्वगतत्वेन स्वल्पाश्रयत्वासम्भवात्।

"नित्यं विभुं सर्वगतं सुसूक्ष्मं तद्भूतयोनिं परिपश्यन्ति धीराः" इतिश्रुतेः, जीवस्य तु "एषोऽणुरात्मा चेतसा वेदितव्य" इति श्रुतेरतिसूक्ष्मत्वाद् युक्तमल्पाश्रयत्वमणीयस्त्वं चेति चेन्न। कुतः? 'निचाय्यत्वादेवं' निचाय्यत्वाद् द्रष्टव्यत्वात् सर्वगतस्यापि हृदयच्छिद्रे क्षुद्रत्वेनोपास्यत्वादेवं क्षुद्रत्वव्यपदेशो न पुनः स्वत एवास्य क्षुद्रत्वमित्यर्थः। अत्र दृष्टान्तमाह—व्योमवच्चेति। यथा महापरिमाणमपि व्योम घटच्छिद्रं गृहच्छिद्रमिति घटाद्युपाधितः क्षुद्रतया व्यपदिश्यते तद्वदित्यर्थः। स्वरूपेण तु तस्य महत्त्वमाह—"ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य" इति। तथा चोपासनार्थमेवार्भकौकस्त्वव्यपदेशः क्षुद्रत्वव्यपदेशश्च, न परमार्थत इति तत्त्वम्।

अत्र परमात्मनो हृदयोपाधितो व्योमवदणुत्वमुक्तं जीवस्य तु न तादृशमणुत्वं किन्तु ब्रह्मांशत्वादग्निस्फुलिङ्गवत् स्वाभाविकं, तस्माद् वक्ष्यति—"अंशो नानाव्यपदेशादि"ति, सत्यपि च भेदे अंशांशित्वादभेदोऽपि "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोते"ति-श्रुतेरिति वेद्यम्। एवञ्च सर्वगतस्यापि ब्रह्मणः सत्यसङ्कल्पत्वाद्यसाधारणस्वाभाविक-सद्गुणगण-परिबृंहितस्य साधकानुग्रहार्थं हृदयाश्रयत्वं, स्वतस्त्वतिज्यायस्त्वमुक्त्वा सिद्धेरुत्तरं देहान्निःसृतस्येतः प्रेत्य देशविशेषे तस्यैव प्राप्तिं प्रदर्श्य नात्र कश्चित् संशय इत्युपसंहृतम्, "यस्य स्यादद्धा न विचिकित्साऽस्ती"ति ॥७॥

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।१।२।८

ननु जीववद् यदि ब्रह्मापि हृदयस्थं तदा जीववत् तस्य सुखदुःखभोगप्रसक्तिः, द्वयोरपि शरीरस्थत्वादिति चेन्न। वैशेष्यात्। विशेषस्तावज्जीवपरयोर्विद्यते। जीवो हि पुण्यपापकर्तृत्वाद् भवति सुखदुःखोपभोक्ता, ईश्वरश्च हृदयस्थोऽपि निर्लिप्तत्वान्न तथेति। देहस्थत्वमात्रं न सुखदुःखोपभोगप्रयोजकं किन्तु पुण्यपापकर्तृत्वमेव। यथाह श्रुतिः "साधुकारी साधुर्भवति पापकारी पापो भवति।" "य आत्माऽपहतपाप्मा" "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"। इति। स्मृतिश्च भवति—

"अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥" इति (क्रमशः)

# पुस्तक-परिचयः

*छायाशाकुन्तलम्।* श्रीजीवनलालपरीखविरचितम्। J. T. B. Parikh, M. T. B. College, Surat इत्यतो लभ्यम्। पृष्ठानि पञ्चविंशतिः। मूल्यं रूप्यकद्वयम्।

उत्तररामचरितस्य छायासमाख्यं तृतीयाङ्कमुपजीव्य कालिदासभवभूत्योर्वाचोयुक्तिश्चावलम्ब्य विरचितमिदं क्षुद्रं नाटकं परीखमहोदयेन। अत्र सानुमत्याश्रमदेवतां ब्रवीति—"अद्य खलु नारदप्रमुखाद् गन्धर्वगणान्महेन्द्रभवने महाराजदुष्यन्तेनात्रितपोवने कृतं दानवपराजयमाकर्ण्य मया चिन्तितम्। नूनं प्रतिनिवर्तमानेन तेन राजर्षिणाश्रमपदमिदं द्रष्टव्यमिति। ततस्तन्मात्रहृदया तपस्विनी शकुन्तला क्षणमात्रमपि तस्य दर्शनं लभेतेति कृत्वा मया सार्धं तिरस्करणीप्रच्छन्ना तपोवनविचरणाय मद्विज्ञापनाद्भगवता मारीचेनानुज्ञाता। शकुन्तला च केनापि व्यपदेशेन मयेहानीता" इत्यादि। अत्र महर्षेर्नारदस्य गान्धर्वविद्याविशारदस्यापि गन्धर्वेषु परिगणनमयुक्तमिवोत्पश्यामः।

ततश्च शकुन्तला नेपथ्ये "सूत अत्रैव तावद् रथं स्थापय" इति दुष्यन्तस्य वचनमाकर्ण्यावदत्—"कथं नु स्निग्धगम्भीर आर्यपुत्रस्येव वचनोद्गारोऽयमि"ति। अत्र गौणवृत्तिव्यपाश्रयोऽप्युद्गारशब्द उद्वेजक एव सहृदयानाम्।

अथ व्यवस्थापितवाक्कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार॥

इति कालिदासपद्ये उज्जगारपदेन वक्तुरनिच्छातिशयो वचनस्य च जुगुप्सितत्वं प्रतीयत इति पदमिदं कामप्यभिख्यां पुष्णाति।

ततश्च संवादावसरेऽनसूययोक्तम्—

जाते त्वयि प्रियतमेऽपि पराङ्मुखीने
सद्यो विहाय गुरुशिष्यगणे निवृत्ते।
किं वाभवन्निरवलम्बनजीवितायाः
सख्यास्तु मे कथय देव सुदारुणोऽसि॥

पराङ्मुख-शब्दः सुपरिचित एव सर्वेषाम्, पराचीन-शब्दोऽपि गतः श्रवणगोचरम्, परं कोऽयं पराङ्मुखीनशब्दः? यथामुखीनसम्मुखीनशब्दयोः साधुत्वं पाणिनिना व्यवस्थापितम्, पराङ्मुखीनः किल वराकः प्रभव एव विलयमुपगच्छतु। पराङ्मुखीन इत्यत्र दन्त्यो नकार उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनस इति न्यायेन वा?

पञ्चविंशतितमे पृष्ठे दृश्यते—"कथं वानुजानीवहे" इति। यद्यपि भट्टिकारेणानुद्दिश्य जानातेरात्मनेपदं प्रयुक्तं तथापि तद् वैयाकरणानामनभिमतम्।

कालिदासभवभूत्योः पदसमष्टिसमाहारेण सुपण्डितेन संग्रथितमिदं क्षुद्रनाटक-

सुपकारायैव स्यात् संस्कृतभाषां प्रविविक्षूणां बालानाम्। परं पञ्चविंशतिपृष्ठात्मकस्य पुस्तकस्य मूल्यं रूप्यकद्वितयमिति विस्मयमेवोत्पादयति वाचकस्य मानसे। मन्ये मुद्रणप्रमादात् Annas Twelve इत्यत्र Rupees Two इति सञ्जातम्।

*पूर्णपात्रम्।* प्रणेता शिरोमणिः सन्निधानम् सूर्यनारायणशास्त्री। S. Suryanarayan Sastri, 44 Zeera Compound, Secunderabad, Andhra Pradesh इत्यतो लभ्यम्। मूल्यं रूप्यकमेकम्।

परिचिता एव विद्वद्वर्याः श्रीमन्तः सूर्यनारायणशास्त्रिमहाभागा मञ्जूषावाचकानाम्। तेषां हि द्वित्राणि सरलमधुराणि पद्यानि मञ्जूषायां प्रकाशितानि। पूर्णपात्रे तेलुगुभाषातः कतिचित्पद्यान्यनूदितानि। तत्र प्रथमे भागे श्रीरामकृष्णपरमहंसदेवस्य विंशतिरुपदेशाः परममनोहरया संस्कृतभाषयोपनिबद्धाः। द्वितीये भागे विविधविषयाणि पद्यानि समाहृतानि। कविप्रवीरस्यास्य व्याकरणशास्त्रेऽलङ्कारशास्त्रे च सविशेषा व्युत्पत्तिर्वर्तते। प्रसादगुणसमुज्ज्वलानि सरसानि पद्यानि पाठसमकालमेव हरन्ति चेतः सहृदयस्य। अवश्यं पाठ्यतया निर्देश्यमिदं पुस्तकं विद्यालयेषु।

नित्यं सन्धिः पद्यपादेष्वर्धान्तवर्जमिति वामनीयमनुशासनं सर्वत्र नानुसृतं शास्त्रिमहोदयेन, तेन संस्थे द्वे विदुषो यस्य अभूतां प्रियपुत्रिके इत्यादि विसन्धिदोषदुष्टं सञ्जातम्। निर्गंतुम् इत्यत्र निर्गन्तुमिति मुद्रणीयम्। निष्पतामित्यत्रात्मनेपदं पुनर्मुद्रणावसरे निराकरणीयम्।

त्रिंशत्तमे पृष्ठे दृश्यते—

अवलोक्य गुरुं दूरात्प्रत्युद्गम्यांघ्रिपद्मयोः पतितः।
प्रक्षाल्य हर्षबाष्पैः स एकलव्यो दृढाभक्तिः॥

इति। यद्यपि काशिकामनुसृत्य भट्टोजिभट्टेनोक्तं "सामान्ये नपुंसकम्। दृढं भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायां तु दृढाभक्तिः।" इति। तथापि तन्नादर्तव्यं शास्त्रयुक्ति-शिष्टप्रयोगविरोधात्।

अन्ते शुद्धिपत्रसंयोजनेन पुस्तकमिदमतीवोपकारकं स्यात् संस्कृताध्यायिनामित्यत्र संशयस्यावकाशो नास्ति।

*वेदान्तबालबोधिनी।* श्रीभगवत्पादाचार्यकृतप्रातःस्मरणस्तोत्रव्याख्या। व्याख्याननिर्मातारः श्रीसच्चिदानन्दसरस्वतीसंयमिनः। अध्यात्मप्रकाशकार्यालयः। होळेनरसीपुरम् (Holenarsipur, Mysore State, Southern Railway) इत्यत्र लभ्यम्। मूल्यं ७५ ताम्रिकाः।

यद्यप्यसंख्याता वेदान्तप्रकरणग्रन्था विलसन्ति भारते वर्षे तथापि प्रायेण ते कठिनत्वादप्रविष्टतर्कशास्त्राणामुपकारिणो न भवन्ति। आलोच्ये पुस्तके सुबोधया भाषया सरलया प्रणाल्या प्रातःस्मरणस्तोत्रव्याख्यामुखेन श्रीसच्चिदानन्द-यतिभिः शाङ्करवेदान्तदर्शनस्य स्थूलोऽर्थः प्रतिपादितः। भाषायाः सारल्येन प्रतिपादन-शैल्याश्च मनोहारित्वेन सर्वैरेव संस्कृतज्ञैः परमसुखेनैवाबुध्येरन् दुरूहतमान्यपि तत्त्वानि पुस्तकेनैतेन। अत्र प्रश्नोत्तरमुखेणैव व्याख्याता विषयाः। अन्ते चाकारादिक्रमेण विशेषशब्दानामर्थाः सन्निविष्टाः। अवश्यं संग्राह्यमिदं पुस्तकं शाङ्करवेदान्तरहस्ये प्रवेशमिच्छद्भिः।

अत्र प्रश्नोत्तरमुखेण परमहंसशब्द एवं व्याख्यातः। के वा परमहंसा नाम? श्रूयते हि काव्यादिषु राजहंसो नाम कश्चित् पक्षिविशेषः। यः किल नीरक्षीरमिश्रणात् नीरं निरस्य क्षीरमेव विविच्योपादातुं समर्थ इति वर्णयन्ति कवयः। एवमेव सन्ति केचित् पुरुषधौरेया ये आत्मानात्मनोः सत्यानृतयोर्मिश्रीकृतयोर्निस्सारमनात्मपदार्थं निरस्य तत्र विरक्ता अभिमानरहिताः शमदमादिसाधनसम्पन्ना आत्मतत्त्वं विविच्य गृह्णन्ति। तत्रैव यथोपदिष्टसच्चित्सुखरूपे निष्ठां लभन्ते च। त एव परमहंसा इत्युच्यन्ते।

**OUR HERITAGE**, Vol. IV, Part II, July-December 1956. Principal, Sanskrit College, Calcutta 12 इत्यतो लभ्यम्। खण्डस्यास्य मूल्यं रूप्यकपञ्चकमात्रम्।

कलिकातासंस्कृतविद्यामन्दिरतः प्रचार्यते इयं पत्रिका। अत्र प्रत्नतत्त्वानुरागिणा-मुपयोगिनो बहवः प्रबन्धा विलसन्ति। कियन्तंचन कालं निरुद्धप्रायेवासीदियं पत्रिका। इदानीमध्यक्षवर्यस्य श्रीमतो गौरीनाथशास्त्रिणः प्रयत्नेन द्रुततरमेवावहीनाः संख्याः प्रकाश्यन्ते। आलोच्यमाने खण्डे—The Problem of Ultimate Reality, Udayasimha Rūpanārāyaṇa—a forgotton Royal Smārta of Fame and Authority, the Indian Concepts of Knowledge and Self (fifth instalment), Constitution of Words (Sphoṭa theory and its opponents), on the Justification of Rūpasamṛddha Ṛkverses in the Aitareya Brāhmaṇa, The Social and Religious background of the study of Smṛti in Mithilā, इत्याङ्गलभाषयोपनिबद्धाः षट् प्रबन्धा विराजन्ते। ततश्च वङ्गभाषामयः परमरमणीयः प्रामाण्यवादः ("प्राचीन-न्यायमीमांसासम्मतः"), ततश्चाभिनवसमीचीनसुषमाटीकासनाथा जागदीशी पक्षतेति षड्विंशतिपृष्ठात्मकः संस्कृतभाषामयो भागो वर्तते। संस्कृतविद्यामन्दिरस्थितानां न्यायविषयकाणां केषाञ्चन हस्तलिखितपुस्तकानां लघुविवरणान्यप्यत्र सन्निविष्टानि।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥


# मञ्जूषा

| July, 1959. | १८८१-शकीय-श्रावणस्य १३श-वर्षस्यैकादशी संख्या | Vol. XIII No. 11 |
|---|---|---|


## अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्

उषःसूक्ते [ ऋ० सं० १।११३।११ ] कुत्सेनाङ्गिरसेन दृष्टम्—

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥*

इति । अस्यार्थः ।' ये मर्त्यासः मरणशीला मनुष्याः पूर्वतराम् अतीतकालाम् उषसं व्युच्छन्तीं समुद्भासमानाम् अपश्यन् ते ईयुः गता एव कालकवलिताः । नु (now) इदानीम् उषा अस्माभिः प्रतिचक्ष्या समीक्षणीया अभूत् भवति । उ किञ्च ते आयन्ति आगच्छन्ति नचिरादेवागमिष्यन्ति ये अपरीषु आगामिनीषु रात्रिषु भविष्यति काले पश्यान् द्रक्ष्यन्ति । जगति जीवानां जन्ममरणप्रवाहः प्रचलत्येव, उषाः पुनः कालत्रित-येऽपि परमरमणीया यथावदेवावतिष्ठते ।

ईयुष्टे । युष्मत्तत्तक्षुष्वन्तःपादम् [ ८।३।१०३ ] इति षत्वम्, तत्सन्नियोगेन च दन्त्यस्य मूर्धन्यादेशः । मर्त्यासः । आज्जसेरसुक् [७।१।५०] । अपरीषु । केवलमामकभाग-धेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च [ ४।१।३० ] इति ङीप् । पश्यान् । लेट् ।

———

* Departed are those mortals who saw the Uṣas
Of earlier days shine forth.
And she has now become visible to us ;
And they come who in later days shall see (her).
MACDONELL.

# आभाणकमाला

१। Latin. Nemo solus satis sapit. PLAUTUS,
No man is sufficiently wise by himself.
Two heads are better than one.

न खलु कोऽपि स्वयमेव सर्वं सम्यग् जानाति। सर्वेषामेवास्माकं सुहृदुपदेशस्यापेक्षा वर्तते। द्वौ मूर्धानावेकतो वरम्।

बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः। शाकुन्तलम्।

ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि। शिशुपालवधः २

२। Latin. Jucundi acti labores.
Completed toil is pleasant to look back upon.

क्लेशः फलेन हि पुनर्नवतां विधत्ते।

परिसमाप्तः श्रमः स्मर्यमाणमधुरः।

Greek. All' hedu toi sōthenta memnēsthai ponōn.
Lat. Suavis laborum est praeteritorum memoria.
Sweet is the memory of past labour.

३। French. L'absence est à l'amour
ce qu'est au feu le vent,
Il éteint le petit, il allume le grand.
Absence acts upon Love as wind acts upon fire ;
It quenches the faint, makes the ardent burn higher.

French. L'absence diminue les médiocres passions, et augmente les grandes, comme le vent éteint les bougies (candles) et allume (fans) le feu.

अदर्शनं तथा प्रेम्णि दहने पवनो यथा।
कृशं हि शमयत्येतत्समेधयति चाकृशम्॥
स्नेहानाहुः किमपि विरहे ह्रासिनस्तेऽप्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशी-भवन्ति॥ मेघसन्देशः ११३

---

# अवस्थितव्य

प्रियवाचकमहाभागाः! अनुष्ठितव्याख्योऽसुरो मासचतुष्टयात् पूर्वं गतो भवतां दृष्टिगोचरम्। इदानीं "दैनिकवसुमती"-पत्रिकायां तस्यैव सहोदरः अवस्थितव्यो दानवः प्रादुष्कृतवानात्मानम्। तस्य समुत्पत्तिप्रकारः साम्प्रतमुपवर्ण्यते।

अव-स्था+क्तः अवस्थित- : : अवस्था+तव्य : $x$

$\therefore x$ = अवस्थितव्य-

उत्पन्नमात्र एव म्रियतामयं महादानवः!

---

## दमप्रशंसा ( शान्ति २२० )

युधिष्ठिर उवाच ।

किं कुर्वन् सुखमाप्नोति किं कुर्वन् दुःखमाप्नुयात् ।
किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत ॥१॥

भीष्म उवाच ।

[1]दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः[2] ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥२॥
नादान्तस्य क्रियासिद्धिर्यथावदुपपद्यते ।
क्रिया तपश्च सत्यं च दमे सर्वं प्रतिष्ठितम् ॥३॥
दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥४॥
सुखं दान्तः प्रस्वपिति सुखञ्च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥५॥
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयम्भुवा ॥७॥
आश्रमेषु च सर्वेषु दम एव विशिष्यते ।
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ॥८॥
तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
[3]अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता ॥९॥
अक्रोध आर्जवं नित्यं नातिवादोऽभिमानिता[4] ।
गुरुपूजानसूया च दया भूतेष्वपैशुनम्[5] ॥१०॥
जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ।
[6]साधुकामश्च स्पृहयेन्नायतिं प्रत्ययेषु च ॥११॥
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः ।
सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मवान् प्रभुः ॥१२॥

---

[1] दम इन्द्रियनिग्रहः । [2] वेदनिष्ठाः । [3] अकार्पण्यम् अदीनत्वम् । असंरम्भः अभिनिवेशाभावः । [4] अभिमानिता गर्वः । [5] अपैशुनम् अखलत्वम् । [6] साधुकामो मङ्गलार्थी प्रत्ययेषु सुखदुःखाद्यनुभवेषु आयतिम् उत्तरकालं न स्पृहयेत् प्राप्तं सुखादिकं भुञ्जीत न तु कालान्तरीयौ तज्जौ हर्षविषादौ चिन्तनीयौ ।

प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ।
दुर्गमं सर्वभूतानां प्रापयन्मोदते सुखी ॥१३॥
सर्वभूतहिते युक्तो न स्म यो द्विषते[1] जनम् ।
महाह्रद इवाक्षोभ्यः प्रज्ञातृप्तः प्रसीदति ॥१४॥
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
नमस्यः सर्वभूतानां दान्तो भवति बुद्धिमान् ॥१५॥
न हृष्यति महत्यर्थे व्यसने च न शोचति ।
स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते ॥१६॥
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तमसि ब्राह्मणः संशितव्रतः ॥
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ॥२०॥

---

## स्वप्नसारङ्गः

एकदा समिदाहरणे व्यापृतः कश्चन काष्ठिकः समीपे चरन्तं सारङ्गमेकमपश्यत् । स च पुत्रदाराणां कृते तं बाणेनाहन् । ततश्च यथापरः कोऽपि तं न पश्येत् तथाऽतित्वरया केषाञ्चन पत्राणामधस्तादवटे तं मृतं मृगं न्यधात् । सायं च यदा मृगं गृहं नेतुमैच्छत् तदा सुचिरं विचित्यापि तं नालभत । ततश्च तस्य प्रतीतिरभवत् सर्वोऽयं मृगव्यापारो मया स्वप्ने सन्दृष्ट इति । एवं जल्पन् स गृहं प्रस्थितः । अपरः कश्चन तेन मार्गेण सञ्चरमाणस्तस्य जल्पितमुपश्रुत्यान्विष्य मृगदेहमासादितवान् । स च गृहं प्रत्यावृत्य पत्नीमवदत्, कश्चनारण्यकः स्वप्ने सारङ्गमपश्यत् परं कुत्र सोऽवर्ततेति न व्यजानात् । मया समधिगतोऽसौ कुरङ्गः, अत एव नूनं सत्य एवासीत्स स्वप्नः । इति । ततश्च तस्य भार्याब्रवीत्, त्वया प्राप्तोऽसौ मृगः, तर्हि कथं तस्य स्वप्नः सत्यः स्यात्? त्वयैव स्वप्नः सन्दृष्टः स्यात् । इति । सोऽवदत् । भवतु । एतत् तु सर्वथा सत्यं यन्मया लब्धोऽसौ मृग इति । तर्हि, आरण्यकः स्वप्ने सारङ्गं पश्यतु वा, अहमारण्यकं स्वप्ने पश्यानि वोभयमेव तुल्यम् । इति ।

# नामरहस्यम्

## असिक्री

असिक्नीनद्या नाम ऋग्वेदे श्रूयते—

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥

इति । निरुक्तकारेण व्याख्यातम्—असिक्नी अशुक्ला असिता इति । वर्णादनुदात्तात्तोपधात्तो नः [ ४।१।३२ ] इत्यत्र महाभाष्ये दृश्यते—असितपलितयोः प्रतिषेधः । असितपलितयोः प्रतिषेधो वक्तव्यः । असिता पलिता । छन्दसि क्नमेके । छन्दसि क्नमेक इच्छन्ति । असिक्न्यस्योषधे । पलिक्नीरियुवतयो भवन्ति [ ऋ० सं० ५।२।४ ] । इति ।

शाब्दिका एवं व्याचक्षते—केभ्यश्चिच्छब्देभ्यः स्त्रियां नीप्रत्ययो भवति । असित नी = असित् नी = असिक्नी ( विषमीभवनप्रक्रियया ) । तनयोरुभयोरेव दन्त्यत्वाद् विषमीभवन-( dissimilation )-प्रक्रियया तकारस्य ककारः । गच्छता कालेनासिक्नी (Black) नदी चन्द्रभागा सञ्जाता । इदानीं तस्या नाम चेनाब् इति । ग्रीकभाषायामस्या नामासीत् Akesines इति ।

---

# अनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## णकारः

कातन्त्रव्याकरण आख्यातप्रकरणे दृश्यते सूत्रम्—न णकारानुबन्धचेक्रीयितयोः [ आ० २२३ ] इति । इगन्तानामिगुपधानाञ्च णकारानुबन्धे यङ्लुकि च गुणो न भवतीत्यर्थः । पाणिनीये ङिति गुणवृद्धी भवत एव, तत्र गुणशब्दगतो णकार एवानुबन्धत्वेनोपयुक्तः ।

कातन्त्रव्याकरणे पुनः "यार शिल यार नोड़ा तारइ भाङ्गि दाँतेर गोड़ा" ( यस्य शिला यस्य शिलापुत्रकस्तस्यैव भनज्मि दन्तमूलम्, अर्थात् तस्यैव शिलाशिलापुत्रकाभ्याम् ) इति वङ्गीयाभाणकानुसारेण णकारेणैव गुणप्रतिषेधो विहितः । अत एव पाणिनीयोऽङ् कातन्त्रेऽण् , ( आख्यात ६१, ६२ ) पाणिनीयस्तातङ् कातन्त्रे तातण् । (आशिषि तुह्योस्तातण् वा वक्तव्यः । आ० २५७ वृत्तिः ।) चण् (आख्यात

६०=) चङ्, हेरचणीति वक्तव्यम्। आ० २६४ वृत्ति। सण्=सक्। यण् ( आ० ६५)=यक्।

वस्तुतस्तु यथाक्रममात्मनेपदोभयपदबोधनाय ङकारञकारयोरुपयोग इत्यगतिकतया तृतीयोऽनुनासिको गुणवृद्धिप्रतिषेधार्थमुपासितः।

---

श्रीवरदाचरण-मित्रस्य

## अन्धकारः

[ श्रीफटिकलालदासकृतस्तात्पर्यानुवादः ]

( १ )

ग्रस्त्वा धरित्रीं गगनं च कृत्स्नं घोरं समन्तात् तम आवृणोति।
किं रक्तबीजस्य पुनर्वधाय व्यात्तं महाकालिकया स्वमास्यम् ॥१॥
अनादिहेतोश्वरमेव मूर्तिरसीम-सीमान्वित-भेदलोपि।
छायेव घोरा च करालमृत्योरनन्तशून्ये विततं तदस्ति ॥२॥

( २ )

नासन् यदा विश्वचराचराणि व्योमोपरि व्योम महच्च तेने।
स्तब्धप्रकृत्या सह विश्वसृष्ट्यै यदैव रेमे पुरुषो ह्यनादिः ॥३॥
शब्दस्तदानीं न बभूव कश्चित् स्पर्शोऽपि नासीन्ननु वस्त्वभावात्।
अभेदमध्ये कुत एव रूपं निरम्बुशून्ये न रसस्य भावः ॥४॥
क्षितेरभावान्न च कोऽपि गन्ध ऋते तमिस्रां न च किञ्चिदास्त।
एकं तमस्तत् प्रससार विष्वक् सृष्टौ प्रकृत्या इव पूर्णगर्भः ॥५॥ ( कुलकम् )

( ३ )

शम्भोर्विषाणं ध्वनिभङ्गजालैः क्षुब्धं हि कृत्वा गगनं विशालम्।
निनादितं स्यात् प्रलये यदैव भूयोऽन्धकारो भविता स एव ॥६॥
कक्षच्युतानि ग्रहचन्द्रभाणि विलुप्तदीप्तीनि विचूर्णितानि।
यास्यन्ति शून्ये विलयं यदैव पुनस्तदाविर्भवितान्धकारः ॥७॥
देशोऽपि कालश्च दिने हि यस्मिन् सुषुप्तिमध्ये परमात्मनश्च।
अदृश्यतां यास्यत एव भूयः प्रत्यागतं स्यात् तिमिरं करालम् ॥८॥

( ४ )

नास्तेऽधुना तत् तिमिरं तु घोरं क्षुद्रं महद्वा सकलं च सान्तम् ।
अक्ष्णोः पुरस्तात् सुगृहीतमूर्ति व्यक्तं समन्तात् सततं विभाति ॥९॥
कुहूनिशान्ते भगणा हसन्ति चकास्ति नित्यं प्रतिहत्य दृष्टिम् ।
गभीरमेघस्य गले च विद्युत् क्वाप्यन्धकारो न स विद्यतेऽद्य ॥१०॥

( ५ )

प्रसार्य चित्तं प्रविलोप्य सीमां निवार्य भेदानपि नीचतां च ।
आयाहि भो भोः पुनरन्धकार ! याचेऽहमेतत् सविधे तवैव ॥११॥
आलोक एवासि यतस्त्वमेकः सदाव्ययोऽनन्तशरीरधारी ।
अभेदहेतो नियतं स्थितश्च दृष्टेः परस्तात् परमात्मरूपः ॥१२॥

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

## अत्ता चराचरग्रहणात् १।२।९

काठके श्रूयते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ इति ।

मृत्युनोपसेचनेन ब्राह्मणक्षत्रावपि जीवश्रेष्ठावुपसिच्य य ओदनवन्नित्यमभ्यवहरति स पुरुषो यत्र वर्त्तते तम् इत्था इत्थं ध्यानीव कः सम्यक् वेदितुमर्हतीत्यर्थः। अत्र ब्राह्मणक्षत्रयोरोदनत्वकीर्त्तनात् मृत्योश्चोपसेचनत्ववचनाद् एतेषां भोक्ता कश्चनास्तीति गम्यते, स किं विलक्षणशक्ति जीवः कश्चित् ? आहोस्वित् परमात्मा ? तत्र न तावत् परमात्मा सम्भवति तस्य श्रुतावभोजनदर्शनात्, "अनश्नन्नन्यो अभि चाकशीती"ति। जीवस्य च भोक्तृत्वं प्रसिद्धम्, श्रुतिश्च भवति "तयोरेकः पिप्पलं स्वाद्वत्ती"ति, "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इति च। तस्माज्जीव एव भोक्तेति प्राप्ते आह—"अत्ता चराचरग्रहणादि"ति। निरतिशयशक्तिमान् परमात्मैवात्र ब्राह्मणक्षत्रादीनामत्ता भोक्ता भवितुमर्हति। कुतः ? चराचरग्रहणात्। तथाहि प्रधानजीवयोर्ब्राह्मणक्षत्रिययोर्ग्रहणात् कैमुतिकेन इतरेषामपि ग्रहणं स्थावरजङ्गमसर्वप्राणिसंहर्तुर्मृत्योरपि सूपवदुपसेचनत्वकथनाद् भोग्यत्वं गम्यते, तस्यापि भोक्ता नान्यः परमात्मनः कश्चित् सम्भवति, "मृत्युर्धावति पञ्चम" इति मृत्योरपि भीतिप्रदत्वात् तस्य। भोक्तृत्वं चात्र सर्वसंहर्तृत्वं ज्ञेयम्, तच्च प्रसिद्धं ब्रह्मण एव। अन्योऽनश्नन्निति च जीववत् कर्मफलभोक्तृत्वं वारयति ॥९॥

प्रकरणाच्च ।१।२।१०

किञ्च परमेश्वरस्य प्रकरणादत्र परमात्मा अत्ता बोद्धव्यः, तथाहि "महान्तं विभुमात्मानं मत्वा धीरो न शोचति" इति ब्रह्मण एव प्रकरणात्। "क इत्था वेद यत्र सः" इति दुर्ज्ञेयत्वं च ब्रह्मण एव युक्तं "कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती"त्युक्तेरिति ॥१०॥

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।१।२।११

काठके श्रूयते—ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ इति ।

अत्र द्विवचनान्तपदोपात्तौ किं बुद्धिप्राणौ जीवेश्वरौ वा ? तत्र सांख्या मन्यन्ते बुद्धिप्राणाविति, तेषां पुरुषाभिधस्य जीवस्याकर्तृत्वाद् विभुत्वाच्च ऋतपानगुहाप्रवेशयोरसम्भवात्। परमेश्वरश्च नास्त्येव तेषाम्। ऋतपानं चावश्यम्भाविसुखदुःखोपभोगः, बुद्धिस्तु जडापि स्वयं चिच्छायापत्त्या चेतनावदिव भवतीति सैव कर्त्रीत्युच्यते। तदुक्तं "चेतनावदिव लिङ्गमि"ति। प्राणोऽपि वागादीन्द्रियेषु प्रभुत्वादुपचरितकर्त्ता भवति, सूक्ष्मत्वाच्च द्वयोर्हृदयगुहाप्रवेशः सूपपन्न इति चिच्छायापत्त्या च बुद्धेरातपवत् प्रकाशकत्वं युक्तमिति बुद्धिप्राणाविह गुहां प्रविष्टौ वाच्यौ, एवं प्राप्ते आह—"गुहां प्रविष्टावि"ति। ( क्रमशः )

---

# भवितव्यानां भवन्ति द्वाराणि सर्वत्र

आसीत् कस्मिंश्चित्पत्तने धनिकधुरीणः सुवर्णकुम्भो नाम। तस्य च प्रातिवेशिकः परितोषो नाम दरिद्रो वृत्त्यर्थं सीदति स्म। एकदा केनचन ज्योतिर्विदा सुवर्णकुम्भाय कथितम्, सम्पद्विपद्वापि निसर्गलोला कुत्रापि न स्थैर्यमूरीकरोति। कालक्रमेण सर्वा ते सम्पत् तव प्रातिवेशिकेन लप्स्यत इति। तच्छ्रुत्वा स विषादस्य परां कोटिमधिरूढः सर्वस्वं व्यक्रीणीत। ततश्च महामूल्यहीरकमेकमुपक्रीय शिरस्त्राणे स्यूतवान्—पश्यामि तावत् कथं दीनो मे प्रातिवेशिको मदीयां सम्पदं लभेतेति।

अथ व्यतीतेषु केषुचिन्मासेषु सुवर्णकुम्भः समुद्रयात्रामकरोत्। मध्येसमुद्रं च नावि स्थितस्य तस्योष्णीषं प्रबलेन प्रभञ्जनेन समुद्रसलिले निपातितं क्षणेन च तत्र निमग्नम्। ततश्च मूढेन तेन चिन्तितम्, कामं प्रनष्टो मे हीरकस्तथापि दरिद्रो मे प्रातिवेशिकः कथमप्येतदासादयितुं न प्रभविष्यतीति। तच्छ्रुत्वा नियतिः स्मितमकरोत्।

ततश्च गतेषु केषुचिद्दिनेषु दरिद्रेण तेन प्रातिवेशिकेन सामुद्रिको मत्स्यः क्रीतः। खण्डशः कल्पितस्य तस्योदराभ्यन्तराल्लब्धः प्रभापटलभासुरः स हीरकः।

---

## भाषायां सङ्करः (Contamination)

दैनिकवसुमतीपत्रिकायां ( कलिकाता २३शे वैशाख, बृहस्पतिवार, १३६६ ) द्वितीय-सम्पादक-प्रबन्धे दृष्टम्—The *whirling* of time brings *its own* revenges इति। कविकुलचूडामणेः शक्षपीयरस्य Twelfth Night नाटके दृश्यते—Thus the whirligig of time brings in his revenges (v. i. 388) इति।

Statesman पत्रे (Wednesday, February 17, 1959 p. 11, col. 7, Late City Edition) दृष्टम्—State's police dogs squad...has a *uniformally* good record इति।

uniformly + formally = uniformally !

---

## कुम्भकर्णे भकारोऽस्ति

दैनिकवसुमती ( कलिकाता, शुक्रवार, ३रा वैशाख, १३६६, पृः १, स्त० ८ ): कलेजे ये उच्च मञ्च स्थापन करा हइतेछे, <u>तदोपरि</u> एकखानि सुसज्जित चन्द्रातप तले दलाइ लामा सकलके दर्शन दिवेन।

सर्व+उपरि : सर्वोपरि :: तद्+उपरि : $x$

$\therefore x$ = तदोपरि !!!

विश्व+उपरि : विश्वोपरि :: जगत्+उपरि : $x$

$\therefore x$ = जगदोपरि !!!

अश्व+उपरि : अश्वोपरि :: द्वीपिन्+उपरि : $x$

$\therefore x$ = द्वीपोपरि !!!

मृत्तिका+उपरि : मृत्तिकोपरि :: भूमि+उपरि : $x$

$\therefore x$ = भूमोपरि !!!

---

## विसर्गो विद्यते तत्र तकारो यत्र वर्तते

### आपातः मधुर

दैनिकवसुमती-पत्रिकायां ( २८ शे माघ बुधवार १३६५ पृः ४, स्त० ४ ) सुबृहद्भिरक्षरैर्मुद्रितम्—आपातः मधुर इति। ततश्च ह्रस्वतरैरक्षरैर्मुद्रितम्—... आपातःमधुर इति। अनेनैव न्यायेन ओतप्रोतशब्दे विसर्गद्वयं दृष्टिपथमुपयाति। आपाततःशब्दे विसर्ग उपासनीय आपातशब्दे पुनर्दूरतः परिहर्तव्य इति पक्षपातमूलको व्यवहारः सर्वथा वर्जनीयः। दिनान्तरे तस्यामेव पत्रिकायामेकस्यामेव वार्तायां पञ्चकृत्वः सविसर्गः स्वर्गत शब्दो दृष्टिपथमापतितः !!!

---

# श्वावराहम्

( १५८तम-पृष्ठतोऽनुवर्तते )

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

महाभाष्ये श्वावराहिकापदमुपलभ्यते। तथाह्यव्ययात् त्यप् [ ४।२।१०४ ] इति सूत्रे दृश्यते वार्त्तिकम्—द्वन्द्वाद् वुन् वैरमैथुनिकयोरिति [ २१ ]। व्याख्यातश्चेदं भाष्यकारेण—द्वन्द्वाद् वुन् वैरमैथुनिकयोश्छाद् भवति विप्रतिषेधेन। वुनोऽवकाशः अहिनकुलिका। छस्य स एव। इहोभयं प्राप्नोति—काकोलूकिका। श्वावराहिका। इति। अत्र कैयटः। श्वा च वराहश्चेति द्वन्द्वः। येषां च विरोध इत्येकवद्भावः। शुनो दन्तदंष्ट्रेति दीर्घः। ततो वैरे वुन्। इति। अत्र नागेशः - श्वावराहस्य वृद्धत्वमुपपादयति—श्वा चेति। शुनो दन्तेति। अन्येषामपि दृश्यते [ ६।३।१३७ ] इत्येतत्प्रपञ्चभूताभियुक्तोक्तिरियम्। इति।

अन्येषामपि दृश्यते [ ६।३।१३७ ] इति सूत्रे काशिकायां दृश्यते वार्त्तिकं शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेष्विति। तत्र श्वावराह इत्युदाहरणमुपन्यस्तं जयादित्येन।

यद्यपि श्वादेरिञि [ ७।३।८ ] इति सूत्रेणेञि परत एव न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् [ ७।३।३ ] इति सूत्रोक्तकार्यस्य बाधो विहितः, तथापि भाष्योक्तश्वावराहिकेत्युदाहरणतो ज्ञायते श्वावराहेऽपि प्रतिषेधो भवतीति।

"श्वावराहं कलहं विदध्यात्" "अभ्यस्यतीव व्रतमासिधारम्" [ रघु० १३।६७ ] इत्यादिष्विवार्थस्य स्फुटमेव प्रतीयमानत्वात् श्वा च वराहश्च तयोः समाहारः श्वावराहम्, श्वावराहमिव श्वावराहः शर्करादिभ्योऽण् [ ५।३।१०७ ] इत्यण्। इत्येव युक्तं निर्वचनमिति प्रतिभाति। प्रमाणञ्चात्र धीः सुधियाम्। असिधारा-श्वावराहप्रभृतयः शब्दाः प्रयोगानुरोधेन शर्करादिषु द्रष्टव्याः।

वराहहननार्थं शुनां नियोजनमृग्वेदेऽपि श्रूयते। अत एव श्वा वराहयुरिति व्यपदिश्यते। भाष्यकारेणापि काकोलूकिकयाधासनमारोपिता श्वावराहिका, अत एव शुनां वराहाणां च विरोधः शाश्वतिक इति बोद्धव्यम्। अत एव श्वा च वराहश्च श्वावराहमिति वक्तव्यम्।

---

## संशोधनम्

पृ० १७९ प० २७ सारस्वतेति पठनीयम्।

पृ० १८५ प० ९ जनयतीति पठनीयम्।

पृ० १९२ प० १६-१७ निष्पतामित्यादिकं निष्कासनीयम्।

# भरतमेलनम्

[ श्रीविश्वेश्वर-विद्याभूषणेन
श्रीध्यानेशनारायण-शास्त्रिणा च विरचितम् ]

## चतुर्थदृश्यम्

( शृङ्गवेरपुरम्। वनमध्ये गुहको निषादराजः सानुचर आसने तिष्ठति। निषाद-बालिकाश्च गानेन तं संवर्द्धयन्ति। )

निषादबालिका गायन्ति—

रणदुर्जय वनपाल
जय निषादपते जय जय वीर विशाल।
स्वजनपालक गुणभूषण
आर्तरक्षक रिपुसूदन
जय गुहक शत्रुमथन सुन्दर वनमाल।
भयभञ्जन जनरञ्जन सत्यपाल ॥

अनुचरः। ( प्रविश्य ) जयतु निषादराजः। ( प्रणमति, प्रणम्य च प्रतिष्ठते। )

गुहकः। ( चरं प्रति ) भोः, किं विदितो वृत्तान्तः ?

प्रथमानुचरः। निषादराज, दृष्टो मयोत्तुङ्गशाश्वततरुशिखराद् दूरवर्ती विशालो जनसङ्घः।

गुहकः। ( चिन्ताकुलः ) ततस्ततः ?

प्रथमचरः। स हि संक्षुब्धो जलधिजलोच्छ्वास इव नगरप्रान्तम् आक्रामति।

गुहकः। ( उत्तेजितः ) अरे, इमौ मे कृतान्तोपमस्य वज्रसारौ विशालौ बाहू। तन्नि-षादराज्यातिक्रमणे कस्येयं मरण-स्पृहा ?

द्वितीयचरः। ( सहसा प्रविश्य ) सर्वनाशः, सर्वनाशः ! प्रभो, सर्वनाशः समुपस्थितः !

गुहकः। आः, कथं सर्वनाशः ? कथ्यतां, किम्भूतोऽयमनर्थः ? को हि मूढोऽत्रात्म-नाशमभ्यर्थयते ?

द्वितीयचरः। अरातिचरणोत्क्षिप्तैर्धूलिजालैः समाच्छन्नं दिङ्मण्डलम्। प्रलयप्रभञ्जनो-च्छ्वास इवाकर्ण्यते जनकोलाहलः।

गुहकः। अथ किम्। ततः ?

द्वितीयचरः। उन्मत्तमातङ्गश्रेणय इव सहस्रशो नगरं प्रविशन्ति वैदेशिकाः।

प्रथमचरः। वह्निज्वाला इव विलसन्ति नभस्तलेऽगणिता रथपताकाः।

गुहकः। ( उत्थाय ) रे रे !

चरौ। आदिशतु नाथः।

गुहकः। यूयमत्र सज्जीभूतास्तिष्ठत। प्रचण्डबाणपातैर्निर्मूलयितव्याः शत्रवः।

चरौ। ( सोल्लासम् ) संहारः, संहारः!

गुहकः। प्रज्वाल्यतामनलः प्रज्वाल्यतामनलः।

एषा मे शोणितास्वादलोलुपा मर्मघातिनी।
नृत्यतु समरोल्लासाच्छल्यकी शितधारिणी॥

चरौ। संहारः, संहारः!

( सहसा शङ्खो ध्वनति, प्रविशति जटाचीरधरो भरतः। )

गुहकः। ( चरान् प्रति ) भो भो विरम्यताम्, विरम्यताम्। मन्ये कोऽपि परिव्राजकः समायाति। अतः क्रियतामस्त्राणां प्रत्याहारः।

भरतः। ( उपसृत्य ) निषादराज, एषोऽहं दाशरथिः श्रीरामचन्द्रमेलनकामोऽयोध्यायाः समागच्छामि।

गुहकः। ( पुरःसृत्य ) स्वागतमत्र धीमन्! सबहुमानं भवन्तमहं प्रत्युद्गच्छामि। उपविश्यताम्।

चरौ। जयति जयति राघवः!

भरतः। ( उपविश्य ) पितृबन्धो, रघुकुलकलङ्को भरतोऽहं राघवस्य चिरदासः।

गुहकः। जयतु दाशरथिः! धन्योऽस्मि भवतां समागमेन। तदेहि वत्स, परिष्वजस्व मां गाढम्। ( भरतमालिङ्गति। )

भरतः। मतिमन्, पितृसौहृद्यप्रसङ्गाद् भवानपि मे माननीयः। अधुना दीनोऽहमशरणः। अतो रामभद्रमेलने साहाय्यकं प्रयाचे।

गुहकः। साधु, साधु! तदिह विश्रम्यताम्। गृह्यताम् अकिञ्चनानामातिथ्यम्। पश्चाद् यथाकर्तव्यं साधयिष्यामि।

भरतः। अनुगृहीतोऽस्मि! ( गुहकं प्रति ) पितृबन्धो, जननी मे विवेकहीनतया चिरकलङ्कितां गता।

गुहकः। अलमलं विषादेन राजपुत्र! अलङ्घ्यं खलु दैवविधानम्। प्राज्ञोऽसि, शोकवशं न गन्तुमर्हसि।

भरतः। निषादपते! पर्युत्सुकोऽस्मि श्रीरामचन्द्रसन्दर्शनार्थम्।

( गुहको भरतेन सार्द्धमुत्थाय परिक्रामति दर्शयति चाभिज्ञानानि। )

गुहकः। अलमुत्कण्ठया राजपुत्र! इहागम्यताम्। दृश्यतां च पर्णशयनं राघवस्य।

रामः। ( निःश्वस्य ) अहो दशाविपर्यासः! एषा पर्णशय्या रामभद्रस्य।

क्व बत स्वर्णपर्यङ्के कोमला पुष्पशय्या ।
क्व चेह रामभद्रस्य वृक्षमूलाधिवासः ॥

( मुखमाच्छादयति । )

गुहकः । इत इतः कुमार ! पश्य—अत्र च श्यामलदूर्वादलेषु तिष्ठन्ति वैदेह्या उत्तरीयाञ्चलविश्लिष्टान्यभिज्ञानानि ।

भरतः । हा हा ! यूथभ्रष्टा मृगी कान्ता चरत्येका यथा वने ।
निःसहाया तथार्या मे संश्रितेदं शिलातलम् ॥

तद् विरम विरम तात ! नातः परं क्षमोऽस्मि श्रोतुम् ।

गुहकः । ( सस्नेहं भरतस्य स्कन्धे हस्तमारोप्य ) अलं शोकेन राजपुत्र ! अत्र निःशङ्को रजनीं यापय । प्रभाते च सरयूमुत्तीर्य भरद्वाजाश्रमं प्राप्स्यसि ।

( गुहकः प्रस्थितः । )

भरतः । ( सविषादं परिक्रामति ) एषा सरयूर्मन्दाकिनीव तरङ्गमालिनी कलतानैर्मुखरयति वनस्थलम् । दूरतो विलसति चानीलतरुपल्लवान्तरालविलीना श्यामला वनरेखा । ( नेपथ्ये वीणा करुणं ध्वनति । ) रघुकुलराजधानी अयोध्या—सा स्वर्णसौध-किरीटिनी जन्मभूमिः ।

( पटः पतति )

———

## पञ्चमं दृश्यम्

( भरद्वाजाश्रमसमीपे क्रीडन्ति मुनिकुमाराः । )

सुमित्रः । इत इतः सखायः !

सुदर्शनः । अत्र वनभूमौ सानन्दं क्रीडामः ।

श्रीकेतुः । सखायः, अद्यानध्यायदिवसः परमवाञ्छितः ।

सुमित्रः । आनन्द आनन्दः ! दिष्ट्या सपरिजनो दाशरथिर्भरतः सम्प्राप्तः ।

सुदर्शनः । तीर्थीभूतमाश्रमस्थलं महात्मनां समागमेन । उक्तमाचार्यचरणैः—अद्या-नध्यायो विद्यार्थिनामिति ।

श्रीकेतुः । जयतु राघवः ! तेनैवमुत्सवेन दिवसं यापयामः । ( हारीतः प्रविशति—तेन सार्द्धमपरे मुनिबालकाश्च । )

हारीतः । वयमप्याचार्यमनुज्ञाप्य क्रीडनार्थमुपागताः ।

सर्वे । साधु, साधु ! ( करतालिं ददति । )

श्रीकेतु-हारीतौ। ( अपरान् प्रति ) एत एत, विहरामः। ( कुञ्जान्तराले लुक्कायितौ। )

सुमित्रः। अये क्व गतौ प्रियसहचरौ? ( अन्विष्यति। )

सुदर्शनः। अत्र गहनकुञ्जान्तराले क्वापि लुक्कायितौ भवेताम्।

सुमित्रः। एहि, पश्याव तावत्। ( श्रीकेतुः करतालिपूर्वकं निःसरति। )

श्रीकेतुः। मधुरं, मधुरम्!

सुदर्शनः। आनन्द आनन्दः!

श्रीकेतुः। अहो, एषा पुष्पिता माधवीलतिका शाखावलीमान्दोलयन्त्यानन्दं प्रकाशयति।

सुमित्रः। न केवलं माधवीवल्लरी। पश्यैते वनविहङ्गमाश्चास्माकं क्रीडनानन्देन सहर्षं कलरवं कुर्वन्ति।

सुदर्शनः। अहो धन्या वयम्! तच्चिरं जीवत्वत्रभवान् राघवः, यस्य प्रसादाद् वयमद्य विमलं क्रीडनानन्दमनुभवामः।

सर्वे बालकाः। आनन्द आनन्दः!

( गीतस्वरेण ) भद्रं पश्येम, भद्रं शृणुयाम, जीवेम शरदां शतम्।

---

## षष्ठं दृश्यम्

( चित्रकूटस्थं पर्णकुटीरम्। भरतः करतले न्यस्तकपोलस्तिष्ठति। )

रामः। ( प्रविश्य ) स्वप्नो नु, माया नु, उत वा मतिभ्रमः। हा कष्टम्! एष शोकपाण्डुरमुखच्छविर्भरतोऽतिकष्टेन ज्ञायते। प्रतिभाति चैष मेघमलिनो यथैव निशाकरः। ( भरतं प्रति ) तात! कथमेवंविधो दीनवेषः? अनर्घ-मणिरत्न-माल्यार्हिणो मनोरमभूषणविलासिनस्ते शोकम्लानमुखच्छविर्मां व्यथयति।

भरतः। आर्य, जनन्या मे महानपराधः कृतः। तत् क्षम्यतामात्मजनदोषः।

रामः। शान्तं पापम्, शान्तं पापम्! सौम्य, न खल्वार्यामम्बामुद्दिश्यैवं वक्तुमर्हसि। माननीया खलु जननी कैकेयी।

भरतः। आर्य, वात्सल्यात् कामाद्वा जनन्या बुद्धिवैकल्यं सञ्जातम्। अधुना क्षमां प्रार्थये।

रामः। वत्स, दैवाधीनव्यापारे नास्ति कोऽपि विचारः। किन्तु, स्नेहमयी चिरमस्माकमम्बा।

कैकेयी। ( प्रविश्य ) वत्स रामभद्र!

रामः। अम्ब! नमस्ते।

कैकेयी। वत्स, चिरं जीव। तात, चिरप्रणयी त्वमस्मासु। अहं हि कलङ्कमालिनी नितरां दीना सर्वथा शोच्यतां गता।

रामः। अम्ब, अलमलं विषादेन। चिरं स्नेहास्पदं भवत्या आबाल्यप्रेमानुबन्धी रामभद्रः।

कैकेयी। वर्द्धस्व, तात।

भरतः। राघव, भवन्तं विहाय कथं वयं जीवामः? अतः, स्वराज्यं प्रत्यावृत्त्यानुगृह्यन्तां परिजनाः।

रामः। सौम्य, प्राज्ञोऽसि। प्रियोऽसि गुरुजनानाम्। तत् किं युज्यते पितृसत्यलङ्घनम्?

भरतः। कृतमेव भवता पितुः सत्यपालनम्। अधुना सर्वेऽयोध्यावासिन आकाङ्क्षन्ति भवतः प्रत्यागमनम्।

रामः। भ्रातः, पितृधर्म्मपालनम् अपत्यानामवश्यकरणीयम्। तद् धर्मलङ्घनेन कथं पित्रेऽपराध्यामि?

कैकेयी। तात, विजयते हि स्वर्गधाम्नि लोकोत्तरचरितस्ते जनकः। स हि शुभं विधास्यति।

रामः। मातः, कथं पितृसत्यं मिथ्या प्रतिपादयामि? तेन हि तातः स्वर्गभ्रष्टो भवेत्।

भरतः। राघव, इक्ष्वाकूणां कुलधर्मानुसारेण ज्येष्ठस्यैव राज्याधिकारः। किञ्च राज्यशासनेऽहं नितरामशक्तः।

रामः। एष ते प्रणयानुबन्धः। शीलेन, वीर्य्येण, प्रज्ञाबलेन च समग्रामपि वसुन्धरां पालयितुं त्वं शक्ष्यसि।

भरतः। निखिलगुणाधारस्त्वम् अयोध्यामलङ्कुरु—इत्येवाम्बानामैकान्तिकमभिमतम्।

कैकेयी। बाढम्। तथास्तु। सम्यगाहैषः।

रामः। अम्ब, अक्षमोऽस्मि। क्षमस्व माम्।

(भरतं प्रति) वत्स,

प्राणा मुञ्चन्तु मेऽङ्गानि विश्वं वा विलयं व्रजेत्।
कुलधर्म्मं चरिष्यामि, सत्यरक्षा व्रतं मम॥

(भरतं हस्ते धृत्वा) वत्स, तन्नार्हसि विषादमूरीकर्तुम्। विजयस्व पितृधर्म्मपालनेन।

(भरताय समादरं प्रदर्शयति वक्षसि निधाय।)

भरतः। आर्य, दीनोऽस्मि। (चिन्तां नाटयति।)

रामः। अलमुत्कण्ठया, धीमन्! कुलाचार्यवशिष्ठप्रमुखा वृद्धामात्याश्च ते हितैषिणः सर्वथा सहाया भविष्यन्ति। अतः स्वीकृत्य राज्यभारं पाल्यतां प्रजागणः। (क्रमशः)

# रसमञ्जरी

## चहोपनिषत्

[ पी० शर्मा ]

ॐ अस्य श्रीचहापानमन्त्रस्य लीहुङ्गफुशीम ऋषिः, लिप्टनो देवता, अनुष्टुप् छन्दः, चहाप्राशने विनियोगः ।

अथ चहांकरणविधिः पानविधिश्च ।

प्रातरुत्थाय, शौचमुखमार्जनात्पूर्वम्, अनन्तरं वा, तयोः पूर्वमधिकतरं श्रेयः, अग्निं वाग्नियन्त्रं[1] वा प्रज्वाल्य, तस्योपरि पात्रं निधाय, तस्मिन् यथेप्सितं जलं निक्षिप्य, प्रच्छाद्य, वेणुधमन्या वातपूरकयन्त्रेण[2] वा प्रबोध्य, सगद्गदतापपर्यन्तं तापयित्वा, प्रतिपात्रार्थमेकैकदर्वीं[3] चहां निक्षिप्य, प्रच्छाद्य, अग्नेरुत्तरतो निधाय, पञ्चदश विंशतिं वा पलानि तत्रैव स्थापयित्वा, आधारपात्रस्योपरि[4] पानपात्रं[5] निधाय, क्षालिन्या वस्त्रेण वाच्छाद्य निर्धूतपल्लवं कृत्वा, यथेप्सितं दुग्धशर्कराभ्यां विमिश्र्य, पानपात्रेणाधारपात्रेण वा क्षणं क्षणं पिबेत् ।

अथ पानमन्त्रः ।

"यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ।
चहाप्राशनमेकं तद् दहत्वग्निरिवेन्धनम् ॥"

इति प्राश्य, वस्त्रेण वा जलेन वोभाभ्यां वा मुखहस्तं प्रक्षाल्य माहात्म्यं पठेत् ।

श्रीकृष्ण उवाच ।

एष तेऽभिहितः सौम्य चहापानविधिः शुभः ।
श्रृणु नारद माहात्म्यं लोकानुग्रहकाङ्क्षया ॥१॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
व्यवहारो न पापाय विरुद्धजातिभिः सह ॥२॥
स्वर्गसोपानमेतद्धि आयुरारोग्यदायकम् ।
चहापानं चहापानं चहापानं हि मोक्षदम् ॥३॥
चहाप्राशनकर्मान्ते माहात्म्यं नैव यः पठेत् ।
वृथा पानं भवेत्तस्य पुनराचरणं[6] हितम् ॥४॥

इति श्रीगृहपुराणे द्वितीयस्कन्धे द्रव्यभोगप्रकरणे चहापानविधिः समाप्त

श्रीकृष्णायार्पणमस्तु ॥

---

१ stove. २ with the pump. ३ tea-spoon. ४ on the saucer. ५ cup ६ another cup.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥


# मञ्जूषा

| August, 1959. | १८८१-शकीय-भाद्रस्य १३श-वर्षस्य द्वादशी संख्या | Vol. XIII No. 12 |
|---|---|---|


## आभाणकमाला

१। Where ghosts walk, there is loving or thieving.

यत्र वेताला विचरन्ति तत्र प्रणयः प्रमोषो वा प्रवृत्तः ।

२। There is no severity like gentleness.

मार्दवमिव काठिन्यं जगति नोपलभ्यते ।

३। Latin. Istuc est sapere, non quod ante pedes modo est, Videre, sed etiam illa quae futura sunt Prospicere.

That is to be wise, not merely to see what is before one's eyes, but to forecast those things which are to come.

न केवलं समक्षं यत्तदेव योऽवलोकते ।
स एव लोके प्राज्ञः स्यादूहेत योऽप्यनागतम् ॥
नष्टं मृतं चातिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषोऽयमिति स्मृतः ॥

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः ।
अनुक्तमप्यूहति[1] पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥

Lat. Istuc est sapere, qui, ubicunque opus sit, animum possis flectere.

That is to be wise, to be able to bring yourself to comply with whatever circumstances may require.

---

[1] 'ऊहते' इति साधु। उपसर्गपूर्वोऽयं धातुरुभयपदी। उपसर्गादस्यत्यूह्योर्वा-वचनमित्युक्तेः।

# को वा सहचरः

[ स्वर्गतरामदयालमजुमदारमहोदयस्य ]

इह क्वापि गन्तव्यं चेत् सहचरं विचीयते, परम् अमुत्र को वा सहचरः स्यात्? कालेन बहुनाल्पेन वा देहादस्मान्निष्कासयिष्यसे, तदानीं क्व वा गमिष्यसि? को वा त्वामनुगमिष्यति?

श्रीमद्भागवतस्य तृतीयस्कन्धस्य त्रिंशत्तमेऽध्याये मुमूर्षोर्मनुजस्य समवस्थोपवर्णिता। बहुष्वेव शास्त्रेष्वस्या वर्णनमुपलभ्यते। मा मंस्थाः शास्त्रेण मानवान् भीषयितुमेवमसत्यमुपाख्यानमुपकल्पितमिति। कथं वा शास्त्रमसत्यमुपनिबध्नीयात्? ऋषिभिरभ्युक्तं शिरश्छेदेऽप्यसत्यं न भाषेतेति। अत्र श्रीमद्भागवतवचनम्—

कुटुम्बभरणेऽकल्पो मन्दभाग्यो वृथोद्यमः।<br>
श्रिया विहीनः कृपणो ध्यायञ्छ्वसिति मूढधीः ॥१२॥<br>
एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा।<br>
नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥१३॥<br>
तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयम्भृतैः।<br>
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥१४॥<br>
आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन्।<br>
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥१५॥<br>
वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिना।<br>
कासश्वासकृतायासः कण्ठे घुरघुरायते ॥१६॥<br>
शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः।<br>
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥१७॥<br>
एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः।<br>
म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥१८॥

---

अकल्यः असमर्थः ॥१२॥ कीनाशाः कृषीवलाः। गोजरं वृद्धबलीवर्दम् ॥१३॥ भ्रियमाणः पुष्यमाणः ॥१४॥ अवमत्या अवज्ञया उपन्यस्तं समीपे प्रक्षिप्तम्। गृहपालः श्वा। आहरन् भुञ्जानः। आमयावी रोगी ॥१५॥ उत्क्रामतेति साधु। उत्तारो बहिर्निर्गतनेत्रः। कफेन संरुद्धा नाड्यो मार्गभूता यस्य तेन। कासश्वासाभ्यां कृत आयासो यस्य। घुरघुर इति शब्दं करोति ॥१६॥ परिवीतः परिवेष्टितः। वाच्यमानः 'बन्धो तात' इत्याहूयमानः ॥१७॥ स्वानां ज्ञातीनाम्। स्वमज्ञातिधनाख्यायाम् इति सर्वनामसंज्ञाभावः। अस्तधीर्नष्टमतिः ॥१८॥

यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।
स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥१९॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ।
नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥२०॥
तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ।
पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥२१॥
क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके ।
कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥२२॥
तत्र तत्र पतञ्छ्रान्तो मूर्छितः पुनरुत्थितः ।
पथा पापीयसा नीतस्तमसा यमसादनम् ॥२३॥
योजनानां सहस्राणि नवतिं नव चाध्वनः ।
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥२४॥
आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।
आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥२५॥
जीवतश्चान्त्राभ्युद्धारं श्वगृध्रैर्यमसादने ।
सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥२६॥
कृन्तनञ्चावयवशो गजादिभ्यो भिदापनम् ।
पातनं गिरिशृङ्गेभ्यो रोधनञ्चाम्बुगर्तयोः ॥२७॥
यास्तामिस्रान्धतामिस्ररौरवाद्याश्च यातनाः ।
भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥२८॥

---

मृतस्य पुण्यपापाभ्यां द्वे गती । तत्र पापगतिमाह यमदूतावित्यादि यावत्समाप्ति । सरभसं सक्रोधम् ईक्षणं ययोः तौ दृष्ट्वा ॥१९॥ स्थूलदेहान्निष्कास्य यातनामयदेहे तं प्रवेश्य आवृत्य निरुध्य ॥२०॥ तयोस्तर्जनैर्निर्भिन्नं हृदयं यस्य । आर्तः स श्चलतीति द्वितीयेनैवान्वयः ॥२१॥ क्षुत्तृड्भ्यां परीतो व्याप्तः । तप्ता वालुका यस्मिन् । निर्गत आश्रमो विश्रामस्थानम् उदकञ्च यस्मिन् ॥२२॥ यमसादनं नीतो भवति । तत्रैव विशेषमाह । अध्वनः सम्बन्धिनां योजनानां नवतिं नव च सहस्राणि, पापाधिक्ये द्वाभ्यां वा नीतः सन् ॥२४॥ यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनं प्रज्वलनं प्राप्नोति । स्वेनैव कृत्तम् अन्येन वा कृत्तं छिन्नं यत् स्वस्य मांसं तस्य भक्षणम् ॥२५॥ आत्मनो वैशसं पीडाम् । कृन्तनमार्षम् । भिदापनम् भेदप्रापणम् । आर्षं आपुक । ॥२७।२८॥]

अत्रैव नरकः स्वर्ग इति मातः प्रचक्ष्यते ।
या यातना वै नारक्य स्ता इहाप्युपलक्षिताः ॥२९॥
एवं कुटुम्बं बिभ्राण उदरम्भर एव वा ।
विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥३०॥
एकः प्रपद्यते ध्वान्तं हित्वेह स्वं कलेबरम् ।
कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥३१॥
दैवेनासादितं तस्य शमलं निरये पुमान् ।
भुङ्क्ते कुटुम्बपोषस्य हृतवि(चि)त्त इवातुरः ॥३२॥
केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ।
याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥३३॥
अधस्तान्नरलोकस्य यावतीर्यातनास्तु ताः ।
क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥३४॥

"यमद्वारे महाघोरे तप्ता वैतरणी नदी ।" तस्याः पीडनं वर्णयितुमप्यशक्यम् । साम्प्रतं स्वीकुरु वा मा वा स्वीकार्षीः, यदि जीवितकाले क्षमां प्रार्थयमानस्त्वां दयामयीं तं वा दयामयं न ज्ञापयसि, यदि समुद्धर समुद्धरेति नियममास्थाय कृतानां पापानां प्रायश्चित्तं नाचरसि, तर्हि निधने ते सहचरः स्याद् रोषकषायितलोचनो विभीषणो यमदूतः ।

भ्रातर्जीवने सहचरं विधेहि तं दयमानं दीर्घनयनं तां वा दयमानां दीर्घनयनां तं करुणामयं तां वा करुणामयीम् । यानि स्वल्पानि दिनानीदानीमप्यवशिष्यन्ते तेष्वेकस्मिन्नपि सहचरं कर्तुं मा विस्मार्षीः । तर्ह्येव मरणे तं सहचरं लप्स्यसे । यं तावज्जीवने सहचरं कृतवान् कथं वा स मरणे सहचरः स्यात् ? इदानीमपि कालो वर्तते, सावधानो भव ।

---

न चेदमसम्भावितम्, अत्रापि दृश्यमानत्वादित्याह—अत्रैवेति । प्रचक्ष्यते प्रख्यायत इति साधु ॥२९॥ उभयं कुटुम्बं स्वदेहञ्च ॥३०॥ पापार्जितं धनं भुञ्जते बहवः कर्तैव तु नरकं यातीत्याह—एक इति । भूतद्रोहेण यद् भृतं तत् स्थूलं कलेवरं स्वं धनञ्च इहैव हित्वा । कुशलादितरत् पापं तदेव पाथेयं भोग्यं यस्य ॥३१॥ ननु पापमपि विहाय गच्छतु, तत्राह—दैवेनेति । तस्य कुटुम्बपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं भुङ्क्ते ॥३२॥ ननु कुटुम्बपोषणं विहितमेव, तत्राह—केवलेनेति । तमसो नरकस्य चरमं पदं स्थानम् ॥३३॥ पुनर्मनुष्यशरीरप्राप्तिप्रकारमाह—नरलोकस्य मनुष्यदेहप्राप्तेरधस्तात् अर्वाक् यावत्यो यातनाः । यावच्छब्देन श्वसूकरादियोनयश्च याः ताः सर्वाः क्रमेण सम्प्राप्य भोगेन क्षीणपापः शुचिः सन् अत्र पुनर्नरत्वं प्राप्नोति ॥३४॥

# श्वसेत्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

भट्टिकाव्ये [ १९।२१ ] दृश्यते—

स भवान् भ्रातृवद् रक्षेद्यथावदखिलं जनम्।
स भवन् संप्रमुद्यैश्चेदाश्वसेयुर्निशाचराः॥

इति। जयमङ्गलासर्वपथीनादिषु "आश्वस्युश्च निशाचराः" इति पाठः। जयमङ्गलाकृतोक्तम्—आश्वसेयुरिति पाठान्तरमिति। परम् आश्वसेयुरिति पाठ एव कवेः सम्मत इति प्रतिभाति चकारस्य सर्वथैवाजागलस्तनायमानत्वात्। आश्वसेयुरितिपदं दुष्टमिति वैयाकरणैराश्वस्युश्चेति पाठः कल्पितः, स एव च प्रायेण टीकाकृद्भिरनुसृत इति प्रतिभाति।

इतिहासपुराणादिषु प्रायेण सर्व एव धातव उभयपदिनो विभाषया भौवादिकाश्च। इतिहासपुराणानुसारेण बौद्धलेखकैर्विश्वस्यादिति विषमोच्चारणं पदं परिहृत्य विश्वसेदिति सुखोच्चारणं पदमवलम्बितम्। ततश्च कैश्चिदार्यैरपि गतानुगतिकतया तथा कृतम्। कालिदास-भवभूति-भारवि-माघादिभिः कविप्रजापतिभिः क्वापि विश्वसेत्पदं न प्रयुक्तम्, अश्वघोषादिभिः पुनः प्रयुक्तमेव।

बलेर्महेन्द्रं नहुषं महेन्द्रादिन्द्रं पुनर्ये नहुषादुपेयुः।
स्वर्गे क्षितौ वा विषयेषु तेषु को विश्वसेद् भाग्यकुलाकुलेषु॥ बुद्धचरित ११।१६

कस्तस्मिन् विश्वसेन्मृत्यावुद्यतासावराविव। सौन्दरनन्द १५।५९

[ न विश्वस्यात्ततो राजा कदाचिदपि कस्यचित्। सुश्रुत सं० कल्प १।७ ]

विश्वासयेदविश्वस्तं विश्वस्तं नातिविश्वसेत्।
यस्मिन् विश्वासमायाति विभूतेः पात्रमेव सः॥ कामन्दकीयनीतिसार ५।८९

संयोगं हेतुना गत्वा पितर्यपि न विश्वसेत्। काम० ११।३४

नोच्छ्वसेन्नैव निश्वस्यान्नैव गात्राणि चालयेदिति कुम्भके तन्निषेधस्मरणात्। योगसूत्रवृत्ति १।३१

यावदहमुच्छ्वसामि। प्रतिज्ञायौगन्धरायण १।८।२०

न कृतमित्याश्वसेत्। चरकसंहिता १।९।२७

मृत इव श्वसेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च। च० सं० चिकित्सा २३।६५

[ नित्यं वक्त्रेण चोच्छ्वस्यात्। सु० सं० १।३३।१६ ]

न चातिविश्वसेद्वैद्यो जितो व्याधिर्नयेति ह। काश्यपसंहिता पृः १८९

[ निद्रातन्द्रालस्यसमन्वितो निरुत्साहः श्वसिति। च० सं० चिकित्सा २।३ ]

वैरूपाक्षमारभ्योच्छ्वसेत्। गोभिलगृह्यसूत्र ४।५।८

[ यद्यासीनं मन्येतासीतैव, न द्विषतः पूर्वः प्रस्वप्यात्। ऐतरेय ब्रा० ४०।५

तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् सुखं बुधः। चरक सं० १।११।४९ ]

न स्वपेद्यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः। च० सं० ५।६।४५

विदग्धे प्रावृतः स्वपेत्। काश्यपसंहिता पृः २०।

निशि पीत्वा सुखं स्वपेत्। का० १४२।

प्रदोषे भोजयेदन्नं भुक्तमात्रे यथा स्वपेत्। का० १८४

भावमन्तर्गतं व्यक्तं सुप्तो मत्तश्च भाषते।

तस्मादेकः स्वपेन्नित्यं स्त्रियः पानं च वर्जयेत्॥ कामन्दक १६।२६

धान्यगोगुरुहुताशसुराणां न स्वपेदुपरि नाप्यनुवंशम्। बृहत्संहिता ५३।१२४

[ दृष्ट्वा तु प्रथमे यामे स्वप्याद् ध्यात्वा पुनः शुभम्। सु० सं० १।२९।७३ ]

दक्षिणावर्तनाथः। त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः [ पूर्वमेघ ८ ] इत्यत्र दक्षिणावर्तनाथेनोक्तम्—आश्वसत्य इति नुमागमरहितः पाठः। अत्र केचित् "क्षमूष् सहने" इत्यस्माद् धातोः षिद्भिदादिपाठेन षित्कार्ये सिद्धे क्षमूष् इति षित्त्वं गणकार्यस्यानित्यत्वज्ञापकं भवति। अत एव 'न विश्वसेत्पूर्वविरोधितस्य' इत्यत्र शपो लुङ् न भवति, तथा भट्टिकाव्येऽपि 'आश्वसेयुर्निशाचरा' इति। तस्मादाश्वसन्त्य इति नुमागमसहितः पाठ इति व्याचक्षते। तन्न, अन्यथापि रूपसिद्धेः। यत्र गणकार्यस्यानित्यत्वमपेक्ष्यैव रूपसिद्धिर्भवति तत्रैव तदाश्रयणस्य युक्तत्वादित्यलं विस्तरेण। इति।

प्रयोगरत्नमाला। श्वस्यात्। सिद्धमन्नं न विश्वसेदिति गणव्यत्ययश्छान्दसः। ९।१३९ ( पृः १०११-१२ )

प्रभाप्रकाशिका। न विश्वसेत्पूर्वविरोधितस्येति पञ्चतन्त्र इति मैत्रेयः। आश्वसेयुर्निशाचरा इति भट्टिः। न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेदिति नीतौ च। इत्यादिप्रयोगदर्शनाद् भूवादिरयमित्यन्ये। पञ्जिकास्वरसाच्छान्दसमित्युक्तम्।

गूढप्रकाशिका। ननु श्वसोऽदादिगणपाठात् श्वस्यादित्येव प्रयोगो दृश्यते [ युज्यते ? ], कथं विश्वसेदिति प्रयोगः ? इत्यत आह—सिद्धमिति। गणं भिन्नगणं यद्गुणे पठितस्तदन्यगणमिति यावत्। विशेषेण अत्ययनमतिक्रमणम् इति वि-अतिपूर्वादिनोऽल्। गणव्यत्ययोऽपरगणगतिरित्यर्थः। छन्दसि पद्ये (!) भव इत्यण्। तत्र जातमित्यादिनाण्। तथा च पद्ये छन्दोऽर्थौ भूवादिगणे पाठोऽपीति भावः। तेन प्रभाप्रकाशिकोक्तपञ्चतन्त्रादिषु न विश्वसेदविश्वस्तं मित्रञ्चापि न विश्वसेदिति चाणक्यपद्ये

प्रोन्मत्तेव स्खलितकबरो निःश्वसन्ती विशालमिति पदाङ्कदूतपद्ये च न दोषः। न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत्। न विश्वसेच्च मित्रञ्च सिद्धमन्नं न विश्वसेत्॥

दुर्घटवृत्तिः। कथं न विश्वसेत्पूर्वविरोधितस्येति पञ्चतन्त्रम्। आश्वसेयुर्निशाचरा इति भट्टिः। पचाद्यजन्तादाचारे क्विपि लिङि रूपम्। गणकार्यमनित्यमिति जयमङ्गला। भूवादेराकृतिगणत्वात्तत्र द्रष्टव्य इति, वृत्करणं तु यजादिसमाप्त्यर्थम्।

धातुप्रदीपः। क्षमूष् सहन इति घटादिपाठेनैव सिद्धे षित्त्वं ज्ञापकम् अनित्यं गणकार्यमिति। तेन "न विश्वसेत् पूर्वविरोधितस्ये"ति शपो लुङ् न भवतीति व्याचक्षते। भट्टिकाव्ये च प्रयोगो दृश्यते—आश्वसेयुर्निशाचरा इति।

संक्षिप्तसारटीका। तिङ् ६२४। भ्वादेस्तु अन श्वस प्राणने इत्यस्य आश्वसेयुर्निशाचरा इति भट्टिप्रयोगः।

क्षीरतरङ्गिणी।०।

माधवीयधातुवृत्तिः। श्वसेत् श्वसेतां श्वसेयुः श्वसेः श्वसेतम्। अत्र गणकार्यस्यानित्यत्वज्ञापनाच्छपो लुङ् न भवति। अनित्यत्वं च क्षमूषो घटादिपाठाद् घटादयः षित इत्येव षित्त्वे सिद्धे पुनः षित्करणाज् ज्ञायते। एवं च "न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्" "न विश्वसेत् पूर्वविरोधितस्य" "आश्वसेयुर्निशाचराः" "प्रत्ययादाश्वसन्त्य" इत्यादयः प्रयोगा उपपद्यन्ते।

कातन्त्रगणप्रदीपमनोरमा। कथं न विश्वसेत्पूर्वविरोधितस्येति पञ्चतन्त्रम्? तथाश्वसेयुर्निशाचरा इति भट्टिः। तथा विश्वस्ते नातिविश्वसेदित्यादि। उच्यते। पचाद्यजन्तादायिलोपे सप्तम्यां रूपम्। भ्वादेराकृतिगणत्वाद्वा भ्वादौ ज्ञातव्यम्। अत्र वृत्करणं यजादिसमाप्त्यर्थमिति धातुप्रदीपादावुक्तम्। घटादिपाठेनैव सिद्धे क्षमूष्धातोः षानुबन्धो ज्ञापयति गणकृतमनित्यमिति। अतोऽनो लोपो न स्यादित्यपि मैत्रेयः।

शब्दकौस्तुभः। ध्यायत्यादयस्तु दिवादिष्वेवादन्तत्वेन न पठिता गणकार्यमनित्यमिति ज्ञापयितुम्। तेन न विश्वसेदविश्वस्तम् पथिकवनिताः प्रत्ययादाश्वसन्त्य इत्यादि सिद्धम्। ( पृः १८५ )

As Whitney, Macdonell and others point out śvas is adādi in RV., but it is also bhvādi U. in AV. and the epics. In the optative of the present system, bhvādi P. forms are very frequent, so much so that Mādhava is constrained to hold that in the optative only the P. forms of the bhvādi root are to be used to the total exclusion of the adādi forms. Here Mādhava is merely following in the footsteps of Maitreya Rakṣita.

It is remarkable that Kṣīrasvāmin takes no notice of anomalous forms like श्वसेत्. He mentions Kāśakṛtsna's views regarding the past participle of the root: काशकृत्स्ना अस्य निष्ठायामनिट्त्वमाहुः। आश्वस्तः। विश्वस्तः। It is to be noted in this connexion that श्वसित occurs in the Brāhmaṇas and श्वस्त makes its first appearance in the epics. So if we are to regard Kāśakṛtsna as anterior to Pāṇini we shall have to hold that this is the view, not of the great Kāśakṛtsna himself, but of his followers. On the past participial forms Mādhava remarks: निष्ठायामिटं नेच्छन्तीति स्वामिकाश्यपौ। आदितश्च [ ७।२।१६ ] इत्यत्र वृत्तिकारश्च—चकारस्यानुक्तसमुच्चयार्थत्वादनिट्त्वमिति। आत्रेयमैत्रेयौ तु आश्वसित इतीटं चाहतुः।

Though स्वपेत् is also fairly common, commentators on the Gaṇapāṭha generally take no notice of it. In the Vedas and epics स्वप् belongs to both the bhvādi and adādi groups. In the Gautama Dharma Sūtra we find: न कदाचिद्रात्रौ नग्नः स्वपेत् i. 9. 60. Some of the epic forms appear to have been preserved in later Sanskrit also.

---

# कदा दधि सेवनीयम्

शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु च प्रशस्यते॥ सुश्रुत० १।४५।८०

---

# अनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"उपदेशेऽजनुनासिक इत्" "हलन्त्यम्" [ १।३।२-३ ] इति सूत्रद्वयं साम्प्रतं विचारपदवीमवतरति। यस्याच इत्त्वं सूत्रकारस्याभिप्रेतं सोऽनुनासिकः पठ्यते। एवमागमप्रत्ययादेशादिगतमन्तिमं व्यञ्जनमपीद् भवति।

"वावसाने" इति वर्तमाने "अणोऽप्रगृह्यस्यानुनासिकः" [ ८।४।५१ ] इति सूत्रेणावसानिकस्याप्रगृह्यस्याणः पाक्षिकमनुनासिकत्वं विहितम्। अत एवाचोऽवसानप्रदर्शनार्थं तस्यानुनासिकत्वं विहितम्। नाशोऽप्यवसानं भवतीति।

अन्तिमो भावविकारो विनाशः। तथाच निरुक्तम्—षड् भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति। इति। संयोगान्तस्य लोपः [ ८।२।२३ ] इति सूत्रेण संयोगान्तस्य हलो लोपो विहितः। अत एवानुबन्धार्थमन्ते व्यञ्जनमासज्यते सूत्रकारेण।

According to the rules उपदेशेऽजनुनासिक इत् and हलन्त्यम् the nasal vowel in the first utterance of a grammatical element is to be regarded as merely indicatory, so also the final consonant. Pāṇini's rule अणोऽप्रगृह्यस्यानुनासिकः furnishes a clue to the first aphorism. In the pronunciation of the nasal the nasal passage is also open. And it is particularly at the end of a word that we do not take pains to block the nasal passage. Hence nasal pronunciation of vowels generally takes place at the *end* of a word and so to show the *end* of a vowel, Pāṇini adds a nasal element to it.

According to Vārṣyāyaṇi whose opinion is quoted with approval in the Nirukta and the Mahābhāṣya death or annihilation is the last stage of all existence. Hence that which comes at the end of a grammatical element is particularly subject to death. In Sanskrit a conjunct at the end of a word drops its final consonant It is interesting to note in this connexion that in Greek consonants at the end of a word (except *m*, *r* and *s*) are dropped. In Sanskrit अन्त is a synonym of नाश। निष्ठा-निष्पत्तिनाशान्ताः। Hence Pāṇini tags on the indicatory vowels generally at the end of a word. ( क्रमशः )

---

# वार्त्तिकविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ऊङुतः [४।१।६६] इति सूत्रे दृश्यते वार्त्तिकम् ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् इति। व्याख्यातं चेदं भाष्यकारेण—ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्। अलाबूः। कर्कन्धूः। अप्राणिजातेरिति किमर्थम्? कृकवाकुः। अरज्ज्वादीनामिति किमर्थम्? रज्जुः। हनुः। इति।

एतस्माच्च विस्पष्टमेव प्रतीयते—उकारान्तादप्राणिजातेरूङ् भवतीति। अत एवारज्ज्वादीनामिति प्रतिषेध उपपद्यते। वेदादिषु ह्रस्वान्तावलाबुकर्कन्धुशब्दावुपलभ्येते।

क्रमेण चैतद् विस्मृतं व्याख्यातृभिः। अत एव जिनेन्द्रबुद्धिना व्याकृतम्—अप्राणिजातिवाचिनश्च प्रातिपदिकादूङ्प्रत्ययो भवति। अलाबूः कर्कन्धूरिति। कः पुनरत्रोङि सत्यसति वा विशेषः, यावतोभयत्र तदेव रूपं स एव स्वरः। तथाह्यलाबूशब्द उणादिषूकारप्रत्ययान्त एव व्युत्पाद्यते—कृषिचमितनिधनिसर्जिखर्जिभ्यः [उ० १।८१] इति णित् [उ० १।८७] इति च वर्तमाने नञि लम्बेर्नलोपश्च [उ० १।८७] इति नञ्पूर्वाल्लबि अवस्रंसने इत्यस्मादूप्रत्ययः। इदितो नुम्० [७।१।५८]

इत्यनेन कृतनुमागमरूपस्य नकारस्य नलोपश्च विहितः। कर्कन्धूशब्दोऽपि नृतिशृध्योः कूः [उ०१।९३] इति वर्तमाने अन्दू-दृन्भूजम्बूकफेल्लूकर्कन्धूदिधिषूः [१।९३] इत्यूकारान्त एव व्युत्पादितः। तत् किमर्थमूङ् विधीयते? अलाब्वा अलाब्वे इत्यत्र नोङ्धात्वोः [६।१।१७५] इति विभक्त्याद्युदात्तत्वप्रतिषेधो यथा स्यात्। असति हि तस्मिन् यथा खलप्वे खलप्वै इत्यत्र स न भवति तथेहापि न स्यात्। इति।

काव्यालङ्कारसूत्रवृत्तिकृता वामनेनाप्युक्तम्—ऊकारान्तादप्यूङ् प्रवृत्तेः [५।३।४८]। उत ऊङ् विहित ऊकारान्तादपि क्वचिद् भवति। आचार्यप्रवृत्तेः। कासौ प्रवृत्तिः? अप्राणिजातेश्चारज्ज्वादीनाम् [४।१।६६ वा] इति। अलाबूः कर्कन्धूरित्युदाहरणम्। तेन सुभ्रु किं सम्भ्रमेण [वेणीसंहार २।१९ तुलनीयम्]। अत्र सुभ्रूशब्द ऊङि सिद्धो भवति। ऊङि त्वसति सुभ्रूरिति स्यात्। इति।

हरदत्तेनाप्युक्तम्—अत्रोत इति नापेक्ष्यते तेनालाबूकर्कन्धूशब्दाभ्यां दीर्घाभ्यामपि भवति।...ऊङ्विधानमलाब्वा कर्कन्ध्वा इत्यादौ नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधार्थम्। इति।

भट्टोजिदीक्षितेनापि शब्दकौस्तुभे विवृतम्—यद्यप्येतौ दीर्घान्तावेवोणादिषु व्युत्पादितौ तथाप्यलाब्वा कर्कन्ध्वेत्यादौ नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधार्थमूङ्विधानम्। उत इति चेह नापेक्ष्यते, रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव। इति।

Monier-Williams महोदयस्याभिधानकोशे अलाबुस् f. the bottle-gourd, कर्कन्धुः कर्कन्धूः m. f. Zizyphus Jujuba इति दृश्यते। प्लक्षादिभ्योऽण् [४।३।१६४] इत्यत्र गणपाठे कर्कन्धुशब्दो ह्रस्वोकारान्तः।

---

## कुम्भकर्णे भकारोऽस्ति

### उश्शृङ्खल—उश्शृङ्खलता

"दैनिकवसुमती"पत्रिकायां (शुक्रवार, २७शे चैत्र, १३६५) प्रथमपृष्ठे प्रथमस्तम्भे दृष्टम्—

(१) सर्दार हुकुम सिं उश्शृङ्खलता ओ सभापतिर निर्देश अमान्य करार जन्य ताँहार नाम उल्लेख करेन।

(२) उश्शृङ्खल कार्यकलापेर जन्य लोकसभा हइते कोन सदस्यके बाहिर करिया देओयार घटना एइ प्रथम।

( ३ ) श्रीरामसेवक यादवकेओ उश्रृङ्खलतार जन्य सभापति बाहिर हइया याइते वलेन।

श्रृङ्खलायां च विश्रृङ्खले विश्रृङ्खलतायां च सुश्रृङ्खले सुश्रृङ्खलतायां च श्रकारोऽस्ति, अत एव उच्छृङ्खल उच्छृङ्खलतायामपि श्रकारेणावश्यं स्थातव्यम् !

---

## त्राताः पाणिनिना वयम्

Statesman पत्रे ( Saturday, June 20, 19 9, Late City Edition, p. 1, col. 1 ) दृष्टम्—we have always been prepared to make adjustments and *accomodations* इति। सप्तमपृष्ठे युग्मस्तम्भोपरिभागे दृष्टम्—when seating *accommodation* is limited. एतेन accommodation-शब्द एकमकारको द्विमकारको वेति सन्देहे पाणिनेः परिभाषोपतिष्ठते—विप्रतिषेधे परं कार्यमिति। बाल्ये यदास्माभिः स्कटिशचार्चकलेजेऽधीतं तदा न्यायशास्त्रमध्यापयद्भिः W. S. Urquhart महोदयैरुक्तम्—concomitant शब्द एकैकः ककार एकश्च मकारः, accommodation शब्दे पुनर्युग्मः ककारो युग्मश्च मकार इति। यथा तथा वा भवतु, एतत्त्वतीवान्याय्यम् ! सर्वत्रैव समत्वं साम्प्रतमपेक्ष्यते !!

---

## कथापि खलु पापानामलमश्रेयसे यतः

The Sunday Amrita Bazar Patrika वृत्तान्तपत्रे (June 21, 1959) श्रीमताशुदेमहोदयेन च्छात्राणां प्रमादं प्रदर्शयता विलिखितम्—Not unoften *does* he or she *ends* the letter इत्यादि ! स्वो हि भावः प्रमादानां श्रवणेन कीर्तनेन चिन्तनेनोपायान्तरेण च संक्रमणं नाम। तन्नैतदाश्चर्यं यत्प्रमादवर्णनपरस्य देमहोदयस्यापि लेखे प्रमादेन कृतं पदम्। चतुष्पाठीषु यदा शुद्धितत्त्वस्याध्यापनं प्रचलति तदा छात्रस्याध्यापकस्य वा कोऽपि स्वजनो नियमेनोपरतो भवति। एवमेव न्यायशास्त्रस्य व्यधिकरणप्रकरणपाठकालेऽपि बन्धुवियोगो भवति।

अध्यापकनिकाये काचन किंवदन्ती सुप्रसिद्धा वर्तते। सा च यथा। एकेन विदुषा सुहृदः सकाशे पत्रं प्रेषितम्। उत्तरेण मित्रवरेण विलिखितं नूनं भवता परीक्षापत्राणि निरीक्ष्यन्ते। तव पत्रे काश्चन वर्णाशुद्धयो दृश्यन्त इति। प्रत्युत्तरेण प्रथमेन विलि-

खितम्—भवतोऽपि समवस्था मादृशीव संलक्ष्यते। भवतापि परीक्षापत्रसमीक्षणेन कालो नीयत इति प्रतिभाति। सयत्नरचितेऽपि भवदीयपत्रे प्रमादः कश्चित् प्रत्यक्षीकृतः। अहो संक्रमणशीलता प्रमादानाम्! इति।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

( प्रथमाध्यायस्य द्वितीयपादः )

### विशेषणाच्च ।१।२।१२

यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्" "आत्मानं रथिनं विद्धी"तिमन्त्राभ्यां च तावेव च विशेषिताविति गुहां प्रविष्टौ जीवेश्वरौ न बुद्धिप्राणाविति सिद्धम्। अत्र प्रमाणं पैङ्गीरहस्यब्राह्मणं च सांख्यकल्पितं बुद्ध्यपरनाम्नः सत्त्वस्य भोक्तृत्वाभिधानात्, "अनश्नन्नन्यो अभि चाकशीती"ति ब्रह्मपरस्य शारीरत्वाभिधानाच्च ॥१२॥

### अन्तर उपपत्तेः ।१।२।१३

छान्दोग्ये दृश्यते "य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद् ब्रह्मे"ति। किमत्राक्षिस्थः पुरुषः पुरुषप्रतिबिम्ब, इन्द्रियाधिष्ठात्री देवता, जीवो, ब्रह्म वेति संशयः। तत्र दृश्यते इति सिद्धवन्निर्देशात् प्रतिबिम्ब एव वाच्यः, देवता वा काचिच् चक्षुरधिष्ठिता "रश्मिभिरेषोऽस्मिन् प्रतिष्ठित" इतिश्रुतेः, जीवो वा, तस्य दर्शनकाले चक्षुरधिष्ठितत्वात्, न ब्रह्म, तस्य महायतनस्य चक्षुरन्तःस्थत्वासम्भवादिति प्राप्ते आह— "अन्तर उपपत्तेरि"ति। चक्षुरन्तरः पुरुषो ब्रह्मैव। कुतः? उपपत्तेः। यतोऽमृतत्वाभयत्वे ब्रह्मण्येव निर्व्यूढमुपपद्येते। संयद्वामत्वादीनां गुणानामप्युपपत्तिस्तस्मिन्नेव भवति। तथा च श्रुतिः "एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभियन्ति" "एष उ एव वामनीरेष हि सर्वाणि वामानि नयति" "एष उ एव भामनी एष हि सर्वेषु लोकेषु भाती"ति। संयन्ति प्राप्नुवन्ति वामानि येन स संयद्वामः परमेश्वरः, सर्वाणि च वामानि शुभानि नयति प्रापयति लोकानिति वामनीः स एव, भामान् प्रकाशान् नयति प्रापयतीति भामनीः। "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते" "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति श्रुतिभ्याम् ॥१३॥

### स्थानादिव्यपदेशाच्च ।१।२।१४

सर्वव्यापिनोऽपि ब्रह्मणः स्थानादिव्यपदेशाच्च चक्षुरवस्थानं न विरुध्यते "यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तर" इतिश्रुतेः, घटाद्युपाधिभेदेन आकाशस्येव, व्योमवच्चेत्युक्तत्वात् ॥१४॥

### सुखविशिष्टाभिधानादेव च ।१।२।१५

किञ्च "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति श्रुतौ सुखविशिष्टं यद् ब्रह्म प्रक्रान्तं तस्यैवाक्षिणि उपास्यत्वेनाभिधानादेवाक्षिपुरुषो ब्रह्मैवेति बोध्यम्। या चान्तराऽग्निविद्योपदिष्टा सा च ब्रह्मविद्याङ्गमेव, "एषा सौम्य तेऽस्मद्विद्यात्मविद्या चे"ति ब्रह्मविद्याप्युपदिष्टैवेति। "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युक्त्वाऽक्षिपुरुषमुपदिदेशाचार्य इति पापासंश्लेषाभिधानादक्षिपुरुषो ब्रह्मैवेति गम्यते॥१५॥

### श्रुतोपनिषत्कगत्यभिधानाच्च ।१।२।१६

किञ्च श्रुतोपनिषत्कानां समधिगतब्रह्मतत्त्वानां या गतिरर्च्चिरादिमार्गेण साक्षात् परब्रह्मलोकप्राप्तिरूपानावृत्तिलक्षणा श्रुत्यन्तरे उपदिष्टा "तेऽर्च्चिषमभिसम्भवन्ति अर्च्चिषोऽहरि"त्यादि "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती"ति तामत्राक्षिपुरुषं श्रुतवतेऽभिदधाति "यदि च नार्च्चिषमेवाभिसम्भवन्ती"त्युपक्रम्या"दित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती"ति। तथाचाक्षिपुरुषो ब्रह्मैव नान्यः। अत्र वेदान्तप्रतिपाद्यात्मतत्त्वावबोधिनामर्च्चिरादिमार्गेणैव परब्रह्मप्राप्ति र्न तु प्रजापतिलोके स्थितिरिति श्रुतिसूत्रसिद्धान्तः। अमानवो मानुषभिन्नः कश्चिदप्राकृतः पुरुष इत्यर्थः ॥१६॥

### अनवस्थितेरसम्भवाच्च नेतरः ।१।२।१७

नात्र प्रतिबिम्बादिरितरोऽक्षिपुरुषो भवितुमर्हति। कुतः? अनवस्थितेः प्रतिबिम्बस्य नियमेन चक्षुष्यवस्थानाभावात् इन्द्रियाधिष्ठातुश्च रश्मिभिरवस्थानदर्शनात् न स्वरूपेण, जीवस्यापि हृदयस्थस्यैव ज्ञानगुणेनेन्द्रियान्तरेऽवस्थानम्, अमृतत्वादयश्च निरवच्छिन्ना ब्रह्मण्येव न प्रतिबिम्बादिषु युज्यन्ते इत्यक्षिपुरुषो ब्रह्मैवेति सिद्धान्तः ॥१७॥

### अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥१।२।१८

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत" इति श्रूयते। अत्र अधिदैवाधिलोकाधियज्ञादिषु श्रूयमाणोऽन्तर्यामी कश्चित् तपोयोगादिसमृद्धो जीव ईश्वरो वा? किं तावत् प्राप्तम्? जीव एव। न खल्वशरीरस्य सर्वव्यापिनो ब्रह्मणः पृथिव्यादिशरीरत्वं सम्भवति, जीवस्य त

सूक्ष्मस्य सशरीरस्य च तत्सम्भवात् स एवान्तर्यामीति प्राप्त आह—अन्तर्यामीति । अधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव भवितुं युक्तः । कुतः ? तद्धर्मव्यपदेशात्, तस्य परमात्मनो धर्मास्तद्धर्मास्तेषां व्यपदेशात् कथनात् । तथाहि सर्वेषामेव पृथिव्यादीनामन्तर्यमयितृत्वं परमात्मव्यतिरेकेण नोपपद्यते तस्यैव सर्वज्ञत्वात् सर्वशक्तित्वाच्च । सर्वेषामात्मत्वं च ब्रह्मण एव युज्यते अंशित्वात्, अमृतत्वं च स्वतस्तस्यैवेत्यन्तर्यामी परमात्मैवेति सिद्धम् । व्यापिनोऽपि तस्य घटादिवदन्तरत्वं न विरुध्यते, यथा जीवस्य तत्तद्देहनियामकस्य तत्तच्छरीरत्वं तथा पृथिव्यादिसर्वनियामकस्य ब्रह्मणः पृथिव्यादिशरीरत्वमुपपद्यत इति ॥१८॥

---

# भरतमेलनम्

[ श्री विश्वेश्वर विद्याभूषणेन

श्री ध्यानेशनारायण शास्त्रिणा च विरचितम् ]

भरतः । ( स्वगतम् ) एष दाशरथिर्वीरो दृढसत्त्व इवाचलः ।
स्नेहानुशासनं तस्य कथं विलङ्घ्यते मया ॥

( प्रकाशम् ) राघव, गृहीतं तवानुशासनम् ।

रामः । ( सहर्षम् ) विजयस्व वीर ! देवास्त्वां रक्षन्तु ।

भरतः । आर्य, दीयतां त्वच्चरणस्पर्शपरिपूतं पादुकायुगलम् । रत्नसिंहासने तदेव संस्थाप्य साधयिष्यामि राजकार्यं तवैव प्रतिनिधिरूपेण ।

रामः । ( भरताय पादुकायुगलं ददाति । )—
हे वीर धन्योऽसि गुणैर्वरेण्यैरुदारचेतो रघुवंशदीप ।
त्वत्कीर्तिमाल्यं विमलं वहन्ती जाता सुधन्या वसुधा प्रकामम् ॥

किञ्च,—संरक्ष तात ! कैकेयीं मातरं गुणमालिनीम् ।
रामभद्रार्चिता सा हि, मा कार्षीस्तदनादरम् ॥

भरतः । देव, चतुर्दशैव वर्षाणि यापयामि प्रतीक्षया ।
[illegible]ां न पश्येयं, प्रवेक्ष्यामि हुताशनम् ॥

( राम उपसृत्य वशिष्ठादीन् मातृगणञ्च वन्दते, आलिङ्गति च भरतम् । )

भरतः ( गायन् प्रतिष्ठते, ) रामाय रामचन्द्राय रामभद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

वशिष्ठः। राघव, अतः परं किमुपकरोमि ? तथापीदमस्तु—

भवन्तु सन्तः सुखशान्तियुक्ता नृपाः प्रजापालन-सौख्यधन्याः।
निरामयाः सन्तु जनाः सुयज्ञैर्देवाश्च तृप्ता वितरन्तु भद्रम्॥

( सर्वेऽयोध्यां प्रतिष्ठन्ते। )

रामः। सायोध्या, सा स्वर्णकिरीटिनी हर्म्यमालिन्ययोध्या॥　　( उटजं प्रविशति। )

वनलक्ष्मीः ( प्रविश्य गायति )—

जय रघुकुलभूषण !
नवदूर्वादल-श्यामलतनो सत्यव्रतपालन
दाशरथे त्वं दुःखहारी
वनविहारी मनोहारी
नमो राघव प्रियतम नमो भक्तहृदयरञ्जन।
जय तमोहर चिरसुन्दर, अखिल-दुःख-भञ्जन॥

यवनिकापतनम्

---

# वेदेष्वलङ्कारः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ग्रीसीयालङ्कारशास्त्रे Aposiopesis समाख्यः कश्चनालङ्कारो वर्तते। कथनावसरे मध्येवाक्यं विरमणं वाक्यान्तरारम्भो वास्य जीवातुः। संस्कृते आक्षेपालङ्कारः प्रायेणात्रैवान्तर्भवति, अध्याहारोऽपि क्वचिदस्य विषयो भवति। ऋग्वेदे श्रूयते [१।५४।१]—

मा नो अस्मिन् मघवन् पृत्स्वंहसि न हि ते अन्तः शवसः परीणशे।
अक्रन्दयो नद्यो रोरुवद्वना कथा न क्षोणी भियसा समारत॥ इति

मा अस्मान् अस्मिन् संग्रामेषु जायमान उपद्रवे *त्याक्षीः*। नहि ते बलस्य पर्यन्तः केनचिदपि व्याप्तुं शक्यः। स त्वं नदीः उदकानि क्रन्दयसि रोरूयमाणः। कथं न पृथिव्यस्तिस्रस्तव भयेन सङ्गच्छन्ते। भयाद्धीन्द्रस्य भूमयो विधृतास्तिष्ठन्ति। इति वेङ्कटः।

मो षु ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।
महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः॥ १।१७७।१२ इति।

सु इत्यनर्थकः। मा हिंसीः यद्वा संश्लिष्टान् मा कार्षीः अत्र एषु पृत्सु संग्रामेषु देवैः सह। यद्वा देवैर्मरुद्भिः सहितः अस्ति हि। स्मेत्यनर्थकः। ते तव। हे शुष्मिन् बलवन् अवयाः पृथग्भागः। महः महतः चिद् यस्य तव मीळ्हुषः वर्षयितुः यव्या हविष्मतो मरुतः गीः वन्दते स्तौति।

काव्यालङ्कारसूत्रवृत्तावुक्तम्—लिङ्गाध्याहारौ...अध्याहारो यथा—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनी जलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

इति । अत्र धाक्षीत्, भाङ्क्षीत्, छैत्सीत्, भैत्सीत् इत्येषामध्याहारो न दुष्यति ।

अपरोऽपि प्रसिद्धः श्लोकः—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्च नं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

इति । अत्र वृश्चति सिञ्चति अर्चतीति क्रियाणामध्याहारो बोध्यः ।

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

अध्यापकः । वत्स नरेन्द्र ! fox-शब्दस्य बहुवचने किं वा रूपं स्यात् ?

नरेन्द्रः । आर्य, Vixen ।

अध्यापकः । सम्यक् । कथं त्वं जानासि ?

नरेन्द्र । आर्य, Ox-शब्दस्य बहुवचने Oxen इति रूपं भवति, अत एव fox-शब्दस्य बहुवचने en प्रत्ययान्तं vixen पदं निष्पद्यते ।

व्रजेन्द्रः । आर्य fox-शब्दस्य स्त्रियां प्राचीनाङ्ग्लभाषायां fyxen भवति, ततश्चाङ्ग्लभूमेर्दक्षिणदिग्भागप्रचलितरीत्या f कारस्य घोषवत्त्वेन v कारत्वं सञ्जातम् । अतिप्राचीनशर्मण्यभाषागतः in-प्रत्ययः प्राचीनाङ्ग्लभाषायाम् en-आकारेणोपलभ्यते । god शब्दस्य स्त्रियामपि gyden-शब्दः सन्दृश्यते ।

अध्यापकः । अरे किं वा प्रलपसि ? प्रथमतस्तावदुच्यताम्—Ox शब्दस्य बहुवचने Oxen इति पदं भवति वा न वा ?

व्रजेन्द्रः । आर्य ! भवत्येव ।

अध्यापकः । तर्हि fox-शब्दादपि vixen-भवत्येव । प्रत्यक्षे परिपन्थिनि कल्पना न साधुर्भवति ।

व्रजेन्द्रः । आर्य, Vixen-शब्दस्य स्त्रियां प्रयोग उपलभ्यते । कलहशीला नारी vixen इत्युच्यते ।

अध्यापकः । अरे, तस्याः कलहशीलत्वान्नरकल्पत्वात् तत्र पुंशब्दप्रयोगः । गौरवे च बहुवचनम्, अन्यथा वक्तुर्न निस्तारः ।

श्रीः

# काञ्चनकुञ्चिकम्

( प्रकरणम् )

## प्रस्तावना

( स्वरसंयोगेन गीयते । )

वन्दे स्मरमविनाशम् ।

यौवन-चञ्चल –तरुण-मनस्तल-मञ्च-विपञ्चित-लासम् ।।

मृदुल-कुसुम-कृत-दुःसह-चापं

प्रिय-जन-हेलन-दुर्वह-तापं

पुनरपि मेलन-शमित-विलापं

निर्दय-खेलन-हासम् ।।

जैत्र-वृषासन-नेत्र-हुताशन-

कवलितमपि तत्रासम् ।

कलरुतसम्बल-कोकिल-दूतं

मञ्जुल-मधुकर-गुञ्जन-हूतं

जगदुन्मीलन-कारणभूतं

स्वजनीकृतमधुमासम् ।।

( ततः प्रविशतः सूत्रधारमारिषौ । )

( नान्द्यन्ते ) सूत्र० । मारिष ! समयोचितं किञ्चित् प्रकरणमभिनेतव्यमिति तावत् सामाजिकानामाशयः ।

शुनकान्वयसम्भूत-श्रीविष्णुपदशर्मणा ।

कृतं प्रकरणं किञ्चिन्नाम्ना काञ्चन-कुञ्चिकम् ।।१।।

देवभाषाश्रयं यच्च प्रभूतकौतुकावहम् ।

तदेव विदुषां प्रीत्यै भवद्भिरभिनीयताम् ।।२।।

मारिष । यथाऽऽज्ञापयत्यार्थः । परन्तु प्रेक्षागृहमधुनापि जनसमागमरहितम् ।

सूत्र० । ( समन्ताद्विलोक्य ) आश्चर्यम् ! अद्य तावद्वसन्तोत्सवदिवसः । तत् किमिति निरुत्साहैरवस्थीयते नगरवासिभिः ? ऋतुराजसंवर्धनायां किमिति वा नोत्तिष्ठन्ते पुरविलासिनः । ( उच्चैःस्वरेण ) भो भो नागरिकाः !

योषाभिः शङ्खनादैः प्रतिरवमुखरं साधनीयं विहायो

युष्माभिर्माल्यबन्धैः सुरभिसुमनसां भूष्यतां वेश्मजातम् ।

पुण्याम्भःपूर्णकुम्भै र्दधतु वररुचिं देहलीप्रान्तदेशाः

सम्प्राप्तोऽयं वसन्तोत्सवतिथिरतिथिः सादरं वन्दनीयः ॥४॥

अहो ! न केनापि प्रतिवचनमपि दीयते । तन्मारिष ! त्वमेव गत्वा कतिपयान् नागरिकानत्र समानय ।

मारिष । यथाऽऽज्ञापयत्यार्यः । ( मारिषो निष्क्रान्तः । )

सूत्र० । ( सविषादम् ) एवं निःस्पृहेषु पौरेषु सरलगीर्वाणवाणीप्रवर्त्तनव्रतानां नः सर्वं एव प्रयत्ना भस्मचये घृतक्षेपा इव विफला नाम भवेयुः । ( निःश्वस्य ) अहो नु खलु भोः !

भारतीयवचसां प्रसूरियं भव्यभावविभवैर्महीयसी ।

सर्वपूर्वविदुषां शिरःस्थिता खर्वगर्वमधुनाऽवसीदति ॥४॥

( ततः प्रविशन्ति मारिषेण सह विरूपाक्षप्रमुखाः केचन नागरिकाः । )

विरू० । भद्र ! कथमाहूता वयम् ? कथं वा बालेय इव विरसकण्ठस्वरेण कर्णपटहं विदारयति भवान् ?

सूत्र० । ( सविनयम् ) शृणुत भद्रमुखाः ! वसन्तोत्सवतिथिरियमिति किं विस्मृतं सर्वैः । प्रत्यासन्न एव नाट्याभिनयक्षणः ।

विरू० । ततः किम् ? नास्ति नस्तद्दर्शने कोऽप्यभिनिवेशः ।

सूत्र० । भवतामुपस्थितिरपि कुशीलवानां प्रोत्साहकारणं भवेत् ।

विरू० । किमत्र चित्ताकर्षकमस्ति ?

सूत्र० । दर्शनेनैव ज्ञातं स्यात् ।

विरू० । को नाम द्रक्ष्यति ? शङ्के मृतसंस्कृतभाषया निबन्धं रचयता नाट्यकारेण शवशरीरमुद्वर्तितम् ।

सूत्र० । मा मैवम् । अमरेयं देवभाषा स्वकीयेन महिम्ना च चिरशोभमाना । ततो गुणज्ञैः प्रतीच्यैरपि सबहुमानं समादृता । नैनां लघयितुमर्हसि ।

विरू० । ननु पृच्छामि किमेतदनुशीलनेन बुभुक्षाक्लिष्टं शरीरं समुचितां पुष्टिं लभेत ?

सूत्र० । शरीरपुष्टे र्बहवो नाम पन्थानः सन्ति । सृष्टेः सारभूतस्य मानुषस्य शरीरमेवं न सर्वस्वम् । शरीरादपि मनो गरीयः । एतदनुशीलनेन तत्तृप्तिरवश्यमेव जायेत ।

विरू० । ( विहस्य ) बालिशस्योक्तिरियम् । प्रनष्टे शरीरे क्व तावन्मनसः स्थितिः ? निराहारस्य मन एव नास्ति, किं पुनः कौतुकासक्तिः ?

सूत्र० । अलमीदृशैर्निरर्थकैः प्रलापैः ।

विरू०। (कुप्यन्) किं ब्रवीषि? प्रलपितं मयेति? किमहमुन्मत्तो विकारग्रस्तो वा? (बद्धमुष्टिं हस्तं प्रसार्य) भद्र! संयतवाचा भवितव्यं भवता नो चेन्मुष्ट्याघातेन चूर्णीकृतमस्तकः पितुरपि नाम विस्मरिष्यसि।

अन्ये नागरिकाः। किं विलम्बेन? अधुनैवासौ जाल्मः शिक्षयितव्यः। स्पर्धास्य सीमानमतिक्रान्ता।

(सर्वे विनिबद्धपरिकराः सूत्रधारमभिधावन्ति।)

मारि०। (ससंभ्रममन्तरा तिष्ठन्) आः किं क्रियते? प्रसीदत भद्रमुखाः प्रसीदत। आर्येण न किमपि दुर्वचनं व्याहृतम्।

विरू०। (विकृतस्वरेण) तत् किं नाम व्याहृतम्? भाषाज्ञानं ममाप्यस्ति किञ्चित्।

सूत्र०। स्वतन्त्रेऽस्मिन् भारते खाद्याभावस्य न कोऽप्यवकाश इत्येव मे वचन-तात्पर्यम्। देशोऽयं द्रुतमेव समृद्धरतिभूमिं गच्छति।

विरू०। (विकृतस्वरेण) अहो समृद्धिरेवेयम्!

मज्जन्ति सर्वेऽसुखसिन्धुगर्भे धनार्जने शीर्णमनोरथाश्च।
जीर्णाश्च रोगैः प्रतिकारशून्यैस्तिष्ठन्ति मृत्युं प्रतिपालयन्तः ॥५॥

सूत्र०। मन्ये चिरं वैदेशिकदास्ये स्थितानामेषां स्वातन्त्र्यमुपोषितानां गुरुभोजनमिव साम्प्रतमहितायैव कल्पते।

विरू०। यदि पूर्ववदन्नवस्त्राद्यभावजनितं दुःखं जनानभिभवति, को नाम प्रभेदः स्वातन्त्र्य-पारतन्त्र्ययोः?

सूत्र०। महान् खलु प्रभेदः।

भवजलधिजलान्तः सौख्यरत्नान्यभीप्सो-
र्भवति मरणहेतुः पारतन्त्र्यग्राहनक्रः।
कवचमिव प्रशस्यं बिभ्रतः स्वाधिपत्यं
व्रजति सफलतां सा श्रेयसे सुप्रचेष्टा ॥६॥

विरू०। एवं चेत्, कथमस्माकं दुर्गतिं पश्यन्तः शृगालकुक्कुरा अपि परिदेवयन्ति?

सूत्र०। किमेकयैव निशया सम्यक् परिवर्तनमिष्यते? न तत् सम्भवति। शनैः पन्थाः शनैः कन्था शनैः पर्वतलङ्घनम्। सहिष्णुताऽवलम्ब्यताम्।

विरू०। सधैर्यं प्रतीक्षमाणानां नो दश वर्षाणि व्यतीतानि। मन्ये देहान्तेनैव दशान्तरप्राप्तिर्जायेत। आगच्छत भ्रातरः! असारं खल्वस्य वचनम्। नास्माभिरत्र स्थातव्यम्। जनशून्य एव रङ्गालये रङ्गोऽयं प्रवर्तताम्। (सर्वे नागरिका निष्क्रान्ताः।)

मारि०। आर्य ! प्रकृतविषये ममापि संशयो नापगच्छति। स्वातन्त्र्यस्य किमपि सुफलं नाद्याप्युपलभ्यते नाम। एकेनैव दृष्टान्तेन विवक्षितं मे समर्थितं स्यात्।

गेहे गेहे तरुणा लब्धविद्या कर्माभावान्नितरां मोहवन्तः।
दुःखान्मुक्तेरितरं मुख्यमार्गं न प्रेक्षन्ते स्वकृताज्जीवनान्तात् ॥७॥

सूत्र०। अत्र तेषामुद्यमाभाव एव निदानम्।

इष्टैकदृष्टिरफलामवलोक्य चेष्टां
भूयःश्रितोऽपरमुपायमुपैति लक्ष्मीम्।
दास्यं विना शरणमस्ति न यस्य किञ्चि-
न्निःसंशयं स सुकुमार इवोपहास्यः ॥८॥

मारि०। आर्य ! सकृत् पुरतो विलोक्यताम्। कश्चिदपरिचितो महानुभावस्तरुणो मूर्तिमानिव संरम्भस्त्वरितमित एवाभिगच्छति।

सूत्र०। (पुरतो विलोकयन्) मारिष ! अयमेव सुकुमारः। शङ्के मदुक्तिरनेनाकर्णिता। तन्नात्रावस्थानमुपपद्यते। (निष्क्रान्तावुभौ।)

---

## प्रथमोऽङ्कः।

(वधूहट्टाख्यो राजपथः। प्रविशति क्षुभितः सुकुमारः।)

सुकु०। किमुक्तं भवता—"इष्टैकदृष्टिरफलामवलोक्य चेष्टां भूयः श्रितोऽपरमुपायमुपैति लक्ष्मीम्" इति ? अश्रुत्वा मदुत्तरं कथमन्तर्हितो भवसि ? किं निरुद्यमोऽहम्। कर्मार्थं स्वर्गमर्तपातालानि परिभ्राम्यतो मे श्रीचरणयुगलमुच्छूनं जातम्। तथाऽपि मनोरथसिद्धिर्मे दिगन्तरेखेव दूरमपसरति। विद्यानुरूपकार्यमप्राप्य श्रितमपि मया वृत्त्यन्तरम्। छात्रत्रयस्य गृहाध्यापनकर्मणि प्रवृत्तोऽहम्। तेन च कथमपि हतजीवितं धारयामि। लक्ष्म्यास्तु केशाग्रमपि न दृश्यते। ईदृशीं मे परिणतिं पश्यन्तौ त्रिदिवगतौ मे पितरौ स्वर्गसुखमपि विषवद् विरसं मन्येते।

(चिन्ताभारक्लिष्टो द्वित्राणि पदान्युपसर्पति। ततः प्रविशति प्रशान्तः सुकुमारं च पश्यंस्तत्रैव तिष्ठति। अन्यमनस्कतया सुकुमारस्तम् अपश्यन्निवातिक्रामन्नास्ते। प्रशान्तस्तमाश्लिष्यति।)

प्रशा०। सखे ! तिष्ठ तिष्ठ। किं तेऽपराद्धं मया यत् पार्श्वस्थमपि मामित्थमवगणयसि ?

सुकु०। (चकितः) अये प्रशान्त ! सत्यमेव न त्वं मया दृष्टः।

प्रशा०। (जिह्वातालुसंयोगेन शब्दं कृत्वा) अहह ! अहह ! शोचनीयां दशां

प्राप्तोऽसि। दृष्टिस्ते सर्वथापगता। अधुनैव प्रतीकारो विधेयः। ( चर्म-कोषादुपनेत्रं गृहीत्वा सुकुमारस्य नेत्रयोर्लगयति। )

सुकु०। ( उपनेत्रं प्रत्यर्पयन् ) आः किं करोषि? उपनेत्रेण तत्रैवान्धस्य प्रयोजनम्। उन्मनायमानस्येन्द्रियाणि स्वस्वकर्मसु नैव प्रवर्त्तन्ते। अत एव मया त्वं नेक्षितः।

प्रशा०। कथमिदं वैमनस्यम्? कथं वास्माकं सायाह्नगोष्ठी कनिष्ठभ्रातृवधूरिव दूरतः परिह्रियते?

सुकु०। किं तत्कारणमविदितं ते? त्वं तावद्गोष्ठीं चिन्तयसि। ( स्वमुदरं स्पृशन् ) कुक्षिभरणमन्तरेण नास्ति मे चिन्तान्तरम्।

प्रशा०। ( अनुतप्तः ) सखे! क्षन्तव्योऽहम्। जानाम्येवाहं

क्षुधावर्धितपित्तेन यस्य तिक्तीकृतं मनः।
न तस्य निर्वृतिः क्वापि गोष्ठी-निष्ठा कुतो भवेत् ॥९॥

तथापि दुःखातुरचित्तविनोदनाय गृहकोणात्सुहृत्साज्ञिध्यमेव वरम्। मन्ये कर्मान्वेषणकर्मव्यापृततया निरवसरस्त्वमधुना।

सुकु०। यथार्थमनुमितं त्वया।

प्रका०। कच्चित् साफल्योन्मुखस्ते प्रयासः?

सुकु०। महदानुकूल्यमन्तरेण कुतः सफलता?

प्रशा०। सत्यम्।

भ्राता स्त्रिया वा श्वशुरो न यस्य स्वमातुलो वा स्वपिता सखा वा।
प्रभाववांस्तस्य विधिर्विरोधी किं विद्यया किं नु मनीषया वा ॥१०॥

किमेतावतापि ते नेत्रं नोन्मीलति? हितं चेदिष्यते क्वचिद्वाणिज्यादिस्वाधीन-वृत्तौ मनो निधीयताम्।

सुकु०। अलमलमुपहासेन। निर्धनस्य वाणिज्यं खञ्जस्य गिरिचूडारोहणमिव मनसैव साधनीयम्।

प्रशा०। सकृदुच्यतां कियता धनेन ते प्रयोजनमिति। अहमेव तद्दास्यामि।

सुकु०। ( विहस्य ) पश्यामि चिकित्सकवृत्त्या ते धनलालसा नोपशमं गच्छतीति। तत उत्तमर्णवृत्तयेऽपि स्पृहयसि।

प्रका०। ( साभिमानम् ) सुकुमार! कथंकारमीदृक् कथ्यते त्वया। धनविनियोगेन कुसीदमाददानो जन एवोत्तमर्णनाम्नाऽभिधीयते। नाहं त्वत्तः कुसीदं गृह्णीयाम्।

सुकु०। तत् किं वदान्य इत्यात्मानं प्रख्यापयितुमीहसे?

प्रशा०। शान्तं पापम्! न मे तादृशी काऽपि प्रवृत्तिः। सौहार्दमेव मां प्रवर्तयति।

सुकु०। त्वत्तो धनं यदैव गृह्येत, तदैव सौहार्दमुन्मूलितं स्यात्। अर्थसम्बन्ध एव सर्वानर्थनिदानम्।

प्रशा०। किंकर्तव्यताविमूढोऽहं सञ्जातः। अहो कष्टम्! प्रयोजनाधिकं मे वित्तम्। त्वं तु धनाभावेन सीदसि। गभीरमावयोः सौहार्दम्। तथापि न मया कोऽप्युपकारः साधयितुं पार्यते। ( निःश्वस्य ) अथवा दैवमेवात्र प्रभवति।

सुकु०। सखे! अलं विषादेन। अस्त्येव किञ्चित् कार्यं यत्र ते साहायकं समपेक्ष्यते मया। अपि नाम सुरञ्जनवयनयन्त्रालयपतिर्धुरन्धरस्त्वया कदाऽपि चिकित्सितस्तत्सम्पृक्तो वा कश्चित्?

प्रशा०। किमित्येवं पृच्छसि?

सुकु०। तत्र यन्त्रालये कोऽपि रासायनिको नियोज्यः। मयाऽप्यावेदनपत्रं प्रेषितम्। त्वया कृतपरिचयश्चेदसौ, त्वत्समर्थनेन पदं तत् सुप्रापं स्यात्।

प्रशा०। नासौ मया चिकित्सितः। ततः किम्? परिचितोऽसौ भवतु मा वा, त्वया सहावश्यमेव तत्र गमिष्यामि। वाक्पटुता ते नास्त्येव, तदभावो मयैव पूरणीयः। किं विलम्बेन? अधुनैवासौ द्रष्टव्यः। शुभस्य शीघ्रम्। एह्येहि। ( सुकुमारं कफोणौ गृहीत्वाकर्षति। )

सुकु०। तिष्ठ तिष्ठ। सप्ताहान्तेऽसौ द्रष्टव्य इति समयः कृतः।

प्रशा०। ( हताश इव ) श्रेयांसि बहुविघ्नानि। भवतु। साम्प्रतमेहि मे भैषज्य-भवनम्। ( उभौ निष्क्रान्तौ। )

---

## द्वितीयोऽङ्कः।

विश्वनिवासस्थः करणप्रकोष्ठः ( office room )। चिरञ्जीवः साभिनिवेशं वैषयिक-कर्मणि व्यापृतो दृश्यते। प्रविशति राष्ट्रीयः पत्रवाहः ( postal peon ), राशीकृतानि पत्राणि च ददाति।

चिर०। अहो पत्राणां राशयोऽद्य समागताः! किमत्र कारणम्?

पत्र०। पत्रान्तरमप्यस्ति। इदन्तु समधिकशुल्कप्रदानेन संरक्षितम् ( registered and insured )। स्वीकृतिपत्रं नामाङ्कितं कृत्वा निर्दिष्टमुद्रादशकप्रदानेन ग्रहीतव्यम्।

चिर०। दीयताम्। ( स्वीकृतिपत्रं स्वनामाङ्कितं कृत्वा प्रत्यर्पयति प्रकृतपत्रं च गृहीत्वा आवरणादुन्मोच्य वाचयति। ) वार्तावहकार्यालयात् प्राप्तमिदम्।

विज्ञप्तिप्रकाशनार्थं मुद्रादशकं देयमित्येव निर्दिष्टमत्र। मुद्रितविज्ञापनस्य खण्डितांशोऽपि प्रेरितः। (वाचयन्) विचित्रमिदं विज्ञापनम्। नैतन्मया मुद्रणार्थं प्रेषितं स्मर्यते। भवतु, यद्देयं तद्दीयते। ततो यथायथं तत्त्वमनुधावनीयम्। (मुद्रादशकं ददाति। पत्रवाहः प्रणम्य निष्क्रामति। ततः प्रविशति गर्जनसिंहः।)

गर्ज०। अय्य! कोऽवि वुड्ढो बम्हणो दंसणत्थी दुआरम्मि चिट्ठदि। (आर्य! कश्चिद् वृद्धो ब्राह्मणो दर्शनार्थी द्वारि तिष्ठति।)

चिर०। ब्राह्मण इति? तूर्णं प्रवेश्यताम्।

(ततः प्रविशति यष्टिहस्तः पङ्ग तास्खलितगति जनार्दनठक्कुरः।)

जना०। राधे! माधव! राधे! माधव!

चिर०। अये जनार्दनठक्कुर! नमस्ते। आसनं गृह्यताम्।

जना०। (सोपवीतं करतलं प्रसारयन्) जयोऽस्तु। धनेन पुत्रेण च लक्ष्मीवान् भूयाः। (आसनं गृह्णाति।)

चिर०। (विहस्य) आशीरियं मुधैव भवता प्रयुक्ता। अद्याप्यकृतदारोऽहम्। अतो नास्त्येव मे पुत्रप्राप्तिसम्भावना। पुत्रहीनस्य धनेन किं प्रयोजनम्?

जना०। पुत्रार्थं दारपरिग्रहोऽवश्यमेव करणीयः।

पुन्नाम्नि नरके घोरे मज्जतामात्मजं विना।
को नाम प्रभवेत् सद्यः परित्राणाय देहिनाम् ॥११॥

चिर०। यद्भावि तद् भवतु। विवाहयोग्यं वयश्चिरं समतिक्रान्तोऽहम्। अयं मे षष्टितमः संवत्सरश्चलति।

जना०। समाश्वसिहि। समाश्वसिहि। अद्यापि तरुण एवासि। भवतोऽनुमतिश्चेन्मयैव जनार्दनशर्मणा त्वदर्थं रूपयौवनवती कन्याऽचिरेणैव संप्राप्या। अपि नाम भवता न ज्ञायते यच्चन्दननगरवास्तव्यस्य भूस्वामिनः प्रतापनारायणस्य तिलोत्तमासमानया कयाचित् कन्यया परिणयो मयैव संघटित आसीत्। तदाऽस्य वयः सप्ततिमतिक्रान्तम्।

चिर०। (सस्मितम्) शक्तिमान् खलु त्वम्। तथापि वृद्धे वयसि कृतोद्वाहस्य नास्त्येव पुत्रलाभसम्भावना।

जना०। नैवं वक्तव्यम्। अन्येद्युस्तं प्रतापनारायणं पुनर्द्रष्टुकामश्चन्दननगरं गतोऽहम्। तत्र कञ्चिदर्भकमङ्कम् आरोप्य लालयन्तं तमपश्यम्। किं शिशुरसौ ज्ञातिपुत्र एवेति यावदहं मनसि तर्कयन्नासं तावत्तेनैव संशयो मे

निराकृतः। "ब्रह्मन् भवत्प्रसादेनैव पुत्रमुखमवलोकितं मये"ति भाषमाणेन तेन पञ्चाशता रजतमुद्राभिः सार्धं पट्टवस्त्रयुगलमुपायनीकृतं मे।

चिर०। असाध्यं खलु साधितं त्वया। तथापि न मामित्थं प्रलोभयितुमर्हसि। तिष्ठतु तावदयं प्रसङ्गः। मन्ये त्वदागमने कारणान्तरमस्ति।

जना०। भवतैवाहं समाहूतः।

चिर०। मया? किमिदमुपन्यस्यते?

जना०। परुन्मया दृष्टस्त्वमस्मिन्नेव प्रकोष्ठे। किमेतद्विस्मृतं भवता?

चिर०। आं स्मरामि। विद्युत्प्रतिमाया विवाहसंघटनाय तदा त्वमागतः।

जना०। "कन्या साम्प्रतमधीयानास्ते। वत्सरान्ते विद्यार्जनसमाप्तौ तस्या विवाहश्चिन्तनीय" इत्यहमुक्तो भवता। अतोऽहमागतः।

चिर०। भवतु। कन्याया मतमपि ग्रहणीयम्। (दूरश्रुतियन्त्रेण विद्युत्प्रतिमया संलपति।) ह्यालो! ह्यालो! चिरञ्जीवोऽहं ब्रवीमि। वत्से सकृदत्रागमनक्लेशः स्वीकर्तव्यः। गुरु प्रयोजनमस्ति। नो चेदहमेवागमिष्यम्। (दूरश्रुतियन्त्रं त्यजति। क्षणान्तरे प्रविशतो विद्युत्प्रतिमा कुन्दकलिका च।)

विद्यु०। ज्येष्ठतात! किमर्थमाहूता वयम्?

चिर०। (विज्ञापनस्य खण्डितांशं प्रदाय) वत्से! वार्तावहकार्यालयादिदमद्य प्राप्तम्। नेदृशी काऽपि विज्ञप्तिर्मया मुद्रणार्थं तत्र प्रेषिता। किमेतदधिकृत्य किमपि ते विदितमस्ति? (विद्युत्प्रतिमा विज्ञप्तिं स्वगतं वाचयन्ती सलज्जं कुन्दकलिकाहस्ते स्थापयति।)

कुन्द०। (पश्यन्ती सस्मितम्) ज्येष्ठतात! इयं लज्जया प्रतिवक्तुं नोत्सहते। तदहमेव भणामि। विज्ञापनमिदं मयैव भवन्नाम्ना मुद्रणार्थं प्रेषितम्।

चिर०। कौतुकप्रियस्य कस्यापि कृतिरियमिति तु मयाऽनुमितम् आसीत्। कथमिदं न मे मुद्रणात् पूर्वमेव प्रदर्शितम्?

कुन्द०। तदपि कथयामि। समापितविद्यायाः प्रतिमाया विवाहाय यतितव्यम् इत्येव भवता पूर्वमुक्तम्। ततोऽधुना तदनुष्ठानं कथमपि न निरोद्धुं शक्यमिति स्पष्टमेव प्रतिभाति। परन्तु पूर्वमेव सङ्कल्पितमनया कविमन्तरेण नान्यः कोऽपि पतिर्वरणीय इति। ततो वार्तापत्रे प्रकाशिता विज्ञप्तिरेव मनोरथसिद्धेः प्रकृष्टः पन्था इत्यस्माभिरमन्यत। मुद्रणादनन्तरं भवान् द्रक्ष्यत्येवेति मत्वा त्रपया पूर्वं न प्रदर्शितमिदम्।

चिर०। (सस्मितम्) अत एवाद्य पत्राणां बाहुल्यम्। मन्ये विवाहार्थिनां प्रार्थना-

पत्राण्येतानि। अधुना यानि तत्संश्लिष्टानि प्रतीयन्ते तानि युवाभ्यां गृह्यन्ताम्।

कुन्द०। (पत्राणि परीक्षमाणा) आवरणीदीर्घतयाऽनुमीयते यदेतान्येव प्रार्थना-पत्राणीति। (तानि गृह्णाति।) ज्येष्ठतात! कोऽयं ब्राह्मणः?

जना०। विवाहघटको जनार्दनठक्कुरोऽहम्। (विद्युत्प्रतिमां प्रति) यथाऽहं पश्यामि कविमन्तरेण न कोऽपि ते सम्मतः स्यात्। कार्यभारमिमं मयि विन्यस्य निश्चिन्ता भव। बहवो नाम कुलशीलविद्योज्ज्वला मम परिचिताः सन्ति। तेष्वन्यतमस्त्वया वरणीयः। (विद्युत्प्रतिमा निरुत्तरं स्मयते।)

कुन्द०। सर्वाण्येव प्रार्थनापत्राणि न्यायतो विचारमर्हन्ति।

जना०। मयि जनार्दनशर्मणि जाज्वल्यमाने किं प्रार्थनापत्रैः?

कुन्द०। विज्ञप्तिः पूर्वमेव प्रकाशिता ततस्तदनुसारेणैव प्रवर्तितव्यं नान्यथा। एहि प्रतिमे! (उभे निष्क्रान्ते।)

जना०। अहो मतिवैकल्यम्! किमयं कामचारो भवताप्यनुमोद्यते?

चिरं०। किं मे मतेनामतेन वा? कालस्यैव प्रभावोऽयम्।

विपर्यासं यातं समयगुणतो विश्वमखिलं
प्रथा म्लेच्छोपज्ञं प्रभवति महामोहजननी।
गता धर्मप्रीतिर्जयति जगति स्वार्थमननं
रवेरन्तर्धाने घनमिव तमोऽव्याहतगति ॥१२॥

जना०। तथाप्ययं म्लेच्छाचारप्रवाहः साधुभिः सर्वथा प्रतिरोद्धव्यः।

चिरं०। व्यक्तिस्वातन्त्र्यपक्षपातिनि कलियुगेऽस्मिन् को नाम कालस्रोतः प्रतिरोद्धुं प्रभवेत्? परिस्थितिरपि तथा प्रतिकूला जाता यथा पूर्वपथानुसरणमपि दुष्करम्।

त्यक्तं विप्रैः पयसि सरितां हन्त यज्ञोपवीतं
निर्बोधानां प्रलपितमिवोपेक्ष्यते शास्त्रजातम्।
वाद्यं नाद्य श्रवणमयते पुण्यनीराजनाया
देवाः सेवाविरहविधुरा धूलिपुञ्जेषु लीनाः ॥१३॥

अपि च

नासारन्ध्रं विशति न पुनर्होमजो हव्यगन्धो
यन्त्रोद्भ्रान्तो रचयति रुजां नेत्रयोरुग्रधूमः।
श्रोत्रानन्दं न च वितनुते स्तोत्रमुद्गीयमानं
भीतिं गीतिर्जनयति भृशं कृत्रिमा कर्कशा च ॥१४॥

जना० । सत्यमुक्तं त्वया । तथापि स्त्रियो विपथगमनात् सयत्नं निवारणीयाः ।

चेर० । अपि नाम कुम्भकर्ण इव चिरप्रसुप्तस्त्वम् । प्रगतिशालिन्यः स्त्रियः पुरुषानपि ह्रेपयन्ति ।

लाक्षारक्तं चरणयुगलं निह्नुतं पादुकान्त-
र्धत्ते लक्ष्मीं स्थलकमलयोर्नाधुना रूपवत्याः ।
लज्जाबन्धच्युतकुलवधर्धौतमासाद्य सौरं
कान्तिभ्रष्टा भवति सहसा च्छिन्नमूलेव वल्ली ॥१५॥

अपि च ।

वोढुं शक्ता तनुतरतनुर्नान्नपूर्णाऽन्नपात्रं
रक्षासङ्गा त्यजति भवनं सायमाभूषिताङ्गी ।
रोरुद्यन्ते तृषितशिशवः स्तन्यमप्राप्य मातु-
र्मूकः शङ्खो ज्वलति तुलसीवेदिकायां न दीपः ॥१६॥

जना० । प्रसङ्गेनानेन कलुषितमिवात्मानं मन्ये । श्वः प्रातरेव गङ्गास्नानेन देहमनसोः शुद्धिः सम्पादनीया ।

चेर० । क्व तावदसौ गङ्गा ?

बिभ्राणासौ सिकतिलमुरः सद्मभिर्बद्धपार्श्वा
पोतैर्नित्यं व्यथितमथिता घूर्णमानैः स्वचक्रैः ।
छिन्नस्रोता निगडितवपुः सेतुभिर्हेतुभूतै-
र्नीता शोच्यां परिणतिमहो जाह्नवी लोकपूज्या ॥१७॥

जना० । नूनं परितापविषयोऽयम् ।

चेर० । अलं परितापेन । मङ्गलमयस्य विभोरिच्छयैव सर्वं नियन्त्रितं भवति ।

जना० । हन्त ! प्रयासो मे वैयर्थ्यमापन्नः । मन्ये यात्राक्षणे मघैव प्रबलासीत् । साधयाम्यहमधुना । राधे ! माधव ! राधे ! माधव ! ( उभौ निष्क्रान्तौ । )

---

## तृतीयोऽङ्कः

विश्वम्भरभैषज्यभवनम् । वातायनमध्यतो रथ्याया विपरीतप्रान्तस्थो विश्वनिवास-नामकः सुरम्यः प्रासादो दृश्यते । काष्ठासनमधिष्ठितः प्रशान्तो व्याधिग्रस्तानां चिकित्सने व्यापृतः । पुरःस्थे दारुमयमञ्चे कानिचित् स्थूलपुस्तकानि सन्ति । मधुः माधवश्च कस्मिन्नेव जीर्णकाष्ठासने निषण्णौ । गृहकुड्ये बृहद्दर्पणो विलम्बमान आस्ते ।

पृथक् काष्ठासने सुखासीनः सुकुमारो वार्तापत्रे निबद्धदृष्टिः स्वगतं तदेव पठति। यदुनामा पुरुषो गृहाभ्यन्तरे दण्डायमानस्तिष्ठति।

यदुः। तदद्यैवापराह्णसमये कृपया मद्भवनमागन्तव्यम्।

प्रशा०। तथाऽस्तु।

सुकु०। अद्यैवापराह्णे धुरन्धरोऽसौ द्रष्टव्यः। त्वञ्चेद् रोगिदर्शनाय गच्छसि, एकाकिना मया तत्र गन्तव्यम्।

प्रशा०। सुष्ठु स्मारितोऽस्मि। ( यदुं प्रति ) भो भोः श्रूयताम्। नाद्य मया रोगिदर्शनाय गन्तुं शक्यते। गुरु कार्यान्तरमस्ति।

यदुः। प्रयोजनं मे गुरुतरम्। ततो द्विगुणितां दर्शनदक्षिणां दास्यामि।

प्रशा०। शतगुणिताऽपि चेद्दीयते न मया गन्तुं शक्यते। ततः श्वः प्रातरेव गमिष्यामि।

यदुः। विलम्बेन रोगिण्या हानिरेव स्यात्।

प्रशा०। तर्ह्यन्यः कोऽपि चिकित्सकोऽन्विष्यताम्।

यदुः। अगत्या तथैव कार्यम्। ( यदुर्निष्क्रान्तः। )

सुकु०। सखे! न त्वया साधु कृतम्। कथं मदर्थे—( इत्यर्धोक्ते )

प्रशा०। ( अश्रुतिमभिनीय ) मधो! विरहकातरा नववधूरिव कथं निस्पन्दमवतिष्ठसे? समीपमागम्यताम्। ( मधुः सलज्जमुपसर्पति। ) किं मानुषस्त्वमुत स्थाणुः? हस्तं तावत् प्रसारय। ( मधुर्हस्तं प्रसारयति। प्रशान्तस्तं धृत्वा नाडीस्पन्दनमनुभवति। ततो ज्वरमानयन्त्रेण शारीरतापं निरूपयति। नेत्रद्वयमुन्नमितपुटं च परीक्षते ) अधुना व्याघ्रराज इव मुखं व्यादेहि। ( मधुर्यथोपदिष्टं करोति। वैद्युतोल्कया प्रशान्तः कण्ठनालीं परीक्षते। ) कथमधुनाऽपि व्यात्तवदनस्तिष्ठसि! अपि नाम ग्रसितुमिच्छसि माम्? ( मधुः सलज्जं मुखं संवृणोति। ) मधो! कालिकादर्शनमन्तरेण चिकित्सा नैव सिध्यति। ततो कालिकाविग्रह इव सकल्लोलरसनां निष्कासय। ( मधुर्जिह्वां निर्गमयति। प्रशान्तस्तां निपुणं पश्यति। ) आं सर्वं दृष्टम्।

मधुः। किं बुध्यते भवता?

प्रशा०। रिष्टिस्ते खण्डिता। दिष्ट्या नवजीवनं प्राप्तोऽसि। मन्ये क्षुधाऽपि वृद्धिं गता।

मधुः। यावतीं क्षुधामनुभवामि न तावत् खाद्यं मया लभ्यते।

प्रशा०। स्पष्टमेव तत्। अत एव मुखं व्यादाय मामपि ग्रसितुं व्यर्वा

मधुः। ( सलज्जम् ) नहि नहि।

प्रशा० । अधुना भेषजान्तरं दीयते । तेन च द्वितीयपाण्डव इव बलीयान् भविष्यसि । (साभिनिवेशं व्यवस्थापत्रं विलिख्य मधवे ददाति ।) गृह्यतामेतत् । किं भेषजार्थं काचपात्रमानीतम् ?

मधुः । ( काचपात्रं प्रदर्शयन् ) अथ किम् ।

प्रशा० । तत् पतितपावनाय दीयतामेतद्व्यवस्थापत्रम् ।

( मधुः प्रणम्य निष्क्रान्तः । )

सुकु० । सखे ! श्रूयताम् । विचित्रैका विज्ञप्तिः ( इत्यर्धोक्ते ) ।

प्रशा० । ( अश्रुतिमभिनीय ) साधो ! किमसाधु कृतं त्वया ? कथं करतलेन पिहिताननो विषण्णो निषण्णोऽसि । इतस्तावदागम्यताम् । ( साधुरुपसर्पति ) का वार्ता ते पुत्रस्य सिद्धेश्वरस्य ?

सुकु० । रोगिणामद्य ते मेलकं दृश्यते । कियन्तं कालं मया प्रतीक्षितव्यम् ? ममापि समयस्य मूल्यमस्ति । साधयाम्यहम् ।

प्रशा० । ( प्रतिष्ठमानं सुकुमारं निवारयन् ) भोः कोपन ! तिष्ठतिष्ठ । न त्वं रोगिणामन्यतमः । लघूकृतकर्तव्यभारस्त्वया संलपिष्यामि । रोगिणां समक्षं विश्रम्भालापो नैव युज्यते । ( सुकुमारः पुनरासनं गृह्णाति ) साधो ! मम प्रश्नस्य प्रतिवचनं कथं न दीयते ?

साधुः । ( साश्रुगद्गदम् ) आर्य ! सिद्धेश्वरो नैव म्रियते ।

प्रशा० । कथमेवमनुमीयते ! किं ज्वरः पुनरागतः ?

साधुः । न हि ।

प्रशा० । किं श्लेष्मणि पुनः शोणितबिन्दुर्लक्ष्यते ?

साधुः । न हि ।

प्रशा० । तर्हि स्वस्थ एवासौ । किं ते शङ्काकारणम् ?

साधुः । नास्य कापि शरीरपुष्टिः स्वास्थ्योन्नतिर्वा दृश्यते ।

प्रशा० । ( विमृश्य सभ्रूभङ्गम् ) पुष्टिकरपथ्यादिभिरपि कथं वा स्वास्थ्योन्नतिर्न जायते ?

साधुः । आर्य ! पुष्टिकरपथ्यादिकमस्मै न प्रदत्तम् ।

प्रशा० । ( सविरागम् ) तत् किं मया कर्तुं शक्यते । सिद्धेश्वरश्चेत् पञ्चत्वं गच्छति, मृत्युदण्डेन दण्डनीयोऽसि त्वम् ।

साधुः । ( कृताञ्जलिः ) प्रसीदत्वार्यः । कर्मच्युतेन मया कुटुम्बभरणमपि दुष्करम् । पथ्यादिकं कुतः संगृह्णीत ?

प्रका०। (सरोषम्) किमहं मृतः? कथमहं पूर्वमेव न विज्ञप्तः?

साधुः। प्रसीदतु भवान्। लज्जयाहं नागतः। चिकित्सार्थं भेषजार्थं वा काण-कपर्दकोऽपि न मया प्रदत्तः।

प्रशा०। ततः किम्? निःस्वोऽसि त्वमित्यहं सम्यग् जानामि। महार्ह-पुत्रप्राणास्तु सर्वथा रक्षितव्याः। (रूप्यकपञ्चकं दत्त्वा) गृह्यतामेतत्। अधुनैव हट्टापणात् पथ्यं संगृह्य पुत्राय दीयताम्। सति प्रयोजने पुनरागन्तव्यं त्वया।

साधुः। (पादयोर्निपत्य) अहो वदान्यता! भवत्कृपया पुत्रो मे नूनं जीवेत्।

प्रशा०। (तमुत्थापयन्) आः किं करोषि। चरणस्पर्शो न मे रोचते। धैर्यं पौरुषं च श्रय। (स्निग्धस्वरेण) कथं दुःखेन मुह्यसि? चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च। असावेव सिद्धेश्वरस्तूर्णं रोगमुक्तः कुटुम्ब-प्रतिपालने ते सहायो भविष्यति।

साधुः। आशिषो मे प्रदीयन्ते चेत् तदेव भवेत्।

प्रशा०। अधुना तावदात्मानमपसारय। (साधुः प्रणम्य निष्क्रामति। प्रविशति पतितपावनः।) पतितपावन! कथं मुखं ते मसीलिप्तपिठरवद् दृश्यते? किमापतितं नाम?

पति०। असौ 'मधु'-हतको भेषजमूल्यमप्रदायैव पृष्ठमदर्शयत्।

प्रशा०। नैतच्चिन्ताकारणम्। क्व वा पलायितस्तिष्ठेत्? श्वो वा तत्पराह्णे वा नूनं निर्यातयेत्।

पति०। कार्त्स्न्येन पञ्चाधिकशतं धारयत्यसौ।

प्रशा०। किं वा करिष्यति वराकः? स्वल्पेनायेन कथमपि जीवनं धारयति। ततो धनार्थमुत्पीडनं न मे प्रीतिमावहति।

पति०। (अप्रसन्न इव) दयार्द्रहृदयेन भवता वृत्तिरियं परित्याज्या।

प्रशा०। यथार्थमुक्तं त्वया। अचिरेण सौनिकवृत्तिमिमां चिरतो विहाय कौपीनमेव मया ग्रहणीयम्। परितः प्रवर्धमानदुःखेनाभिभूयते मे हृदयम्। पतितपावन! स्वकर्मणि प्रवर्तताम्। उपकृतोऽहं ते कर्तव्यनिष्ठया। (पतितपावनो निष्क्रान्तः।) (सुकुमाराभिमुखो भूत्वा) सखे! तवैवाहमधुना। किं वक्तुमिच्छसि?

सुकु०। (वार्तापत्रं प्रशान्तस्य पुरतो निधाय विज्ञप्तिविशेषं तर्जन्या निर्दिशन्) पठ्यतामेतत्।

प्रशा०। (निरुद्यमः) किमिदम्?

सुकु०। विचित्रं किञ्चिद्विज्ञापनम्।

प्रशा०। ( जृम्भणेनाङ्गभङ्गया च क्लान्तिं नाटयन् ) भृशं क्लान्तोऽहम्। त्वमेवोच्चै-र्वाचयित्वा श्रावय।

सुकु०। तर्हि श्रूयताम्।

कायस्थान्वयजातविश्वविजयाभिख्यस्य भूस्वामिनः
स्वर्यातस्य सुता श्रिता नववयो या बुद्धिविद्योज्ज्वला।
सङ्गीताद्यनवद्यशिल्पकुशला पद्मासनेव श्रिया
देया रूपगुणान्विताय कवये यूनेऽधुना ज्ञानिने ॥१८॥
विद्याप्रामाण्यपत्रेण चित्रेण च समर्थितम्।
मासेन प्रार्थनापत्रं प्रेर्यतां कवितान्वितम् ॥१९॥
वधूहट्टनृपाध्वस्थ-विश्वनिवासहर्म्यतः।
चिरञ्जीवेन विज्ञप्तिः सेयमद्य प्रवर्तिता ॥२०॥

प्रशा०। ( आसनादुत्प्लुत्य समुत्थितः ) अहो मृतसञ्जीवनीयं विज्ञप्तिः! क्लान्तिर्मे विलुप्ता। सखे दिष्ट्या वर्धसे। दुःखतमिस्रायास्ते परिसमाप्तिरनया सूच्यते। ( लेखन्यादिकं सुकुमारस्य पुरतः स्थापयन् ) गृह्यतामेतत्। अधुनैवावेदनपत्रं विरचय्य प्रेष्यताम्।

सुकु०। ( लेखन्यादिकं हस्तेनापसार्य ) मस्तिष्कविकृतिस्ते जाता! व्याधिग्रस्तं चिकित्सकं को नाम चिकित्सेत्? कथमयमुल्लासः?

प्रशा०। गतिहीनस्य ते गतिर्भवतीत्येव मामानन्दयति।

सुकु०। धिक् त्वां कल्पनाव्यसनिनम्। कोऽयं विश्वविजयः? का वा तस्य दुहिता? किमसौ परिणयार्हा न वेति किमपि न ज्ञायते त्वया।

प्रशा०। विस्मितोऽहं ते वचसा। किमन्ध इव बधिर इव परिक्रामसि? किं भूस्वामिनो राजोपाधिकस्य विश्वविजयस्य नामापि नागतं ते श्रवणसरणिम्? किं तस्य प्रासादोपमं भवनमपि नापतितं ते दृष्टिपथम्? वातायनसमीपमागच्छ। ( सुकुमारं वातायनसन्निधानं नयति। ) पश्य पश्य।

प्रासादो यः पुरतस्तुङ्गकायो
नेत्रानन्दं सृजति श्वेतवर्णः।

( विश्वनिवासं तर्जन्या प्रदर्शयति। ) असावेव विश्वनिवासः।
पुण्यश्लोकस्य दानवीरस्य स्वर्गतविश्वविजयस्य वासभूमिः।

अस्यैवान्तर्ललना लालिता सा

सुकु०। राजराजन्यवर्गैर्न मे वित्तहीनस्य किमपि प्रयोजनम्।

( उभौ प्रत्यावृत्य पुनरुपविशतः। )

प्रशा०। किमिदमुच्यते? दुष्कुलोद्भवमपि स्त्रीरत्नं ग्रहणीयं किं पुनरुदात्तकुल-सम्भवम्?

सुकु०। भवतु। अपि नाम त्वयाऽसौ सकृदपि चक्षुर्भ्यां दृष्टा?

प्रशा०। द्वितीयतलालिन्दस्थे द्वे एव तरुण्यौ मया प्रायशो दृश्येते। उभे अपि रूपलावण्यभास्वरे। तयोः कतरा तावदधुना प्रदेयेति नाहं जानामि। द्वित्रैरेव दिवसैः सर्व एवोदन्ता मया संग्राह्याः।

सुकु०। अलं वृथा श्रमेण। प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनो नाहमात्मानमुप-हास्यतां नेष्यामि।

प्रशा०। नायमात्मावमानस्त्वयि युज्यते। पश्यानि ते कररेखाः, सामुद्रिकशास्त्रेऽपि मे ज्ञानमस्ति। ( सुकुमारस्य दक्षिणकरतलं गृहीत्वा निपुणं निर्वर्णयति। ) दृश्य-तामियं रेखा। स्वभाग्येन ते धनं नास्ति स्त्रीभाग्येन तु प्रभूतमित्यनया सूच्यते। अनया धनवत्या ते परिणयः स्वयं वेधसापि प्रतिरोद्धुं न शक्यते।

सुकु०। ( हस्तं प्रसभमाच्छिद्य ) तिष्ठत्वयं ज्योतिषविद्याडम्बरः। नाहं वैधेयः। धनहीनं मां कथमसौ वृणीत?

प्रशा०। किं विज्ञप्तिरपि त्वया सावधानं नैव वाचिता? प्रार्थिना रूपयौवनविद्यावता भवितव्यमित्येव तत्र निर्दिष्टम्। धनस्य नामापि न गृहीतम्। सखे! धनेन न तस्याः किमपि प्रयोजनम्।

सुकु०। क्व मे रूपवत्ता?

प्रशा०। ( कुड्यस्थदर्पणे सुकुमारस्य प्रतिबिम्बं प्रदर्शयन् ) पश्य रे काण पश्य। कासौ रूपगर्विता या मूर्तिमिमां विलोक्य चरणयोस्ते नानता स्यात्?

सुकु०। नासौ त्वमिव सौहार्दकामलाक्रान्तया दृशा द्रक्ष्यति माम्। रूपप्रसङ्गस्ताव-त्तिष्ठतु। नाहं कविप्रतिभान्वितः।

प्रशा०। ( विहस्य ) नैतदवसादकारणम्। कवितारचनं मोदकभक्षणमिव सुकरम्।

सुकु०। सुकरम्? कवितायाः कवर्णोऽपि मस्तिष्कमन्थनेन न मे लेखनीमुखतो निःसरति।

प्रशा०। यदि तत्ते सुखसाध्यं न स्यान्मयैव त्वदर्थे तत् साधनीयम्।

सुकु०। किमुच्यते? प्रतारणं खल्वेतत्। तन्मे प्रकृतिविरुद्धम्।

प्रशा०। तद् विना कवितानिदर्शनमेव प्रार्थनापत्रं प्रेष्यताम्।

सुकु० । किमर्थम् ?

प्रशा० । यथाहं पश्यामि, तव चित्रदर्शनेनैव तस्या निर्बन्धोऽयं लुप्येत ।

सुकु० । बुद्धिविकारस्ते जातः । आस्तां तावदयं प्रसङ्गः । छात्राध्यापनाय मया गन्तव्यमधुना । अपराह्णे पुनरागमिष्यामि । ( सरभसं बहिर्गच्छता सुकुमारेण गृहानाविशता पूर्णचन्द्रेण द्वारपथे संघट्टः पूर्णचन्द्रस्य पतनञ्च । )

पूर्ण० । ( आर्तस्वरेण ) हा हदोम्हि ! गणेशजणणि, किमेदं ते मणसि ठिदं ? । ( हा हतोऽस्मि । गणेशजननि ! किमेतत्ते मनसि स्थितम् ? ) ( लज्जितः सुकुमारस्त-मुत्थापयति मुखमार्जन्या ( handkerchief ) च तं विरजीकरोति । )

सुकु० । हा धिक् ! हा धिक् । किमेतदापतितम् ? सौम्य ! प्रविशंस्त्वं न मया दृष्टः । मन्ये बलवन्नाहतोऽसि ।

प्रशा० । ( विकृतस्वरेण ) बलवन्नाहतोऽसि ? अरे दुर्वृत्त ! नात्मना ते संघट्टः सम्भवति । अन्यथा नूनमवाभोत्स्यत कलौ त्वं घटोत्कचस्य नवावतार इति । ( पूर्णचन्द्रं प्रति ) एहि त्वं भोः ! पश्यामि हड्डादिकं भग्नं न वेति । ( पूर्णचन्द्रः सुकुमारेण धृतः शनैरुपसर्पति प्रशान्तं च प्रणमति । प्रशान्तस्तं निपुणं परीक्षते । ) आः ! निश्चिन्तोऽहं जातः । न किमपि भग्नम् । पितृपुण्येन जीवसि त्वम् । ननु मुखं ते परिचितमिव प्रतिभाति ।

पूर्ण० । विस्सनिवासभिच्चो हं पुण्णचन्दणामा । (विश्वनिवासभृत्योऽहं पूर्णचन्द्रनामा ।) ( श्रुत्वैतत् सुकुमारः पुनरासनं गृह्णाति । )

प्रशा० । सार्थकनामाऽसि त्वम् । केवलमिदमेव पृच्छामि कथममावस्यायां तिथौ त्वमुदयाचलं प्राप्तोऽसि ? ( पूर्णचन्द्रस्तूष्णीमास्ते । ) किं वचो मे दुर्बोधं मन्यसे ? किमागमनकारणं ते ? ( पूर्णचन्द्रः पूर्ववत् तूष्णीमास्ते । ) किं बधिरस्त्वम् ! ( उच्चैः ) कथमिहागतोऽसि ?

पूर्ण० । ( साश्रुगद्गदम् ) ण ह बहिरो । गणेशजणणीए हं वुड्ढो जरग्गओ इआदिहि दुव्वअणेहि तिरक्किदो । ( नाहं बधिरः । गणेशजनन्याऽहं वृद्धो जरद्गव इत्यादिभि दुर्वचनैस्तिरस्कृतः । )

प्रशा० । ( सविस्मयम् ) अत्र न किमपि मया करणीयमस्ति । नाहं व्यवहाराजीवो वा नगररक्षी वा ।

पूर्ण० । न मे ववहारिएण णअररक्खिणा वा पओअणं । ( न मे व्यावहारिकेण नगररक्षिणा वा प्रयोजनम् । )

प्रशा० । ततो गणेशस्य जनक एवोपसर्पणीयः । स एव निजभार्यां विनेष्यति ।

पूर्ण० । ( सलज्जं मस्तकं कण्डूयमानः ) अज्ज ! सा मह एव णिरपच्चा भज्जा । गणेशजणणित्ति ताए पिदुदिण्णं णामं ।

( आर्य ! सा ममैव निरपत्या भार्या । गणेशजननीति तस्याः पितृदत्तं नाम । )

प्रशा० । ( विहस्य ) सर्वमधुना स्पष्टम् । परन्तु दम्पतिकलहस्य न कोऽपि प्रतीकारो मे करायत्तः ।

पूर्ण० । दम्पदिकलहस्स पडिआरत्थं न हं आगदो । केसपिक्कत्तणं मे चिइच्छणीअं ।

( दम्पतिकलहस्य प्रतीकारार्थं नाहमागतः । केश-पक्वता मे चिकित्सनीया । )

( स्वमस्तके हस्तं निदधाति । )

प्रशा० । ( विहस्य ) कथं प्रागेव नैतदुक्तम् । ( उच्चैःस्वरेण ) पतितपावन ! केशकृष्णीकरणभेषजमादाय सकृदिहागम्यताम् । ( पूर्णचन्द्रं प्रति) पूर्णचन्द्र ! यद्भेषजं दीयते तेन ते केशा भ्रमरकृष्णाः सम्पत्स्यन्ते । तद्दर्शनेन त्वयि गणेशजनन्याः प्रीतिरपि स्फीता भवेदित्यत्र नास्ति कोऽपि संशयः । परन्तु क्षारोदकेन मस्तकं प्रक्षाल्य प्रतिसप्ताहं सकृदेव तत् प्रयोज्यम् । प्राग् भेषजप्रयोगाच्छ्मश्रुगुम्फादिकं समूलघातं हन्तव्यम् । ( पतितपावनः प्रविश्य भेषजं ददाति । ) पूर्णचन्द्र ! गृह्यतामेतत् ।

पूर्ण० । ( गृहीत्वा ) केत्तिअं अस्स मुल्लं ? ( कियदस्य मूल्यम् ? )

प्रशा० । ( विहस्य ) अमूल्यमेतत् । न त्वया किमपि देयम् ।

पूर्ण० । अम्मो दाणसीलत्तणं ! गच्छामि हं अहुणा । ( अहो दानशीलता ! गच्छाम्यहमधुना । ) ( प्रणम्य द्वाराभिमुखं गच्छति । )

प्रशा० । पूर्णचन्द्र ! क्षणं तिष्ठ । ( पूर्णचन्द्रः परावर्तते । ) केषाञ्चित् प्रश्नानामुत्तरं त्वया प्रदेयम् । विश्वनिवास उषितस्य ते कियान् कालो गतः ?

पूर्ण० । आबालत्तणं तत्थ वसामि । ( आबाल्यं तत्र वसामि । )

प्रशा० । मन्ये प्रभुस्ते परलोकं गतः ।

पूर्ण० । तधा । ( तथा । )

प्रशा० । मन्ये तस्यैव विधवा पत्नी साम्प्रतं विश्वनिवासस्वामिनी ।

पूर्ण० । णहि । कण्णअं एअं जहित्ता सावि सग्गं गदा । ( न हि । कन्यामेकां हित्वा सापि स्वर्गं गता । )

प्रशा० । कथमेकामित्युच्यते । कन्याद्वयं हि तत्र दृश्यते ।

पूर्ण० । अवरा हि मे भट्टिदारिआए विज्जूपडिमाए माउसिआए पुत्ती । विज्जालाहत्थ

एत्थ वसदि। (अपरा हि मे भर्तृदारिकाया विद्युत्प्रतिमाया मातृष्वसुः पुत्री। विद्यालाभार्थमत्र वसति।)

प्रश्ना०। अनयोः कतरा तावत्ते भर्तृदारिका।

पूर्ण०। या आसं पंसुदरा सा जेव्व। मुहसदिसत्तणं उभाणं थोक्कं अत्थि ज्जेव्व। (यानयोः प्रांशुतरा सैव। मुखसादृश्यमुभयोः स्तोकमस्त्येव।)

प्रश्ना०। मन्ये भर्तृदारिकाऽपि ते विदुषी?

पूर्ण०। सरस्सतिव्व। (सरस्वतीव।)

प्रश्ना०। गुणवती?

पूर्ण०। तादिसी गुणवदी पुढवीए ण विज्जइ। (तादृशी गुणवती पृथिव्यां न विद्यते।)

प्रश्ना०। धनवती?

पूर्ण०। धणं इमाए न एत्तिअत्तणेण परिच्छिदिदुं सक्कइ। (धनमस्या नेयत्तया परिच्छेत्तुं शक्यते।)

प्रश्ना०। रूपं तु स्वयमेव प्रत्यक्षीकृतम्। अपि सा जीवद्भर्तृका?

पूर्ण०। अज्ज वि अणूढा जेव्व। (अद्याप्यनूढैव।)

प्रश्ना०। कथम्?

पूर्ण०। एसमो जेव्व विज्जा समाविदा। तदो वरोऽण्णिसीअदि। (ऐषम एव विद्या समापिता। ततो वरोऽन्विष्यते।)

प्रश्ना०। उभयोरेव?

पूर्ण०। णहि। केअलं भट्टिदारिआए।
(नहि। केवलं भर्तृदारिकायाः।)

प्रश्ना०। केनान्विष्यते?

पूर्ण०। एतदत्थं विआहघडओ जणद्दणठक्कुरो सइं आगदो। वत्तापत्तम्मि विजाणावणेणवि पाणिपत्थिण आहुज्जन्तित्ति वि मए सुदं।
(एतदर्थं विवाहघटको जनार्दनठक्कुरः सकृदागतः। वार्तापत्रे विज्ञापनेनापि पाणिप्रार्थिन आहूयन्त इत्यपि मया श्रुतम्।)

प्रश्ना०। कस्तावच्चिरञ्जीवः?

पूर्ण०। पिदुबन्धू अमू। वेषयिककम्मज्झक्खो अ। भट्टिदारिआए जेठ्ठतादो व्व बहुमदो। (पितृबन्धुरसौ वैषयिककर्माध्यक्षश्च, भर्तृदारिकाया ज्येष्ठतात इव बहुमतः।)

प्रश्ना०। नास्ति मे प्रश्नान्तरम्। अधुना त्वया गन्तुं शक्यते। (पूर्णचन्द्रो निष्क्रामति।)

(सुकुमारं प्रति) सखे! मेघाभ्यर्थनायाः प्रागेव वारिपातः। यज् ज्ञातुमिष्यते तत् सर्वमेव ज्ञातम्। अधुना प्रार्थनापत्ररचने व्याप्रियताम्।

सुकु०। प्राक् तावत् सुरञ्जनवयनयन्त्रालये भाग्यं परीक्षितव्यम्। विवाहबन्धनं न मे काम्यम्।

"यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि॥"२१॥

प्रशा०। कथमिदमध्रुवं मन्यसे?

स्पर्शेन ते विश्वनिवासदासश्चुचुम्ब भूमिं यदसौ वराकः।
तत्स्वामिनीचित्तजयाभियाने सम्पूर्णसिद्धेर्ननु सूचकं तत्॥२२॥

सुकु०। (विहस्य) कर्मान्वेषणे व्यर्थचेष्टश्चेद्भवेयं तदैव ते वचनं मया विचार्यं नान्यथा। साधयामि तावत्। (सुकुमारो निष्क्रान्तः, प्रशान्तोऽपि।)

---

## चतुर्थोऽङ्कः

(सुरञ्जन-वयनयन्त्रालयः। अन्तर्गृहस्थो धुरन्धरो मञ्चनिहितानि कानिचिन्नवांशुकानि परीक्षते, ताम्रकूटशलाकया धूमं च निषेवते। तत्पार्श्वचरः सर्वानन्दस्तूष्णीमास्ते।)

धुर०। सर्वानन्द! प्रीतोऽहमेभिर्नवांशुकैः। मन्ये पूर्वतोऽप्यधिकाधिक एवैषां समादरः स्यात्।

सर्वा०। अहमपि तथा मन्ये।

धुर०। लक्षाधिकरूप्यकविनियोगो मे सफल एव जातः।

सर्वा०। किमत्र चित्रम्? धनमेव धनमाकर्षति। कर्मकराणां श्रमिकाणाञ्च वेतनमधुना वर्धनीयम्। एवं कृते नवोत्साहेन ते कर्मणि प्रवर्तेरन्।

धुर०। मूर्खोऽसि त्वम्। नवप्रतिष्ठापितैर्वैद्युतयन्त्रैस्तेषां कर्मसौकर्यं जातं श्रमलाघवञ्च। तथापि यद्वेतनं पूर्ववदेव दीयते तत्तु तेषां सौभाग्यमेव।

सर्वा०। कर्तः! असन्तोषस्तेषु क्रमते। अत एवास्माकं रासायनिको हेमचन्द्रोऽस्मान् परित्यज्य स्थानान्तरं गतः।

धुर०। ततः किम्? किमन्ने विकीर्णेऽपि वायसानामभावः स्यात्? प्रत्यहं शून्यीकृतपदे नियोगं याचमानानां प्रार्थनापत्रशतं मया लभ्यते। पूर्वतोऽपि न्यूनतरभृत्या रासायनिको मया लप्स्यते।

( ततः प्रविशति तुन्दिलसिंहः सैनिकरीत्या चाभिवादयते । )

का वार्ता प्रतीहारिन् !

तुन्दि० । दंसनत्थिनौ दुवे तरुणा दुवारम्मि चिट्ठन्ति । इमाइ ताणं परिचयपत्ताइं ( दर्शनार्थिनौ द्वौ तरुणौ द्वारि तिष्ठतः । इमे तेषां परिचयपत्रे । ) ( तेषां परिचयपत्रे ददाति । )

धुर० । ( परिचयपत्रमेकं वाचयित्वा ) सुकुमारमित्रः । आं स्मरामि । रासायनिककर्मार्थमभ्यागतोऽसौ । कोऽयमपरः ? ( द्वितीयं परिचयपत्रं वाचयित्वा ) प्रशान्तदासः । किमर्थमागत इति न व्यपदिष्टमनेन । भवतु । सर्वानन्द ! त्वयैव गत्वा निरूप्यताम् । पदप्रार्थी चेत् प्रवेशमर्हति । ( सर्वानन्दस्तुन्दिलसिंहश्च निष्क्रामतः । क्षणान्तरे सर्वानन्दः सुकुमारप्रशान्ताभ्यां सह पुनः प्रविशति । ) अरे मूर्ख ! किं द्वावेव युगपत् प्रवेशितौ ? एकस्तावद् बहिरपनेयः ।

सर्वा० । ( सुकुमारं प्रति ) किं मया पूर्वमेव ते न कथितमेकैकशः प्रवेष्टव्यमिति ? तत् किं विलम्बेन ? एह्येहि । बहिरेव त्वया प्रतीक्षितव्यम् । ( सुकुमारं करे धृत्वाऽऽकर्षति । )

सुकु० । ( प्रसभमात्मानं मोचयित्वा ) आः ! मुञ्च माम् । अङ्गेषु मे हस्तक्षेपः कथमपि न सोढव्यः । ( हस्तेन सर्वानन्दं दूरमपसार्य ) तत्रैव स्थीयताम् । ( सर्वानन्दो भ्र वावुन्नमय्य मुखं व्यादाय विस्मितवत्तिष्ठति । )

धुर० । ( कुप्यन् ) अहो साहसम् ! जलं प्रविश्य कुम्भीरेण कलहायसे ? अपेहि, अपेहि त्वम् । नेदृशो धृष्टः कर्मणि नियोगमर्हति । ( प्रशान्तं प्रति । ) त्वयैवात्र स्थीयताम् ।

प्रशा० । ( सुकुमारं प्रति ) आः सखे स्थिरो भव । अस्थाने कथमयं संरम्भः ?

दास्यं यस्येप्सितं तस्य रोषो दोषस्य कारणम् ।
अतो न मतिपारुष्यं श्रीयते भूतिमिच्छता ॥१॥

( धुरन्धरं प्रति ) भद्र ! परिस्थितिस्तु भवता न सम्यगवबुद्धा । अयमेव कर्मार्थी नाहम् ।

धुर० । तत् किमात्मनश्चन्द्रवदनं प्रदर्शयितुमत्रागतोऽसि । सर्वानन्द ! कथमयं प्रवेशितः ? ( नेपथ्ये कोलाहलः ) आः किमापतितं नाम ? सर्वानन्द ! त्वरितं ज्ञायतां कथमयं कोलाहल इति । ( सर्वानन्दो निष्क्रामति क्षणान्तरे च पुनः प्रविशति । )

सर्वा०। कर्तः! महेन्द्रकर्मकारस्तडित्प्रवाहेनाभिभूतः सहसा विसंज्ञो जातः। आर्येण सकृत्तत्र गन्तव्यम्।

धुर०। मया गतेन किं कार्यम्? वयनयन्त्रालयस्य चिकित्सकस्तावदाहूयताम्।

सर्वा०। स तत्रैव तिष्ठति। मूर्च्छापनयनाय यथाशक्ति यतमानोऽपि सर्वथा विफलप्रयासो जातः।

धुर०। एवं चेद् राष्ट्रीयमातुरालयं नीयतामसौ महेन्द्रः।

प्रशा०। भद्र! किञ्चिद्वक्तुमिच्छामि। अहमपि चिकित्सकः। अनुमोद्यते चेद् भवता, सकृत्तं महेन्द्रं द्रष्टुमिच्छामि।

धुर०। का हानिः? सर्वानन्द! अहमेव गच्छामि। अधुनैव प्रत्यागतः स्याम्। (प्रशान्तं प्रति) आगच्छतु भवान्। (प्रशान्तो धुरन्धरश्च निष्क्रान्तौ।)

सर्वा०। (सुकुमारं प्रति) कथमेवं मयि वर्वरवदाचरितं भवता?

सुकु०। कथमङ्गेषु मे हस्तावमर्शः कृतः?

सर्वा०। किं हस्तस्पर्शेन ते विस्फोटकः समुत्थितः? वयःस्थोऽसि त्वम्। शान्तां प्रकृतिमवलम्बसे चेत्, त्वामभि कर्तारमनुकूलयितुं प्रयतिष्ये।

सुकु०। स्वचक्रे तैलं निषिच्यताम्। न मे कस्यापि साहायकेन प्रयोजनम्।

सर्वा०। शिक्षितोऽप्यपरिणतबुद्धिरसि। करस्थां लक्ष्मीं पद्भ्यामपाकरोषि। संसारेऽस्मिन् सारल्येन न किमपि साध्यते, कूटनीतिः सर्वथावलम्बनीया।

सुकु०। अलमलं फल्गुवचोभिः। नाहं त्वदुपदेशापेक्षी।

सर्वा०। "दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम्।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः॥"२॥

(ततः प्रविशतो धुरन्धरप्रशान्तौ।)

धुर०। (सर्वानन्दं प्रति) आश्चर्यम्। अत्रभवतश्चिकित्सया क्षणेनैव संज्ञामलभत महेन्द्रः। (प्रशान्तं प्रति) भवत्परिचयमजानता मया यद् यत् पूर्वमाचरितं, तत् तन्मर्षयितुमर्हति भवान्।

प्रशा०। नाहं तत् स्मरामि।

धुरः०। कृतार्थोऽहमनेनानुग्रहेण। आसनं गृह्यताम्।

प्रशा०। (आसनं गृहीत्वा) सखे! त्वमप्युपविश।

धर०। (सुकुमारं दृष्ट्वा) अहो धृष्टता! किमधुनाऽपि न त्वं गतोऽसि? किं प्रतीहारिणमाकारयिष्यामि?

प्रशा० । भद्र ! क्षन्तव्योऽयम् । सम्यक् परिचितोऽयं मे । गुणवानयं जनः कर्मणि नियोज्यते चेद् भवाल्लँभवानेव भवेत् ।

धुर० । तथास्तु । भवदनुरोधेन मर्षयाम्यहमेनम् । हंहो ! किंनामाऽसि ?

सुकु० । परिचितिपत्रतो ज्ञायताम् । पूर्वमेव तत् प्रतीहारिहस्तेन प्रेषितम् ।

धुर० । कियती ते विद्या ? कीदृशी ते योग्यता ?

सुकु० । आवेदनपत्रे सर्वमेव विशदीकृतम् । इयं तत्प्रतिलिपिः । ( प्रतिलिपिमुपस्थापयति । )

धुर० । आकृत्या सुदर्शनोऽपि प्रकृत्या त्वं बर्बर एव । वचोभङ्गिस्ते न मे रोचते । भद्रजनोचितमाचरणं न त्वया शिक्षितम् ।

सुकु० । मयाऽपि भवांस्तथैव वाच्यः !

धुर० । गच्छ त्वम् । गुरुलाघवज्ञानं यस्य न विद्यते, प्रभुभृत्यसम्बन्धोऽपि न येन गण्यते, नासौ नियोगमर्हति ।

सुकु० । कोऽत्र प्रभुः को वा भृत्यस्तदहं न जानामि । प्राक् कर्मणि नियोगात् प्रभुत्वप्रकाशनं न मे स्वदते ।

प्रशा० । आः सुकुमार ! सर्वं कार्यं विहन्यते त्वया । नियन्त्रय ते रसनाम् । प्रातः प्रभृति कारणविशेषेण मतिस्ते वैकल्यं गतेति सम्यगहं वेद्मि, महात्माऽयं तु न तज्जानाति । तत्तूष्णीमास्यताम् । ( धुरन्धरं प्रति ) भद्र ! क्षम्यतामयं मे सखा । अहमस्य प्रतिनिधिभूतः प्रश्नानां प्रतिवचनं दातुमिच्छामि ।

धुर० । तथास्तु ।

प्रशा० । भद्र ! सखायमिष्टः सुकुमारनामा
सुस्पष्टभाषी सरलश्च शिष्टः ।
विज्ञानवारांनिधिपारदृश्वा
सुधीश्च साधुश्च विशुद्धवृत्तः ॥२॥

रसायनविद्यायां स्नातकोत्तरपरीक्षोत्तीर्णोऽयम् । वर्णोत्पादनप्रक्रियासु निबन्धरचनेन स्वर्णचक्रमपि लब्धवान् ।

सर्वा० । प्रभो ! ईदृशेनैव ते प्रयोजनम् । त्रुटिरस्य क्षम्यताम् ।

धुर० । कोपनोऽयम् । तथापि सुसंहतमस्य शरीरं मामाकर्षति । ( प्रशान्तं प्रति ) सखा ते कर्मणि नियुज्यते चेत्, कियती भृतिरस्मै प्रदेया ?

प्रशा० । शतत्रयमस्य वेतनं भवितुमर्हति ।

धु० । ( विस्फारितनयनः ) किमुच्यते ? शतत्रयमिति ?

आवक्षः खायते यत्नाद् यदीदं वसुधातलम् ।
रूप्यकं प्राप्यते नैकं किं पुनस्तच्छतत्रयम् ॥४॥

नात्र मया दानसत्रं प्रवर्तितम् । शतादधिकं नाहं दास्यामि ।

प्रशा० । भद्र ! रत्नं हस्तच्युतं भवति । पश्चादनुशयः कार्यः ।

सर्वा० । प्रभो भृतिः स्तोकं वर्ध्यताम् ।

धुर० । भो भोस्तिष्ठ तिष्ठ । किं सार्धशतेन ते तृप्तिः स्यात् ?

प्रशा० । सखे प्रत्यागम्यताम् । ( सुकुमारः प्रत्यागच्छति । )
( धुरन्धरं प्रति ) भद्र ! शतत्रयमेवास्मै देयम् ।

नैपुण्यतोऽस्य तव शिल्पनिकेतनेऽस्मि-
न्नुत्पत्स्यते हि नवशोभनवस्त्रजातम् ।
तेनाधिगम्य तरसा कमलाप्रसादं
दीपिष्यसे धनवतामवतंसभूतः ॥५॥

तन्नात्र मितम्पचवृत्तिः श्रयणीया ।

धुर० । उपकृतोऽहं भवता । ततो भवद्वचनेन शतद्वयमूरीक्रियते मया । चरमोऽयं सङ्कल्पः । वेतनमिदं गृह्यतां वा प्रत्याख्यायतां वा ।

प्रशा० । ( जनान्तिकम् ) सखे ! किं मन्यते त्वया । कृपणोऽयं नात ऊर्ध्वमारोक्ष्यति ।

सुकु० । सम्मतिर्ज्ञाप्यताम् ।

प्रशा० । भद्र ! वेतनमिदं प्राथमिकं मन्यमानः सखा मे सम्मतिं प्रकाशयति ।

धुर० । ( सुकुमारं प्रति ) मत्तोऽपि त्वं धूर्ततरः प्रतीयसे ।

यदेव प्रथमं देयं ज्ञायतां चरमञ्च तत् ।
न व्यवस्थितचित्तानां परिवृत्तिसहं वचः ।६॥

सुकु० । अलं वादप्रतिवादेन । भवदिच्छैव प्रभवतु । अधुना कार्यकालो निर्दिश्यताम् ।

धुर० । प्रातरेवागन्तव्यम् । आसूर्यास्तगमनमत्र स्थातव्यम् । श्वः प्रातरेव कर्मणि प्रवर्तितव्यम् ।

सुकु० । तथास्तु । ( गन्तुमुपक्रमते । )

धुर० । तिष्ठ तिष्ठ । सावशेषं मे वचनम् ।

सुकु० । ( प्रत्यावृत्य ) किमन्यत् ?

धुर० । यन्त्रालयकृत्यं निर्वर्त्य मद्भवनमागन्तव्यम् । तत्र मद् हिता स्नातकपूर्वपरीक्षार्थिनी सुनन्दा होराद्वयमध्यापनीया । तदर्थं पारिश्रमिकं तु नैव प्रदेयम् ।

सुकु० । (समन्युरस्पष्टम्) मन्ये चरणसंवाहनमपि ते करणीयम् ।

धुर० । (अश्रुतिमभिनीय) किमसौ ब्रवीति ?

प्रशा० । उल्लासितोऽयमनेन वचनेन ।

धुर० । (सुकुमारं प्रति) का ते जातिः । अपि नाम कृतदारस्त्वम् ?

सुकु० । एभिरुदन्तैः किं प्रयोजनम् ?

प्रशा० । आः सुकुमार ! तूष्णीमास्स्व । (धुरन्धरं प्रति) भद्र ! कायस्थकुलावतंसोऽयमकृतदारश्च ।

धुर० । अहो दुरदृष्टम् ! वर्णसाम्यमावयोर्नास्त्येव ।

सुकु० । कथमियं खेदोक्तिः ? वर्णवैषम्यशून्येऽस्मिन् भारतराष्ट्रे समैव स्थितिः सर्ववर्णानाम् ।

धुर० । तदहमपि जानामि । परन्तु सामाजिकक्षेत्रेषु वर्णवैषम्यमधुनापि बलवत् प्रभवति । असवर्णविवाहं प्रति का ते दृष्टिभङ्गिः ?

सुकु० । नैतत् सामाजिकक्षेत्रम् । मन्ये नियोज्येन कन्यापरिणयो भवता नैव सङ्कल्पितः ।

धुर० । साम्प्रतं नास्त्येव तादृशः कोऽपि सङ्कल्पः । तथापि दुहितुः पित्रा परिस्थितिस्तु सर्वथा विचारणीया । अध्यापनकाले शिक्षकान्तेवासिन्योर्घनिष्ठं सान्निध्यमवश्यम्भावि । ततः

वपुषा त्वमहो मनोहरस्तनया मे नवयौवनान्विता ।
प्रहिणोति शरं यदि स्मरो गतिरेका युवयोः करग्रहः ॥७॥

तत् सति प्रयोजने विवाहोऽपि कल्पनीयः । तथाविधा परिणतिश्चेत् सम्पद्यते, तत्ते गौरवहेतुरेव स्यात् ।

सर्वा० । अहो सौभाग्यम् ! भोस्तरुण ! प्रातरुत्थाय कस्य मुखं दृष्टं त्वया ? प्रभोरेकैव कन्या सुनन्दा । उत्तरकाले प्रभोः सर्वस्वमेव ते कुक्षिगतं भविष्यति ।

सुकु० । (समन्युः) अध्यापनव्यपदेशेन दुहितरं ते विपथं प्रापयेयमित्येव शङ्क्यते त्वया । यत्र चारित्रेऽपि संशयस्तत्र न मे स्थानम् । जीविकार्थमेवाहमागतो न कस्यापि दुहितुः पाणिपीडनाय । तदन्यः कोऽपि भवता विचेयः । प्रयासस्ते जययुक्तो भूयात् । (सरभसं निष्क्रान्तः ।)

प्रशा० । भद्र ! सरलमतिः सखा मे सकोपं प्रस्थितः । प्रसाद्यैनं पुनरहमागमिष्यामि । नमस्ते । (निष्क्रामति ।)

सर्वा० । प्रभो ! कथं विमनायसे ?

वड़िशाविद्धवक्त्रोऽपि च्छिन्नसूत्रोऽतिकर्षणात् ।
अयं तरुणमत्स्यस्ते हस्ताद् भ्रष्टः पलायितः ॥८॥
यथाऽधिकविलम्बेन कार्यं वन्ध्यीकृतं भवेत् ।
तथाऽतित्वरयाऽपि स्यात् कथं नैतत् स्मृतं त्वया ॥९॥

धुरं० । आः किं फर्फरायसे । वचनं ते क्षते क्षारमिव नैव सोढुं शक्नोमि । अपेहि त्वम् । ( उभौ निष्क्रामतः । )

---

## पञ्चमोऽङ्कः

( विश्वनिवासावरोधगृहम् । प्रविशति मुण्डित-श्मश्रु-गुम्फो भेषजकृष्णीकृतमूर्धजः पूर्णचन्द्रः । अनिपुणहस्तेन मसीप्रयोगान्मुखमण्डलेऽपि मसीचिह्नानि दृश्यन्ते । )

पूर्ण० । ( कुड्यविलम्बमानदर्पणे स्वं प्रतिबिम्बं निर्वर्णयन् ) अच्छरिअं भेसजं पसन्तचिइच्छएण मह दिण्णं । पुण्णरूवन्तरं गदो पुण्णचन्दो हं ति न कोवि पच्चभिजाणिदुं सक्कुया । भेसजप्पओएण सहसा णअकत्तिकेओ विअ हं संवुत्तो ! हद्धि कधं मुहं पि मे मसीकलङ्किदं दिस्सदि ? आ जाणामि । भेसजं जेव्व इदं अनवधाणत्तणेण मुहम्मि लग्गं पटीयदि । ( स्कन्धाद् गात्र-मार्जनीमादाय मुखतो मसीचिह्नान्यपनेतुं यतते न च शक्नोति । ) दुरवणेअं इदं पडिभादि । अहवा किं पोञ्छणेण ? चिट्ठदु दाव इदं । अण्णेण पच्च-भिण्णाणं मह कठिणदरं भवे । कहिं मह घरणी । अदिवड्ढिं गदो एदाए गव्वो । अज्ज ज्जेव्व सा पडिकूलगामिणी समुचिदं सिक्खावणीआ । (चरणध्वनि निशम्य ) गइन्दगामिणी पिया म इद ज्जेव्व आअच्छदि । तद् यधासङ्कप्पिदं अणुट्ठेअं अहुणा ।

( आश्चर्यमिदं भेषजं प्रशान्तचिकित्सकेन मे दत्तम् । पूर्णरूपान्तरं गतः पूर्ण-चन्द्रोऽहमिति न कोऽपि प्रत्यभिज्ञातुं शक्नुयात् । भेषज-प्रयोगेण सहसा नव-कार्त्तिकेय इवाहं संवृत्तः । हा धिक् कथं मुखमपि मे मसीकलङ्कितं दृश्यते ! आं ज्ञातम् । भेषजमेवैतदनवधानतया मुखे लग्नं प्रतीयते । दुरपनेयमिदं प्रता-भाति । अथवा किं प्रोञ्छनेन ? तिष्ठतु तावदिदम् । अनेन प्रत्यभिज्ञानं मे कठिनतरं भवेत् । क्व मे गृहिणी ? अतिवृद्धिं गतोऽस्या गर्वः । अद्यैव सा प्रतिकूलगामिनी समुचितं शिक्षणीया ।
गजेन्द्रगामिनी प्रिया मे इत एवागच्छति । तद् यथासङ्कल्पिमनुष्ठ यमधुना । )

( वातायनमुपसृत्य तत्कवाटौ निरुध्य नीशारान्तरितस्तिष्ठति। ततः प्रविशति सम्मार्जनीहस्ता गणेशजननी गृहमार्जनं च प्रक्रमते। )

गणे०। ( स्वगतम् ) घरमज्जणं ताव ज्झडिति संपाअणीअं। अहुणा जेव्व समाविअ-गेन्दुअखेला भट्टिआरिआ बहिणिआए सह घरारामादो पच्चागमिस्सदि ! कज्जम्मि इमस्सि तु ण मह पाणिपाआ पसरन्ति। दुतिण्णाइं दिणाइं जाव वुड्ढो पदी मे दूरदो मं परिहरदि। ण जाणे कि वुत्तं। वयोवुड्ढत्तणेण कलहप्पिअत्तणं अस्स वड्ढदि। भोदु, कज्जं इदं कधंपि समावणीअं। अन्धआरेण तु घरब्भन्तरं दस्सिदुं न तिरइ। कधं अवरण्हम्मिव्व अअं अन्धआरो ! ( वातायनमभि दृष्टिं क्षिपति। ) कि मेहेहि आवुदं गअणं। अम्मो केनवि ओरुद्धा वादायणकवाटा, अदो जेव्व अन्धआरो। ( वातायनमुपेत्य नीशारमपसारयति। पूर्णचन्द्रं च पश्यन्ती भयसूचकं शब्दं कृत्वा वेपते। ) अरे को तुमं, कथमेव्वं पच्छण्णं चिट्ठसि ?

( गृहमार्जनं तावज्झटिति सम्पादनीयम्। अधुनैव समापितकन्दुकक्रीडा भर्तृदारिका भगिन्या सह गृहारामात् प्रत्यागमिष्यति। कार्येऽस्मिंस्तु न मे पाणिपादं प्रसरति। ( निश्वस्य ) द्वित्राणि दिनानि यावद् वृद्धः पतिर्मे दूरतो मां परिहरति। न जाने किं वृत्तम्। वयोवृद्धया कलहप्रियताऽस्य वर्धते। भवतु कार्यमिदं कथमपि समापनीयम्। अन्धकारेण तु गृहाभ्यन्तरं द्रष्टुं नैव शक्यते। कथमपराह्ण एवायमन्धकारः ! किं मेघैरावृतं गगनम् ? अहो केनाप्यवरुद्धौ वातायनकवाटौ। अत एवान्धकारः। अरे कस्त्वम्। कथमेवं प्रच्छन्नं तिष्ठसि ? )

पूर्ण०। ( सहासं विकृतस्वरेण ) न मुणसि मं ? पेम्मभिक्खू हं तुह किङ्करो। एहि पिए। अमअफंसेण सञ्जीवावेहि मह विरहसन्तत्तं हिअअं।

( न जानासि माम् ? प्रेमभिक्षुरहं ते किङ्करः। एहि प्रिये ! अमृतस्पर्शेन सञ्जीवय मे विरहतसन्तप्तं हृदयम्। ) ( गणेशजनन्याः करं गृह्णाति। )

गणे०। आ, मुञ्च मं भुअङ्ग। णो चे सम्मज्जणीए तुमं निव्विसं करिस्सं। ( गणेश-जननी सम्मार्जनीमुन्नमयति। ) ( आः, मुञ्च मां भुजङ्ग ! नोचेत् सम्मार्जन्या त्वां निर्विषं करिष्यामि। )

पूर्ण०। ( प्रसभं सम्मार्जनीमाच्छिद्य विकृतस्वरेण ) णेदिसं कठोरत्तणं तुमम्मि युज्जदि। ( नेदृशी कठोरता त्वयि युज्यते। )

गणे०। ( उच्चैःस्वरेण ) गज्जणसीह गज्जणसीह तुरिदं आअच्छ। दस्सू कण्णन्तेउरं पत्तो।

( गर्जनसिंह ! गर्जनसिंह ! त्वरितमागच्छ। दस्युः कन्यान्तःपुरं प्राप्तः। )

पूर्ण०। ( पत्न्या मुखं करतलेनावृत्य ) आ किं करोसि ? कधं पडिहारिणं आआरेसि ? णिउणं पस्स मं।

( आः किं करोषि ? कथं प्रतीहारिणमाकारयसि ? निपुणं पश्य माम्। )

गणे०। ( करतलरुद्धकण्ठस्वरा ) गज्जनसीह गज्जनसीह, सिग्घं आअच्छ। अक्कन्ता हं दस्सुणा ( गर्जनसिंह गर्जनसिंह ! शीघ्रमागच्छ। आक्रान्ताऽहं दस्युना। )

( ततः प्रविशति समुन्नतलगुडो गर्जनसिंहः। )

गर्ज०। मा भायाहि ! मा भायाहि। मयि दुवारं पालेन्तम्मि ससुरपुत्तस्स कस्स दुस्साहसमिदं ? ( पूर्णचन्द्रं गृह्णाति ) कधेहि रे दासीए पुत्ता को तुवं, कधं वा मं अतिक्कमिअ घरं पविट्ठोसि ?

( मा भैषीः ! मा भैषीः। मयि द्वारं पालयति श्वशुरपुत्रस्य कस्य दुःसाहसमिदम् ? कथय रे दास्याः पुत्र ! कस्त्वम्। कथं वा मामतिक्रम्य गृहं प्रविष्टोऽसि ? )

पूर्ण०। मुञ्च मं। पुण्णचन्दो हं णावरः। ( मुञ्च माम्। पूर्णचन्द्रोऽहं नापरः। )

( कण्ठस्वरेण संशयमापादिता गणेशजननी वैद्युतवर्तिकां प्रज्वलय्य तमवलोकयति, प्रत्यभिज्ञाय च लज्जया जिह्वां दशति। गर्जनसिंहोऽपि सशब्दं विहसति। )

गर्ज०। अरे पुण्णचन्द ! कुदो पहुदि दस्सुत्तणं सिदोसि ? ( पूर्णचन्द्रो निर्वाक् तिष्ठति। ) अन्तिके, किमपहिदं इमिणा तुह ?

( अरे पूर्णचन्द्र ! कुतः प्रभृति दस्युतां श्रितोऽसि। अन्तिके ! किमपहृतमनेन ते। )

गणे०। ( सलज्जम् ) न किंपि। मोचीअदु अअं।

( न किमपि। मुच्यतामयम्। )

गर्ज०। ( विहस्य ) अन्तिके, अहिणवा इयं पदिसम्भासणरीदी तुह।

( अन्तिके। अभिनवेयं पतिसम्भाषणरीतिस्ते। )

गणे०। को इध मह दोसो ? वुड्ढो अअं सहसा तरुणत्तणं पत्तो। एवम्भूदो अम णिअगब्भधारिणीए वि ण पच्चभिणाणीयेद किं पुण मए।

( कोऽत्र मे दोषः ? वृद्धोऽयं सहसा तारुण्यं प्राप्तः। एवम्भूतोऽसौ निजगर्भधारिण्याऽपि न प्रत्यभिज्ञायेत किं पुनर्मया ? )

गर्ज०। सच्चं तुहव्व मूढत्तणेण सङ्कडिदमिदं। ण एसा दूसणं अरिहदि। गच्छीअदि मए। मं अन्तरेण पडिहारभूमी सुहप्पवेसा वट्टदि। ( सत्यम्। पूर्णचन्द्र

तवैव मूढतया संघटितमिदम। नैषा दूषणमर्हति। गम्यते मया। मामन्तरेण प्रतीहार-भूमिः सुखप्रवेशा वर्त्तते। ( गर्जनसिंहो निष्क्रामति। )

पूर्ण०। ( सबाष्पगद्गदम् ) अम्मो लज्जा! मरणं एव्व मह वरं।

( अहो लज्जा! मरणमेव मे वरम्। ) ( स्वशिरः करतलेनाहते। )

गणे०। ( पतिहस्तं स्वहस्तेन गृहीत्वा ) समस्ससिहि समस्ससिहि! इध तु दोसो तव ज्जेव्व। कधं सहसा रूवपरिवट्टणे दुम्मदी इअं?

( समाश्वसिहि समाश्वसिहि! अत्र तु दोषस्तवैव। कथं सहसा रूपपरिवर्त्तने दुर्मतिरियम्?)

पूर्ण०। कधं हं वुड्ढो जरग्गओ त्ति तिरक्किदो तुए। तदपजसोणिराअरणस्स ज्जेव्व पसन्तणामस्स चिइच्छअस्स साहायअं पट्ठिदं। तद्दिण्णभेसजेण एव्व मह रूवन्तरं जादं। ( कथमहं वृद्धो जरद्गव इति तिरस्कृतस्त्वया? तदपयशो-निराकरणायैव प्रशान्तनाम्नश्चिकित्सकस्य साहायकं प्रार्थितम्। तद्दत्तभेषजेनैव मे रूपान्तरं जातम्। )

गणे०। भट्टिदारिआए समक्खं दड्ढमुखं इदं कधं पदंसणीयं?

( भर्तृदारिकायाः समक्षं दग्धमुखमिदं कथं प्रदर्शनीयम्? )

पूर्ण०। हा हदम्हि। णेदं चिन्तिदं मए।

( हा हतोऽस्मि। नैतच्चिन्तितं मया। )

गणे०। सुणुहि मह वअणं। आहूदेण वि ण तुए णिजमुखं दंसणीअं। जं करणीअं हं एव्व अज्ज करिस्सं।

( शृणु मे वचनम्। आहूतेनाऽपि न त्वया निजमुखं दर्शयितव्यम्। यत् करणीयमहमेवाद्य करिष्यामि। )

पूर्ण०। तुमं एव्व मह सरणं। एसो हं कण्णे पेसिअ सवधं करेमि ण पुण तुए कलहायिस्सं।

( त्वमेव मे शरणम्। एषोऽहं कर्णौ पिष्ट्वा शपथं करोमि न पुनस्त्वया कल-हायिष्ये। ) ( स यथोक्तं करोति। )

गणे०। ( विहस्य ) भरिदव्वा इअं पडिस्सुदी। अहुणा गच्छ तुमं। पाउआधणि-णाणुमीअदि भट्टिदारिआ वहिणिआए सह इध एवाअच्छदि।

( स्मर्तव्येयं प्रतिश्रुतिः। अधुना गच्छ त्वम्। पादुकाध्वनिनाऽनुमीयते भर्तृ-दारिका भगिन्या सहात्रैवागच्छति। )

( पूर्णचन्द्रो निष्क्रामति। गणेशजननी पुनरपि गृहमार्जने प्रवर्तते। ततः

प्रविशतः कन्दुकक्षेपणीहस्ते (Tennis or Badminton Racket) विद्युत्-प्रतिमा कुन्दकलिका च। कन्दुकक्षेपण्यौ मञ्चोपरि निधाय ते शयनीयद्वय-मध्यासाते।)

विद्यु०। भृशं परिश्रान्ताऽहमद्य कन्दुकक्रीडया। गणेशजननि! वैद्युतव्यजनं तावच्चालय। किमधुनाऽपि गृहकर्म ते नावसितम्? तिष्ठत्वेतत्। 'चा'-मिष्टान्नादिकमानीयताम्। क्षुधातुराऽहं कुन्दकलिका च। (गणेशजननी वैद्युतव्यजनं चालयित्वा निष्क्रान्ता।)

कुन्द०। प्रतिमे! विवाहार्थिनां प्रार्थनापत्राणि कदा नाम त्वया परीक्षितव्यानि? अद्यैव तावत् तत्प्राप्तेरन्तिमो दिवसः।

विद्यु०। किं कर्मैतदकृतं मन्यसे? सर्वाण्येव परीक्षितानि।

कुन्द०। ननु पृच्छामि कोऽसौ विडालो यस्य भाग्ये शिक्या त्रुटिता?

विद्यु०। न कोऽपि।

(गणेशजननी प्रविश्य चा-मिष्टान्नादिकं मञ्चोपरि स्थापयति। उभे शयनीयासने परित्यज्य मञ्चमुभयतः काष्ठासनयो निषद्य खाद्यादिकं भुञ्जाते।)

कुन्द०। किमधुना कर्त्तव्यम्? किं जनार्दनठक्कुर एव पुनराश्रयणीयः?

विद्यु०। घटकनिष्पाद्ये परिणये कि नाम वैचित्र्यम्? स्वयमपरीक्षिताय पुरुषाय कथमिव समर्पणीयं जीवनं यौवनं वा। अत एव मयाऽनन्यसाधारणः पन्था आस्थितः। अधुनाऽपि नाहं नैराश्यं गता। अपराह्णप्राप्तानि पत्राणि न मया परीक्षितानि। (भोजनं समाप्य पुनः पुन वैद्युतीमाह्वानघण्टिकां निनादयति।) गणेशजननि! पतिस्ते क्व गतः? कथमाहूतोऽपि नायाति।

गणे०। भट्टिदारिए न असू पकिदिट्ठो। (भर्तृदारिके! नासौ प्रकृतिस्थः।)

विद्यु०। तर्हि त्वमेव गत्वा ज्येष्ठतातसकाशात् सद्यः प्राप्तानि पत्राण्युपानय। (गणेश-जननी शून्यभोजनपात्राण्यादाय निष्क्रामति।)

कलिके! क्लान्तप्रायाऽहमनेन दुर्व्यसनेन। न जाने कोऽस्य परिणामो भवेत्।

कुन्द०। फलं तु स्वखातसलिले निमज्जनमेव। हितं चेदिष्यते कविवरवरणनिर्बन्धो-ऽयं सर्वथा परिहरणीयः।

(गणेशजननी प्रविश्य कानिचित् पत्राणि मञ्चोपरि निधाय निष्क्रामति। विद्युत्-प्रतिमा तानि निरावरणानि कृत्वा वाचयन्ती स्मयते।)

विद्यु०। सप्तैतानि प्रार्थनापत्राण्येव। एतान्यपि परीक्षणीयानि। मत्पार्श्व-मागम्यताम्।

कुन्द०। कथं मत्साहायकं प्रार्थ्यते ? पूर्वं तु तन्नापेक्षितम्।

विद्यु०। कलिके! भवति विज्ञतमः क्रमशो जनः। त्वदनुमोदनमन्तरेण पतिवरणाय प्रवर्तिष्ये कथमेवं मन्यते त्वया ? त्वत्साहायकमवश्यमेव स्वीकरणीयम्।

कुन्द०। नैतद् युज्यते स्वयंवराणाम्। मम कार्यान्तरमस्ति। तदहं गच्छामि। ( गन्तुं प्रक्रमते। )

विद्यु०। ( कुन्दकलिकां निवार्य ) क्व गच्छसि ? तिष्ठ तिष्ठ।

एवं निधाय सहसा व्यसनार्णवे मा-
मश्मीकृतात्महृदयाऽर्हसि नापगन्तुम्।
दृष्टिस्तवैव निपुणा मम दुःस्थिताया
निर्विघ्नतीरगमने भविता सहायः ॥१॥

कुन्द०। आः! मुञ्च माम्। पुरोभागिन्यहम्। मन्मते तिष्ठन्त्यास्ते ममेव चिरकौमारमेव नियतिः स्यात्।

विद्यु०। सत्यम्। अरक्षणीयासि त्वमिति जानन्तावपि कथं ते मातापितरौ निश्चिन्तावज्रं गलाधः प्रणयत इति मे विस्मयमावहति। अधुनैव पत्रेण तौ चेतयितव्यौ मया।

कुन्द०। अयि परहितैषिणि! मदर्थं कथमियं ते शिरोरुजा ?

विद्यु०। त्वदर्थं ? भ्रान्तासि त्वम्। अहमात्मसुखमेव चिन्तयामि।

निःसङ्गवृत्तिं तव दुर्गमेऽस्मिन् संसारकान्तारपथे स्मरन्त्याः।
आनन्दनो मे प्रियबाहुबन्धो रज्जूयमानो भवितार्तिहेतुः ॥२॥

कुन्द०। अतिदुर्वृत्ताऽसि त्वम्।

विद्यु०। अयि चण्डि! कथं कुप्यसि मे ? किमपकृतं मया तव ?

कुन्द०। नाहं कुपिता।

विद्यु०! इदमेव खल्वनुचितं वचनम्। यदि सत्यं स्निह्यसि मयि कर्मण्यस्मिन् सहायो मे भवितुमर्हसि।

कुन्द०। तथाऽस्तु। निर्बन्धस्ते दुरतिक्रमः।

विद्यु०। तत् किं विलम्बेन। पार्श्वस्था मे भव। ( कुन्दकलिका काष्ठासनं तस्याः पार्श्वमानीय निषीदति। )

विद्यु०। ( प्रार्थनापत्रमेकं परीक्षमाणा ) अयं नाम्ना पुलकप्रकाशः। अहो नाम्नैव मे शरीरं पुलकाञ्चितं विदधाति। आकृतिरपि चित्तचमत्कारिणी। पश्य पश्य ( चित्रं प्रदर्शयति। )

मुखं चन्द्रस्पर्धि स्मितमधुरमालक्ष्यदशनं
लसल्लज्जानम्रं नयनयुगलं सामिविकचम् ।
स्पृशन्तं पृष्ठाग्रं चिकुरनिकरं श्यामलरुचि
तनुं तन्वीं बिभ्रज्जयति तरुणश्चित्रलिखितः ॥३॥

किमस्य विद्यायाः परिमाणम् ?

विद्यु० । साहित्ये स्नातकोत्तरपरीक्षामुत्तीर्णः । किमस्य रूपं ते न रोचते ?

कुन्द० । मदभिमतं प्रकाशयितुं नोत्सहे । शङ्के तत्ते प्रीतिकरं न स्यात् । अतो न श्रोतव्यम् ।

विद्यु० । अवश्यमेव श्रोतव्यम् ।

कुन्द० । तर्हि श्रूयताम् । पश्चान्नाहं दूषणीयः ।

मन्ये वेधा रचयितुमना योषितं दोषशून्यां
पूर्वं सर्वं तदुपकरणं यत्नवानाजहार ।
पश्चात्तेन स्थविरवयसा विस्मृतिच्छन्नबुद्ध्या
नूनं सृष्टाऽनवहिततया मूर्तिरेतस्य यूनः ॥४॥

विद्यु० । अयि ! स्वजातिविद्वेषिणि ! कि नारीसौन्दर्यमुपेक्षणीयं मन्यसे ?

कुन्द० । किं तर्हि पुरुषान्वेषणेन ? नारीसुलभेन रूपेण न कोऽपि पुरुषः शोभते नाम । अधुना कथय किमसौ कविर्नवेति ।

विद्यु० । कविरेवायम् । श्रूयतामस्य काव्यम् । ( वाचयति )

'दृष्टा पूर्वं मयाऽसीन्न तव वरतनुर्धातुराश्चर्यसृष्टि-
र्दृष्टेयं कल्पना मे रचयति च ततः कृत्रिमां कान्तमूर्त्तिम् ।
यावत् प्रादुष्कृता मे तरुणि नयनयोरग्रतो भास्यसि त्वं
तावत्तारेव चन्द्रोदयसमयगता लप्स्यते सा विलोपम् ॥५॥

स्वर्गाज्ज्योतिष्मति ! त्वं मम सुकृतफलेनावतीर्णाऽसि पृथ्व्यां
मर्त्यो योग्योपदाभिः कथमहमधुना त्वां कविस्तोषयेयम् ।
मालेयं वाग्विसृष्टा सभयमुपहृता गृह्यते चेत्त्वया मे
कारुण्यं कारणं स्यान्न मम निरुपमे ! काव्यशिल्पाधिकारः ॥६॥

कुन्द० । साधु ! साधु ! अस्त्येवास्य काव्यशिल्पाधिकारः ।

विद्यु० । ततः किमयमेव मे वरणीयः ?

कुन्द० । अन्येऽपि प्रार्थिनो विचार्याः ।

विद्यु०। (अन्येषां चित्राणि पश्यन्ती) एते रूपेण पुलकप्रकाशस्य षोडशीमपि कलां न स्पृशन्ति। त्वमपि पश्य।

कुन्द०। (एकैकशश्चित्राण्यवलोकयन्ती)

आकेकराक्षः प्रथमोऽयमर्थी पृष्ठं द्वितीयस्य विषाणवक्रम्।
अयं तृतीयोऽतिविशीर्णकायस्तुर्यः कदर्यः खलु पीवरत्वात् ॥७॥

खर्वत्वदोषेण च पञ्चमोऽयं खर्वीकृतप्रोज्ज्वलरूपगर्वः।
षष्ठस्य नष्टाखिलकेशपुञ्जो मूर्धा विभातीव विशाष्पधन्वा ॥८॥

विद्यु०। हन्त सर्व एव त्वया निराकृताः। तत् किमहं करोमि? भवतु। किं पुरुषेण? त्वमेव मे पतीयस्व। (कण्ठहारं कुन्दकलिकायाः कण्ठेऽर्पयति।) एहि, तर्पय मे तापदग्धं हृदयम्। (कुन्दकलिकामुपगूहते।)

कुन्द०। आः! मुञ्च माम्। पुलकप्रकाश एव त्वया व्रियताम्। (आत्मानं मोचयति। ततः प्रविशति गणेशजननी पत्रमेकं च ददाति।)

गणे०। भट्टिदारिए, केणवि जणेण पत्तमिदं दुवारिअहत्थे पदिण्णं।
(भर्तृदारिके! केनचिज्जनेन पत्रमिदं दौवारिकहस्ते प्रदत्तम्।)

विद्यु०। किमसौ द्वारि तिष्ठति?

गणे०। णहि। (नहि।)

विद्यु०। बाढम्। गम्यतां त्वया। (गणेशजननी निष्क्रामति। विद्युत्प्रतिमा पत्रं निरावरणं विधाय वाचयन्ती स्मयते।)

कुन्द०। कस्य पत्रमिदम्?

विद्यु०। सुकुमारमित्रनाम्नः कस्यचित् कदाकारतरुणस्य। अयमपि विवाहार्थी। रसायनविद्यायां स्नातकोत्तरपरीक्षोत्तीर्णः। इदमस्य चित्रम्। (ददाति)

कुन्द०। विद्युत्प्रतिमे! दिष्ट्या वर्धसे। अयमेव ते वरो भवितुमर्हति।

विद्यु०। (सस्मितम्) अहो रुचिविकारः! कुरूपोऽयं मल्लोऽपि ते प्रीतिमावहति! आश्चर्यम्।

कुन्द०। किमुच्यते? कुरूपोऽयमिति!

प्रांशुना देहकाण्डेन तेजसा भास्वरेण च
अङ्गैश्च समविन्यासैः सौष्ठवेन विमण्डितैः ॥९॥

वदनेनानवद्येन प्रशस्तेनालिकेन च।
सङ्कल्पसूचकौष्ठाभ्यां सुन्दरभ्रूद्वयेन च ॥१०॥

पद्मपत्रनिभाक्षिभ्यां नसोन्नतिभृता तथा
आजानुलम्बिबाहुभ्यां वक्षसातिप्रसारिणा ॥११॥
प्रतिभाति दृशोर्मेऽयं सिंहसंहननो युवा ।
हृद्यामेव तनुं बिभ्रद् वीरो रस इव स्थितः ॥१२॥

अयमेव निर्विचारं वरणीयः ।

विद्यु० । अकविरपि ?

कुन्द० । अकविरपि । तथापि कविताश्रवणे समुत्सुकाऽहम् ।

विद्यु० । कथं श्रोष्यसि ? कविता नानेन प्रेषिता ।

कुन्द० । कथम् ?

विद्यु० । श्रूयतामस्य प्रार्थनापत्रम् । हेतुरपि तत्रैव व्यपदिष्टः । ( वाचयति )
"कवितानिदर्शनमन्तरेणैव पत्रमिदं ससाध्वसं प्रहीयते । विद्या मया स्तोकमर्जिता । कवितापदबन्धनं न जात्वनुशीलितं नाम । विद्याभ्यास-निविष्टचित्तस्य नासीन्मे तादृशविलासव्यसनायावसरः । जीवनसंग्रामबहुलेऽस्मिन् संसारे कविताप्रवणता दुर्बलचेतस एव लक्षणमित्यासीन्मे मतिः । क्षेत्र-विशेषेषु तत्प्रयोजनमस्तीति साम्प्रतं सम्यगवधार्यते । अतः सनिर्बन्धं प्रार्थ्यते मासावधिकः समयो मे देय इति । तदवसरे कविताविरचनाय विस्मृताहारनिद्रं यतिष्ये । पद्यकविता चेत् कथमपि मदायत्ता न भवेद् गविता-सृष्टये प्रयासो मया विधास्यते । गवितेति गद्यकवितायाः संक्षिप्तं रूपमित्यकथितमपि स्पष्टमेव ।"

इदं तावत् पत्रम् । अधुना किं नु वक्तुमिच्छसि ?

कुन्द० । पत्रमिदं सुरचितं रसात्मकञ्च । वाक्यं रसात्मकं काव्यमिति मनीषिणां सुप्रथितं मतम् । इदमेव पत्रं कवितानिदर्शनत्वेन गृह्यते चेत् कविवरणपणस्ते रक्षित एव स्यात् ।

विद्य० । ( विहस्य ) प्रतिक्षणं मतं ते परिवर्तितं भवति । छन्दोवर्जिता कविता च्छिन्नकुन्तलेव रमणी न जातु शोभत इति त्वया पूर्वमुक्तमासीत् । किमधुना तद् विस्मर्यते ?

कुन्द० । क्षेत्रे कर्म विधीयते । यदि मदुक्तिस्ते न रोचते, यथाप्रार्थितं समयोऽस्मै देयः ।

विद्यु० । तेन वृथा कालात्यय एव स्यात् । कविप्रतिभाशून्यो जनो जीवितकालेनापि कवितारचनायै नालम्भवति । अतः पुलकप्रकाशेनैव पुलकिता स्याम् ।

कुन्द०। "सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।" (ततः प्रविशति गणेशजननी।)

गणे०। भट्टिदारिए, सङ्गीदशिक्खावयित्ती दे पत्ता। (भर्तृदारिके! सङ्गीतशिक्षयित्री ते प्राप्ता।)

विद्यु०। कर्तव्यविमूढं मे मनः। भवतु। सङ्गीतानुशीलनायैव गन्तव्यमधुना। एहि कलिके! (सर्वा निष्क्रान्ताः।)

---

## षष्ठोऽङ्कः

(विश्वम्भरभैषज्यभवनम्। काष्ठासननिषण्णः प्रशान्तश्चिकित्साग्रन्थमधीते। ततः प्रविशति सुकुमारः।)

सुकु०। सखे! कथमेकाकी निषण्णोऽसि? क्व ते रोगिणः?

प्रशा०। सर्व एव गताः। उपविश्यताम्। (सुकुमारो निषीदति।) सखे! ननु पृच्छामि किं त्वया सत्यमेव विश्वनिवासे प्रार्थनापत्रं प्रेषितम्?

सुकु०। अथ किम्। यदाहमपश्यं सुरञ्जनतनयनालयेऽपि विवाहप्रसङ्गः समुपस्थापितस्तदैवाहममन्ये दास्यसहितपरिणयाद् दास्यरहितपरिणय एव वरमिति। ततोऽन्तिमदिवसस्यान्तिममुहूर्ते विश्वनिवासदौवारिकहस्ते प्रार्थनापत्रं निहितमासीन्मया।

प्रशा०। बुद्धिमानसि त्वम्।

सुकु०। उत्तरमपि मया लब्धम्।

प्रशा०। अनुकूलं वा प्रतिकूलं वा?

सुकु०। नाप्यनुकूलं नापि प्रतिकूलम्। परन्तु चित्ताकुलत्वकरमित्यत्र नास्ति कोऽपि संशयः। इदं तदुत्तरं श्रूयताम्।

गवामिव धियो येषां त एव 'गविता'-प्रियाः।
अतः स्वकविताशक्तिः सप्रमाणं प्रदर्श्यताम् ॥१॥
मासावधिः पुनः कालो दीयते च तदन्तरा।
अन्तरायमपाकृत्य साध्यतां पदबन्धनम् ॥२॥
तदन्ते स्वकृताभिश्च कविताभिः स्वयं सुधीः।
सायं सकायमागच्छ कन्यकाया निकेतनम् ॥३॥
परीक्षणीयस्तत्रैव विवाहार्थी जनस्तया।
तां परीक्षां समुत्तीर्णं वृणीतासौ पतिंवरा ॥४॥

प्रशा०। सखे! देहि ते पाणिम्। (पाणिना पाणिं पिनष्टि।) उत्तरेणानेन सूच्यते सिद्धिरदूरवर्तिनीति। दिष्ट्या मद्वचनादावेदनपत्रं त्वया प्रेषितम्। अधुना कविताबन्धने बद्धपरिकरो भव। शिवास्ते सन्तु पन्थानः।

सुकु०। कविताऽपि रचिता।

प्रशा०। सत्यं ब्रवीषि? तर्हि जितं त्वया। किं मया पूर्वमेव नोक्तं यन्मोदकभक्षिकेव कवितारचनाऽपि सुकरैवेति।

सुकु०। सुकरा? अतो दुष्करतरं कर्म न मया कृतपूर्वम्। (प्रशान्तस्य हस्तमादाय स्वमस्तके स्थापयति।) पश्य कर्मणानेन मे मस्तिष्कं निदाघमध्याह्ने नदीसैकतमिव दुःसहतापं संवृत्तम्। (प्रशान्तस्तूष्णीमुत्थाय पार्श्वप्रकोष्ठमभिगच्छति।) क्व गम्यते त्वया?

प्रशा०। (परावृत्तमुखः) क्षणं प्रतीक्षस्व। अयमहमागच्छामि। (निष्क्रम्य पुनः काचभाजनस्थं सुगन्धिद्रवविशेषमादाय प्रविशति। स्तोकं च करतले प्रक्षिप्य तेन सुकुमारमस्तकं लिम्पति।)

सुकु०। निवर्तस्व। निवर्तस्व। (त्यक्तासनो विरक्तिं नाटयन्) आः किं करोषि? केशरचना मे विषमीकृता।

प्रशा०। सति प्रयोजने चिकित्सार्थं मस्तकमुण्डनमपि कार्यम्। उत्तप्तमस्तिष्केण किं नाम प्रसूतमित्यधुना द्रष्टुमिच्छामि।

सुकु०। पश्य। (कवितापत्रं ददाति। प्रशान्तस्तत् स्वगतं पठित्वा विकृतस्वरेणाङ्गभङ्ग्या च पुनः पठति।)

प्रशा०। त्वं राजसे पल्लविनीव वल्ली तुच्छोऽहमासे तृणगुच्छतुल्यः।
यदस्ति नौ दुस्तरमन्तरं तन्न मेलनं सम्भवतीह लोके ॥५॥

सुकु०। (प्रशान्तहस्तात् कवितापत्रं प्रसभमाच्छिद्य) निरयं गच्छ त्वम्। हन्त! करुणरसाढ्येयं कविता पाठदोषेण त्वया वैकल्यमापादिता! पाठापटुना त्वया नेयं पाठ्या। अहमेव वाचयामि। (करुणस्वरेण स्वयं वाचयति)

निरन्तरैस्तीव्रमनोजतापैरुद्वेजितो लोचनकन्दरान्मे।
बहिर्गतोऽहिर्वहदश्रुमूर्त्या नासौ वशं मे कथमप्युपैति ॥

प्रशा०। (उच्चैर्विहस्य) विरम विरम सखे! उद्वेजितस्ते कवितया ममाश्रुभुजङ्गोऽपि नयनगुहाया निःसरति!

सुकु०। (समन्युः कवितापत्रं खण्डशश्छित्त्वा) त्यक्तं मया व्यवसितमिदम्। तवैव निर्बन्धेन वृक्षारोहणे प्रवृत्तोऽहम्। त्वञ्चेदधुना निःश्रयणीमपहरसि किं वृथा श्रमेण?

प्रशा० । ( सुकुमारं करयोर्धृत्वा ) सखे ! मर्षय माम् । मा निरुत्साहो भूः । अध्यवसायिनः किमसाध्यं नाम ?

सुकु० । यत्सत्यं मनसि भावो मे न स्फुरति । मया सा स्वचक्षुषा न जातु दृष्टा । अदृष्टामुद्दिश्य काव्यरचनं न कथमपि सम्भवति ।

प्रशा० । कथं वा सा दृष्टा भवेत् ? कानिचिद्दिनान्यत्रैव भैषज्यभवने स्थीयते चेदन्तरान्तरा विश्वनिवासालिन्दगतां तां द्रष्टुं शक्नुयाः ।

सुकु० । चपलादीप्तेरिव तस्याः क्षणिकदर्शनेन नयनमेव दूयेत । नान्यत् किमपि लभ्यं स्यात् ।

प्रशा० । ( विमृश्य ) यदि केनाप्युपायेन तस्याश्चित्रमेकमलप्स्यत ।

सुकु० । ततः किमभविष्यत् ?

प्रशा० । ततः ।

चित्रार्पिते विकसदम्बुजशोभमाने
तस्याः स्मितोज्ज्वलमुखे तव बद्धदृष्टेः ।
स्वान्तोद्भवो गिरिवरोदरनिर्झराभोऽ-
स्यन्दिष्यताप्रतिहतं कवितामृतोत्सः ॥६॥

सुकु० । चौर्यमन्तरेण कथं चित्रसंग्रहो भवेत् ?

प्रशा० । सति सङ्कल्पे व्याघ्रीदुग्धमपि न दुर्लभं किं पुनश्चित्रम् ? (प्रविशन्तं पूर्णचन्द्रं निर्दिश्य ) तत्राप्यसौ विश्वनिवासभृत्यः पूर्णचन्द्र एव मे सहायो भवेत् । ( पूर्णचन्द्रः प्रविशति । ) एहि पूर्णचन्द्र ! पुरुषायुषजीवी भविष्यसि । त्वामेवाहं कीर्तयन्नासम् ।

पूर्ण० । ( प्रणम्य ) अज्ज महइए विवइए निवडिदो हं । ( आर्य ! महत्यां विपदि निपतितोऽहम् ) ।

प्रशा० । मन्ये गणेशजनन्या पुनरपि कलहो जातः । किं केशभेषजस्य प्रभावो विलीनः ?

पूर्ण० । णहि णहि । गणेशजणणी दन्तविअणाए मुहिज्जन्ती वट्टदि । ( नहि नहि । गणेशजननी दन्तवेदनया मुह्यन्ती वर्तते । )

प्रशा० । मयि स्थिते चिन्तया न ते प्रयोजनम् । ( उच्चैःस्वरेण ) पतितपावन ! दन्तशूलभेषजमानीयताम् । पूर्णचन्द्र ! भर्तृदारिकायास्ते विवाहस्य का वार्ता ?

पूर्ण० । केणवि कारणेण विआहो विलंबिदो विअ पडिभादि । ( केनापि कारणेन विवाहो विलम्बित इव प्रतिभाति । ) ( पतितपावनः काचाधारस्थं दन्तशूल-भेषजमुपनीय मञ्चोपरि स्थापयति । )

प्रशा०। पूर्णचन्द्र! गृह्यतामिदम्। दिवसस्य द्विस्त्रिर्वा दन्तमूले तूलिकया प्रयोज्यम्।

पूर्ण०। केत्तिअं अस्स मुल्लं ? (कियदस्य मूल्यम् ?)

प्रशा०। किमपि न देयं त्वया।

पति०। एवं विना मूल्यं महार्हाणि भेषजानि दीयन्ते चेद् भैषज्यभवनमिदमचिरेणैव कथैकशेषं जायेत।

प्रशा०। सत्यमुक्तं त्वया। परन्तु पूर्णचन्द्रोऽयं मे बहुमतः प्रातिवेशिकः। किमस्मान्मूल्यमादाय प्रत्यवायभाग् भवेयम् ? नैतन्न्याय्यम्।

प्रशा०। यथाभिलषितं क्रियताम्। तथापि हितैषिणा मया यथोचितं वक्तव्यमेव।

प्रशा०। तदहं जानामि।

पति०। कृतकसुप्तं प्रबोधयितुं न कोऽपि प्रभवति। (समन्युर्निष्क्रामति।)

पूर्ण०। अज्ज नमो दे। अहं दाव गच्छामि। (आर्य! नमस्ते। अहं तावद् गच्छामि।) (गमनोन्मुखो भवति।)

प्रशा०। क्षणं स्थातव्यं त्वया। (पूर्णचन्द्रः प्रत्यावर्तते।) पूर्णचन्द्र! त्वया मे कश्चिदुपकारः साधनीयः।

पूर्ण०। (गद्गदस्वरेण) असज्झं खु साहिदं भवब्भेसजेण। पत्तीपीदी पुणोवि मए लद्धा। वुच्चीअदु दाव किं मए करणीअंत्ति। भवदत्थे पाणान् पि चजेअं। (असाध्यं खलु साधितं भवद्भेषजेन। पत्नीप्रीतिः पुनरपि मया लब्धा। उच्यतां तावत् किं मया करणीयमिति। भवदर्थे प्राणानपि त्यजेयम्।)

प्रशा०। साधु साधु। परन्तु मदुपकारं चिकीर्षसि चेत्, जीवनं त्वया सयत्नं रक्षणीयम्। सावधानं श्रूयताम्। (सुकुमारं निर्दिश्य) अयं मे सखा गत्यन्तराभावाच्चित्रकरवृत्तिं श्रितः। तत्रापि महदानुकूल्यमन्तरेण सुप्रतिष्ठा नाधिगम्यते। त्वद्भर्तृदारिका चेदनेन चित्रं कारयति, भाग्यमस्य परिवर्तितं स्यात्। एतदेव त्वया करणीयम्।

पूर्ण०। एत्तिअमेत्तं ? अहुणा जेव्व हं भट्टिदारिअं वोच्छं। (एतावन्मात्रम् ? अधुनैवाहं भर्तृदारिकां वक्ष्यामि।) (गमनोन्मुख आस्ते।)

प्रशा०। तिष्ठ तिष्ठ। किं वक्ष्यते त्वया ?

पूर्ण०। एदं जेव्व बूमि—विस्सम्भरभेषज्जभवणचिइच्छअस्स मेत्तं—(एतदेव ब्रवीमि—"विश्वम्भरभैषज्यभवनचिकित्सकस्य मित्रम्" इत्यर्धोक्ते)।

प्रशा०। नहि नहि। मन्नामकीर्तनेन सर्वं प्रनष्टं स्यात्।

पूर्ण०। (हतोद्यमः) तरिहि ण जाणे किं णु मए वत्तव्वंत्ति। मव्वअणं सा ण सुनि-

स्सदि। ( तर्हि न जाने किं नु मया वक्तव्यमिति। मद्वचनं सा न श्रोष्यति। )

प्रशा०। कथं न श्रोष्यति? किमसौ न स्निह्यति त्वयि?

पूर्ण०। सिणिज्झदि ज्जेव्व। तधवि सा चे कधेदि पत्तणचित्तअरे णिरञ्जणे ठिदे न मे णविएण पयोअणंत्ति किं उत्तरं मए पदेअं। ( स्निह्यत्येव। तथापि सा चेत् कथयति प्राक्तनचित्रकरे निरञ्जने स्थिते न मे नव्येन प्रयोजनमिति, किमुत्तरं मया प्रदेयम्? )

प्रशा०। कोऽयं निरञ्जनो नाम?

पूर्ण०। चन्दअलाचित्तालअस्स चित्तअरो अमू। तेण गहीदचित्ताए भट्टिदारिआए मासो वि ण विअदीदो। ( चन्द्रकलाचित्रालयस्य चित्रकरोऽसौ। तेन गृहीत-चित्राया भर्तृदारिकाया मासोऽपि न व्यतीतः। )

प्रशा०। यथाऽहं पश्यामि, त्वया दुःसाधमिदं कर्म। तद्गम्यतां त्वया। ( पूर्णचन्द्रः प्रणम्य निष्क्रामति। ) सखे! वृथैवास्मै विना मूल्यं भेषजमदीयत। उपायान्तरं मया चिन्तनीयम्।

सुकु०। अहो ते मिथ्याभाषणपाटवम्! न मे चतुर्दशपुरुषाणां कोऽपि चित्रकर आसीत्। तथापि त्वयाहं चित्रकरत्वमापादितः। किं निरर्गला ते रसना?

प्रशा०। आत्मनो हिताय न मे मिथ्याभाषणेन कापट्येन वा किमपि प्रयोजनम्। त्वच्छ्रेयसे तु च्छलं वा बलं वा कौशलं वा न किमपि मया हेयम्। यस्यार्थेऽस्मिन् कर्मणि मे प्रवृत्तिः सोऽपि मां दूषयतीत्येव मे दुःखकारणम्। ( निश्वसिति )

सुकु०। सखे मर्षय माम्। तव सौहार्दमधिगम्य धन्योऽस्मि संवृत्तः। ( पतित-पावनः प्रविशति। )

पति०। आर्य! भवतारणस्य भवनाद् दूरश्रुतियन्त्रेणाहूयते भवान्। अधुनैव तत्र गन्तव्यमित्यपि कथितम्।

प्रशा०। सखे! रोगिदर्शनाय मया गन्तव्यम्।

सुकु०। मयापिच्छात्राध्यापनाय। ( सर्वे निष्क्रान्ताः। )

---

## सप्तमोऽङ्कः

( विश्वनिवासावरोधगृहम्। मध्येप्रकोष्ठं मञ्चमुभयतः काष्ठासनद्वयम्। एकान्ते विततशयनः पर्यङ्कः। काष्ठासनस्था विद्युत्प्रतिमा कालिदासस्याभिज्ञानशकुन्तलं नाम नाटकं पठति। )

विद्यु०। "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥"

अहो महाकवेरन्तर्दृष्टिः! (सहसा दूरतो वेणुध्वनिः श्रूयते। पुस्तकं मञ्चोपरि निधाय विद्युत्प्रतिमा साभिनिवेशं शृणोति।)

अहो सुमधुरोऽयं वंशीरवो मामुत्कण्ठयत्येव। तद्वातायनमुपसृत्य श्रोतव्यम्। (यथोक्तं करोति। वंशीनिनादो विरमति। विद्युत्प्रतिमाऽपि प्रत्यावृत्य पुनर्निषीदति।) निर्बन्धताऽहं कथमेवं समुत्सुकाऽस्मि संवृत्ता? तत् किं मयापि वंशीरवं निशम्य भावस्थिरं किमपि जननान्तरसख्यं स्मर्यते? मनो मे विहङ्गवद् गगनमुत्पतितुमिच्छति। हृदयतन्त्रीरप्यपरिचितपूर्वेण रागेण मुखरा जायते। किं करोमि? भवतु। गीतानुशीलनमेव वरम्।

(गायति।) रजनी-व्यतिकरभीतः
रविरयमस्तं चलति विहस्तं
वाति च पवनः शीतः।
सुलभवितानं सुमधुरतानं
मनसि च मोहं परितन्वानं
कोऽयं रचयति वंशीस्वानं
स्वप्नभुवनमुपनीतः॥
रहसि च तदुरसि कृतचिरवासा
सम्प्रति वेणुस्वरधृतभाषा
स्फुरति किमर्थं प्रबलदुराशा?
कथं न वाऽसौ प्रीतः॥

कथं चिरयत्यसौ कुन्दकलिका? एवं निःसङ्गस्थितिर्मां दुनोति। भवतु। अहमेव तदन्तिकं गच्छामि। (आसनादुत्थाय द्वाराभिमुखं गच्छति। प्रविशति कुन्दकलिका।) हला नृशंसाऽसि त्वम्।

कुन्द०। कथम्?

विद्यु०। एतावान् कालः क्व गमितस्त्वया? किं न जानासि त्वया विनाकृताया निमेषोऽपि मे युगायते?

कुन्द०। अलं फल्गुवचनेन? गीतिचर्चायां सुष्ठु निमग्नाऽसि त्वम्। गानं ते

ममापि श्रुतिपथं प्रविष्टम्। तत्र तु प्रत्यग्र एव रागः परिस्फुट आसीत्। ततो मन्ये नवानुरागाऽसि। सत्यं ब्रूहि कमभिस्यन्दते ते प्रेमप्रवाहः, सुकुमारमुत पुलकम्?

विद्यु०। अकविं सुकुमारं निःसंज्ञं स्थाणुमिवाहं मन्ये।

कुन्द०। तर्हि कविकुलतिलकं पुलकमेव वृणीष्व। इयं कविप्रीतिस्ते सर्वानर्थमूलं भवेत्।

विद्यु०। कथं कवावित्थं जातक्रोधाऽसि।

कुन्द०। किं नाम साध्यं कविना?

विद्यु०। किं न साध्यम्?

ये नाम जीवनमरौ विरसेऽभिरामं
सद्यः प्रसूनविपिनं स्वरसैः सृजन्ति।
स्वर्गायते क्षितिरियं सुधया च येषां
धन्यास्त एव कवयो नववेधसस्ते ॥१॥

कुन्द०। एवं सत्यपि, कथं कविरेव पतिरूपेण प्रार्थ्यते। अन्येषामपि कविताः सुखमास्वादयितुं शक्याः।

विद्यु०। नैवं वक्तव्यम्। कविवधूर्भवेयमिति मे चिरन्तनः स्वप्नः। सोऽद्यापि मां बलवदाकर्षति। पणभङ्गाय न मां प्ररोचयितुमर्हसि।

( पूर्णचन्द्रः प्रविश्य पत्रमेकं च दत्त्वा निष्क्रामति। छिन्नावरणं तत् पठित्वा विद्युत्प्रतिमा कलकण्ठं विहसति। )

कुन्द०। अहो ते प्रमोदातिशयः! कस्य पत्रमिदम्?

विद्यु०। अनुमीयताम्।

कुन्द०। मन्ये विवाहसंश्लिष्टमेव।

विद्यु०। ( सस्मितम् ) चतुराऽसि त्वम्।

कुन्द०। कस्तावत् पत्रलेखकः? सुकुमार उत पुलकः?

विद्यु०। नैतत् प्रकाशमर्हति।

कुन्द०। मत्सकाशे किमप्रकाश्यमस्ति ते?

विद्यु०। न किमपि। इदन्तु गुह्यादपि गुह्यतरम्।

कुन्द०। अलं परिहासेन। नितरां श्रवणोत्सुकाऽहम्।

विद्यु०। निजपरिणयं प्रति कथमीदृशमशोभनं कौतूहलम्?

कुन्द०। किं ब्रवीषि? पत्रमिदं मद्विवाहसंश्लिष्टम्। तदवश्यमेव मया द्रष्टव्यम्। ( सहसा विद्युत्प्रतिमामाक्रम्य पत्रमाच्छेत्तुं व्यवस्यति। साऽपि

कौशलेनात्मानं मोचयित्वा पत्रहस्ता कलहास्येन धावति। कुन्दकलिका तामनुसृत्य दृढं बाहुभ्यां गृह्णाति। उभयोः संघर्षः। )

विद्यु०। आः! मुञ्च मुञ्च मां रणचण्डिके। विस्रस्तवासा विगलितकबरीबन्धाऽहं संवृत्ता। पत्रमिदं ममैव। कथं त्वां दर्शयिष्यामि। ( आत्मानं मोचयित्वा केशवेषादिकं संस्करोति। व्यर्थकामा कुन्दकलिका समनःक्षोभमश्रूणि मुञ्चति।)

विद्य०। ( कुन्दकलिकां साश्रुनयनां पश्यन्ती ) हा धिक्! किं रोदिषि त्वम्? पत्रमिदं त्वत्पित्रा मे लिखितम्। गृह्यतामिदम्। ( पत्रं ददाति। कुन्दकलिका तत् भुग्नाकुञ्चितं निष्पिष्य गृहकुट्टिमे निक्षिपति। विद्युत्प्रतिमा तत् पुनरप्युद्धरति। )

कुन्द०। न मे पत्रेण प्रयोजनम्।

विद्यु०। तदहमेव वाचयित्वा श्रावयामि। "शुभाशीर्वचनपुरःसरा विज्ञप्तिरियम्। वत्से प्रतिमे!"

कुन्द०। ( आत्मनः कर्णरन्ध्रे तर्जनीभ्यां पिधाय ) न मे श्रवणेन प्रयोजनम्।

विद्यु०। अहो ते कोपातिशयः! इयमहं ते पादयोः पतामि। मर्षय माम्। ( यथोक्तं करोति। कुन्दकलिका सलज्जं तामुत्थापयति। )

कुन्द०। आः! नैवं कर्त्तव्यम्। उत्तिष्ठोत्तिष्ठ। नाहं कुपिता।

विद्यु०। सत्यम्?

कुन्द०। सत्यम् सत्यम् सत्यम्।

विद्यु०। तर्हि सकृत् स्मयस्व।

कुन्द०। ( स्मयमाना ) अहो निर्बन्धः!

विद्यु०। देवि! प्रसन्नाऽसि चेद् वरं मे देहि।

कुन्द०। कतरं वरं प्रार्थयसे? सुकुमारमुत पुलकम्?

विद्यु०। नानयोरेकतरमपि। केवलं पत्रमिदं श्रोतव्यम्।

कुन्द०। तथाऽस्तु।

विद्यु०। आः! निरुत्कण्ठाऽहमधुना। श्रूयताम्।

( वाचयति ) वत्से प्रतिमे! युष्मत्पत्रं प्राप्तवतामस्माकं बहूनि तावद्दिनानि गतानि। मन्ये वयं विस्मृता एव युष्माभिः। अचिरेणैव कुशलवार्तासमन्वितं पत्रोत्तरमवश्यमेव देयम्। वत्से! कालोऽयं ते समधिगतविद्याया गृहस्थाश्रम-प्रवेशस्य। भ्रात्रा चिरञ्जीवेनात्र सम्यगवहितेन भवितव्यम्। अतस्तस्मा अपि पत्रान्तरं लिख्यते। त्वदनुरूपाय वराय सम्प्रदानं ते भवतीति वार्ता शीघ्रमेव नः श्रवणसुखं जनयतु।

कुन्द० । अयि मिथ्याभाषिणि ! पत्रमिदं तवैव विवाहसंश्लिष्टं न मम ।

विद्यु० । कथं नैराश्यं गच्छसि ? शेषमपि शृणु । "कुन्दकलिकाऽपि विवाहयोग्यं वयः प्राप्ता । तस्या अपि पात्रसात्करणमधुना चिन्तनीयम् । अत्र विषये किञ्चित् पुरावृत्तं ते कथनीयम् । जानास्येव यज्जीविकार्थं पञ्चनदप्रदेशागतानां नो वर्षदशकं व्यतीतम् । ततः प्राक् श्रीरामपुरपत्तनमधिवसामः स्म । तदा विश्वम्भरनामा मे कश्चिन्निकटतमः प्रतिवेशी स्वपुत्रार्थं कुन्दकलिकां याचितवान् । अहमपि सानन्दं तत्र सम्मतोऽभवम् । तदा तयो र्द्वयोरप्यप्राप्तवयस्कतया परस्ताद् यथाकालं स विवाहो भावीति सङ्कल्पितमासीत् । विश्वम्भरस्याकल्पित-परलोकयात्रया तथाऽस्माकं प्रवासगमनेन च स सङ्कल्पस्तदा किमपि फलं नासूत ।

"तवानुकूल्येन कुन्दकलिकाऽधुना पर्याप्तविद्यामधिगता । अतस्तत्परिणये दीर्घ-सूत्रता न युज्यते । विश्वम्भरतनयः प्रशान्तश्चिकित्साविद्यापारङ्गमो वधू-हट्टरथ्यायां क्वापि पितृनामाङ्किते स्वप्रतिष्ठिते भैषज्यभवने चिकित्सकवृत्ति-मनुभवतीति लोकमुखात् साम्प्रतमेव श्रुतं मया । स एव प्रागन्वेष्टव्यस्त्वया । स चेदद्याप्यकृतदार एव वर्तते, पित्रभिप्रायं च स्मरति, विवाहे च सम्मतिं प्रकाशयति, तस्मा एव कुन्दकलिका प्रदेया । सर्वं चेदनुकूलं भवेद् विवाह-तिथिस्त्वयैव निर्धारणीया । त्वत्पत्राद्विदितसर्ववृत्तान्ता वयमपि वङ्गदेशं गत्वा शुभानुष्ठानं तवैव भवने निष्पादयितुमिच्छामः । तवापि परिणयविधिस्तदैव भवत्विति श्रीहरिं प्रार्थयामहे । कुशलिनो वयम् । शुभं वो भूयात् । अलमतिविस्तरेणेति शुभानुध्यायिनः श्रीज्योतिरिन्द्रवर्मणः ।"

कलिके ! पत्रमिदं श्रुतं त्वया । किं नु मया करणीयमधुना ?

कुन्द० । ( सलज्जम् ) नाहं जानामि । निराग्रहाऽहमत्र ।

विद्यु० । निराग्रहा ? उल्लासेन नृत्यति ते मनः ।

सुष्ठु त्वं शोभसे मुग्धे ! क्षुधामन्तःप्रधुक्षिताम् ।
बिभ्राणा तु मुखेनैव प्रेक्षणीयां ह्रियः श्रियम् ॥२॥

धूर्ताऽसि त्वम् । प्रशान्तेन ते विवाहः पूर्वमेव सङ्कल्पित इति जानत्यापि त्वया न मे कथितम् । अहो स्वार्थपरता !

कुन्द० । तदङ्गस्पर्शेन शपे पितृसङ्कल्पो न मया विदितपूर्वः ।

विद्यु० । भवतु । अधुना तु सुविदित एव । वरोऽपि ते सन्निहितः । तदलं काल-[क्ष]पेण । गान्धर्वविधिनैव विवाहो भवतु ।

कुन्द० । (सलज्जम्) नाहं जानामि । अपेहि त्वं दुर्वृत्ते !

विद्यु० । (सस्मितम्) अहं तु सम्यग् जानामि । (दूरश्रुतियन्त्रमादत्ते ।)

कुन्द० । अयि सर्वनाशिनि ! किं व्यवसीयते त्वया ?

विद्यु० । अधुनैव ज्ञातं भवेत् । (दूरश्रुतियन्त्रेण संलपति ।) ह्यालो ! ह्यालो ! ज्येष्ठतात ! विद्युत्प्रतिमाऽहं कथयामि । अत्याहितं खलु जातम् । त्वरितमत्र पूर्णचन्द्रेण सहागम्यताम् । किमापतितमिति ? तत्तु समक्षमेव वक्तव्यम् । (दूरश्रुतियन्त्रं तदाधारे निधत्ते ।) (सस्मितम्) कलिके ! श्रूयताम् । यन्मयाऽध्यवसीयते यदि तत् प्रतिहन्तुं चेष्टसे मुखमपि ते न द्रक्ष्यामि ।

(ततः प्रविशतश्चिरञ्जीवः पूर्णचन्द्रश्च ।)

(संभ्रान्तेव) ज्येष्ठतात ! मस्तिष्कं मे विघूर्णते । किंकर्तव्यतामूढाऽहं संवृत्ता ।

चिर० । (सोत्कण्ठम्) किमापतितं नाम ?

विद्यु० । इयं कुन्दकलिका सहसा हृदयवेदनयाऽभिभूता ।

कुन्द० । आः किं प्रलपसि ? ज्येष्ठतात ! नास्या वचनं—(इत्यर्धोक्ते)

विद्यु० । कलिके ! तूष्णीं स्थातव्यं त्वया । हृद्रोगः कथमपि नोपेक्षणीयः ।

कुन्द० । क्व मे रोगः ?

विद्यु० । तन्निर्णयायैव चिकित्सकेन प्रयोजनम् ।

चिर० । सत्यमाह प्रतिमा । उपक्रम एवाश्वत्थतरोरिव रोगस्य मूलमुत्पाटनीयम् । (विद्युत्प्रतिमां प्रति) वत्से न भेतव्यम् । दूरश्रुतियन्त्रेणाहूतो नो गृहचिकित्सकः कपिञ्जलमुकुटमणिरधुनैवागतः स्यात् ।

विद्यु० । नहि नहि । दूरवास्तव्योऽसौ कपिञ्जलः । द्रागेव वेदनोपशमः कार्यः । सन्निहितः कोऽपि चिकित्सक आहूयताम् ।

पूर्ण० । रच्छाए विवरीदपस्सम्मि पसन्तणामो चिइच्छओ वट्टदि । आणवेदि चे भट्टिदारिआ तं हं अहुणा जेव्व आणेअं । (रथ्याया विपरीतपार्श्व एव प्रशान्तनामा चिकित्सको वर्तते । आज्ञापयति चेद् भर्तृदारिका तमहमधुनैवानयेयम् ।)

चिर० । अतितरुणोऽसौ प्रशान्तः । नास्ते तस्य काऽपि बहुदर्शिता ।

पूर्ण० । तरुणो वि सक्खं धन्वन्तरी अमू विसेसदो विअणाणिवारणे । गणसजणणीए दन्तविअणा तेण मन्तबलेण विअ णिराकिदा । (तरुणोऽपि साक्षाद्धन्वन्तरिरसौ विशेषतो वेदनानिवारणे । गणेशजनन्या दन्तवेदना तेन मन्त्रबलेनेव निराकृता ।)

विद्यु०। ज्येष्ठतात ! असौ वेदनाचिकित्सायामभिज्ञः प्रशान्त एवागच्छतु, कपिञ्जलः पश्चादेनां द्रक्ष्यति।

चिर०। वत्से ! यदभिप्रेतं त्वया तदेव भविष्यति। एहि पूर्णचन्द्र ! (चिरञ्जीवः पूर्णचन्द्रश्च निष्क्रामतः।)

कुन्द०। विचित्रेयं व्यवस्था। रोगं बिनाऽपि तच्चिकित्सा !

विद्यु०। नीरोगाऽसि त्वमिति तवाऽपि विदितं ममाऽपि। जलमवतीर्णया सन्तरणान्न भेतव्यम्। साम्प्रतं यथाप्राप्तमनुष्ठीयताम्। रोगिणीभूमिकामाश्रित्य पर्यङ्कमारुह्य त्वया शयितव्यम्।

कुन्द०। किमहं ते सूत्रनियन्त्रिता पाञ्चालिका ? नाहं कदाऽपि शयिष्ये।

विद्यु०। (सानुनयम्) भगिनि ! न मां ह्रेपयितुमर्हसि। तव पित्रादेशेनैव मे प्रवृत्तिरस्मिन् कर्मणि। अयि पितृवत्सले ! पितृकार्यं व्याहन्तुं नार्हसि।

कुन्द०। नेदं पितृकार्यम्। अपि नाम ते कामचारोऽपि मया सहनीयः ? सति प्रयोजने रोगिणीभूमिका त्वयैव गृह्यताम्। अहं तावद्गच्छामि। (गमनोन्मुखी वर्तते।)

विद्यु०। (तां निवार्य) न गन्तव्यं त्वया। (पादुकाध्वनिमाकर्ण्य) अयमसावागच्छति। त्वरितमेहि कलिके ! त्वरितमेहि। नागच्छसि चेत् पादयोस्ते पुनः पतिष्यामि। (विचेष्टमानां कुन्दकलिकां प्रसभमाकृष्य पर्यङ्कं नयति तदुपरि च शाययति। शरीरञ्च तस्याः प्रावारकेणाच्छादयति। काष्ठासनमेकं पर्यङ्कपार्श्वे निधत्ते। पश्चात् प्रशान्तमुखच्छविः पुनरासनान्तरे निषीदति। ततः प्रविशति चर्मपेटिकां वहन् पूर्णचन्द्रः। कुन्दकलिका चेलाञ्चलेन मुखमप्यावृणोति।)

पूर्ण०। एदे चिइच्छअपाआ पत्ता। (एते चिकित्सकपादाः प्राप्ताः।)

(ततः प्रविशति प्रशान्तः। विद्युत्प्रतिमा निजासनादुत्थाय तं संवर्धयति। ततः शिष्टाचारविनिमयः।)

विद्यु०। स्वागतम् ! (पर्यङ्कपार्श्वस्थमासनं निर्दिश्य) इदमासनम्, निषीदतु भवान्। (प्रशान्तो यथोक्तं करोति।) पूर्णचन्द्र ! क तावज्ज्येष्ठतातः ?

पूर्ण०। वेसइअपुत्थआइं यधट्ठाणं णिहाय तुरिदं जेव्व आअच्छदि अमू। (वैषयिकपुस्तकादीनि यथास्थानं निधाय तूर्णमेवागच्छत्यसौ।)

विद्यु०। त्वमपि गच्छ। ज्येष्ठतातं ब्रूहि स्वकर्मण्येव वर्तितव्यं तेन। यद्वक्तव्यं चिकित्सकमहोदयाय तदहमेव वक्तुमलम्। (पूर्णचन्द्रो निष्क्रामति।)

प्रशा० । क तावन्मे रोगी ?

विद्यु० । रोगिणीति वक्तव्यम् । ( पर्यङ्कशयानां कुन्दकलिकां निर्दिश्य ) आर्य !
इयं मे भगिनी सहसा हृदयवेदनयाऽऽक्रान्ता वाचमपि व्याहर्तुं न क्षमा ।

प्रशा० । कथमियं मुखमप्यावृत्य शेते ? नैतत् समुचितम् ।

विद्यु० । आर्य ! भीरुप्रकृतिर्लज्जाशीला चेयम् ।

प्रशा० । अत एव कुलाङ्गनानां चिकित्सा नैव सुकरा ।

शङ्का-शालीनतायोगात् प्रायोऽन्तःपुरवासिनी ।
यथैव रम्यतां धत्ते तथैवानभिगम्यताम् ॥३॥

विद्यु० । ( सस्मितम् ) सौम्य ! कुतो लब्धेयमभिज्ञता ? मन्ये निजान्तःपुरादेव ।

प्रशा० । भद्रे ! नाहमद्यापि कृतदारस्ततोऽन्तःपुरमेव मे नास्ति ।

विद्यु० । ( स्वगतम् ) आः निश्चिन्ताऽहमधुनाऽस्मि संवृत्ता । ( प्रकाशम् ) रोगिणी
तावत् परीक्ष्यताम् ।

प्रशा० । आपादमस्तकं वस्त्रावृताऽसौ, कथं परीक्षणीया ? ( कुन्दकलिकां प्रति )
भद्रे ! सकृत् प्रसार्यतां पाणिः । ( कुन्दकलिका यथापूर्वमास्ते । )

विद्यु० । भगिनि ! श्रोतव्यं चिकित्सकवचनम् । पाणिः प्रसार्यताम् । अत्रभवता
ग्रहणीयः सः ।

चिकित्सा तव साध्या स्यान्न पाणिग्रहणादृते ।
अन्तरेण करादानं क्षितेरिव समुन्नतिः ॥४॥

ह्रियेयं जडीभूता प्रतिभाति । तद् यथाप्राप्तं मयैव करणीयम् । ( बलात् कुन्दकलिकाहस्तं वस्त्राभ्यन्तराद् बहिराकृष्य प्रशान्तकरे स्थापयति । ) आर्य ! दृढं धार्यतामयं पाणिर्नो चेत् पुनरपसारितो भवेत् ।

( प्रशान्तः कुन्दकलिकायाः पाणिं गृहीत्वा नाडीस्पन्दनमनुभवति । )

विद्यु० । करस्पर्शेन कीदृगुपलब्धिर्भवति ?

प्रशा० । मनाग् वेगवतीयं नाडी । हस्तोऽपि स्विन्नः कम्पितश्च । अकृत्वा हृत्-
परीक्षणं न स्थिरतया किमपि वक्तुं शक्यम् ।

विद्यु० । ततो हृदयमेव परीक्ष्यताम् ।

प्रशा० । कथं वा परीक्ष्येत ?

विद्यु० । तदर्थं पर्यङ्कमारुह्य निषीदतु भवान् । ( प्रशान्तस्तथा करोति । हृत्-
परीक्षणयन्त्रस्य शाखाद्वयं कर्णरन्ध्रयोर्निधाय मूलप्रान्तं कुन्दकलिकाया वस्त्रावृते
वक्षसि संस्थाप्य हृत्स्पन्दनरवमाकर्णयति । )

आश्चर्यम् ! अदृष्टपूर्वमपि मुखमिदं चिरपरिचितमिव प्रतिभाति। अथवा सौन्दर्याकृष्टस्य मे मतिभ्रम एव सञ्जातः।

विद्यु०। (सस्मितम्) अनिमेषदृष्ट्या विमुग्धवत् किं पश्यति भवान्? अप्रियमपि चिकित्सककर्तव्यमनुष्ठेयमधुना।

प्रशा०। (सलज्जं दृष्टिमपसार्य) सत्यमाह भवती। परन्तु तथा भयकातरेयं सञ्जाता यथा सूचिकावेधोऽधुना निष्ठुरतैव स्यात्।

विद्यु०। तेन किम्? निष्ठुरता चिकित्सकस्य भूषणं न दूषणम्।

प्रशा०। आस्तां तावत् सूचिकावेधः। मुखेन सुखेन सेव्यमौषधम् एव प्राक् प्रयोज्यं मया।

विद्यु०। यथा भवते रोचते। (कुन्दकलिकां प्रति) हला कथम् अधुनाऽपि रुद्यते? करुणार्द्रहृदयोऽयमार्यः। तत्करनिपतितायास्ते न किमपि शङ्काकारणम्।

प्रशा०। अधुना रोगमधिकृत्य किमपि प्रष्टुमिच्छामि। कुतः प्रभृति हृदययन्त्रणेयमनुभूयते?

विद्यु०। कलिके! त्वमेव सम्यग् वेत्सि। उत्तरं त्वयैव प्रदेयम्। (कुन्दकलिका सन्नतमुखी तूष्णीं निषीदति।) मूकीकृतेयं लज्जया। तन्मयैव यथाज्ञानं वक्तव्यम्। शृणोत्वार्यः। अद्यैव पितुरस्याः पत्रमेक मया प्राप्तम्। तद् यावदहमेनां श्रावयन्त्यासं तावदस्या मुखं जवाकुसुममिव रक्तमजायत, हृदयवेदना च स्फुरिताऽभवत्।

प्रशा०। शङ्के तत्रैव किमप्यासीद् येन विचलितमस्या हृदयम्।

विद्यु०। मया तु तथा नामन्यत। किं वादानुवादेन? इदमेव तत्पत्रम्। मनस्तत्त्वाभिज्ञो भवानपि तत् पठतु। (पत्रं ददाति। प्रशान्तस्तत् स्वगतं वाचयति। विद्युत्प्रतिमा सोत्कण्ठं गम्भीरायमाणं प्रशान्तमुखं निरीक्षते। प्रशान्तो मौनमाश्रित्य मुखमुन्नमय्य विद्युत्प्रतिमामभि दृष्टिं क्षिपति। विद्युत्प्रतिमा लज्जया साध्वसेन च मुखमवनमयति।)

प्रशा०। भद्रे! ननु पृच्छामि किमर्थकमिदं कपटाचरणम्। भवत्या न कदाप्यहितं कृतं मया। तत् कथमेवंविधस्य प्रहसनस्य पात्रीकृतोऽस्मि?

विद्यु०। (सलज्जं) प्रसीदतु भवान्। मन्दबुद्धिरबलाऽहम्। पत्रमिदं प्राप्य किंकर्तव्यतामूढाऽहं जाता। ततो भगिनीस्नेहाद् दुःसाहसेऽस्मिन् प्रवृत्ता। अज्ञताप्रयुक्तं चापलमिदं निजौदार्येण क्षन्तव्यमेव भवता।

प्रशा०। (क्षणं तूष्णीमवस्थाय पश्चादुच्चैर्विहस्य) अहो प्रत्युत्पन्नमतित्वम्!

एवमुपहसितोऽपि विमुग्धोऽहं श्रीमत्याश्चातुर्येण। ततः पुरस्कारमेवार्हति भवती, न तिरस्कारम्।

विद्यु०। प्रसन्नश्चेद् भवान्, आतिथ्येन भवन्तमुपस्थातुमिच्छामि। अयमेव मे पुरस्कारो भवतु।

प्रशा०। तथाऽस्तु। मधुरेण समापयेदिति शिष्टवचनं सर्वथा पालनीयम्।

विद्यु०। (सहर्षम्) महानयमनुग्रहः। (वैद्युतीमाह्वानघण्ठिकां ध्वनयति। प्रविशति गणेशजननी।) गणेशजननि! चिकित्सकमहोदयानां कृते 'चा'मिष्टान्नादिकं तूर्णमानीयताम्। (गणेशजननी निष्क्रामति।) आर्य! पत्रमिदं दृष्टम्। तदुत्तरमपि भवदायत्तमेव। तदादिशतु भवान् किमुत्तरं मया प्रदेयमिति।

प्रशा०। किमधुनैव तत् प्रतिपादनीयम्?

विद्यु०। पितरावस्या रणरणकेन दिनं गमयतः।

(प्रविशति खाद्यसम्भारहस्ता गणेशजननी। विद्युत्प्रतिमा काष्ठासनादुत्थिता स्वहस्तेन भोज्यादिकमादाय मञ्चोपरि प्रशान्तस्य पुरस्तात् सयत्नं स्थापयति।)

उत्तरं पश्चाच्चिन्तनीयम्। प्राक् तावदातिथ्यमङ्गीक्रियताम्। (प्रशान्तो भोक्तुमुपक्रमते पत्रोत्तरञ्च चिन्तयति।)

प्रशा०। भद्रे! उत्तरमिदं भवत्या प्रदेयम्।

विद्यु०। (लेखन्यादिकमादाय) अवहिताऽस्मि। शनैरुच्यताम्। (प्रशान्तः शनकैर्ब्रूते विद्युत्प्रतिमा च विलिखति।)

प्रशा०। प्रशान्तः श्रुतवृत्तान्तो दृष्ट्वाऽस्या रूपमद्भुतम्।
सम्प्राप्तः परमानन्दं धन्योऽहमिति मन्यते ॥६॥
सुष्ठु स्मरति सोऽद्यापि पितुरिष्टं मनोरथम्।
चिरस्वाकृतदारस्तद् विवाहेऽस्मिन् समुत्सुकः ॥७॥
प्रत्यूहः कश्चिदत्रास्ते येन प्रतिहतस्त्वसौ।
दिनं परिणयस्यास्य नावधारयितुं क्षमः ॥८॥
यदैवोद्वाहबाधा सा भविता द्रविता पथः।
तदैव ज्ञापनीयस्ते शुभानुष्ठानवासरः ॥९॥

मन्ये यथोक्तं लिखितमिदमुत्तरम्।

विद्यु०। अथ किम्। शङ्केऽस्याः पित्रोरुत्कण्ठाऽनेन नोपशमं प्राप्स्यति, ततः पृच्छामि कोऽसौ प्रत्यूहो येन शुभानुष्ठानं प्रतिहतं भवति?

प्रशा०। (सस्मितम्) भगिनि! रहस्यमेतन्न प्रकाशमर्हति।

विद्यु०। (सानुनयम्) आर्य! प्रसीदतु भवान्। भगिनीति सम्बोधनपदेन जातसाहसा पुनस्तदेव पृच्छामि। सति सामर्थ्ये प्रत्यूहोऽसौ मयैव निराकरिष्यते।

प्रशा०। तर्हि श्रूयताम्। अप्रियश्चेन्नाहं दूषणीयः।

इष्टः सखा मे भवतीह कश्चित्
सुस्पष्टवक्ता सरलश्च शिष्टः।
विज्ञानवारांनिधिपारदृश्वा
सुधीश्च साधुश्च विशुद्धवृत्तः॥१०॥

यावदसावनूढो वर्तेत तावन्नाहं विवाहाय यतेय।

विद्यु०। कथम्?

प्रशा०। पणोऽयं मया गृहीतः।

विद्यु०। आर्य! किंनामाऽसौ सखा? कथं वा नोपयम्यते तेन?

प्रशा०। (सस्मितम्) तदपि श्रोतुमिच्छति भवती? ननु शुभलक्षणमेवैतत्।

सखा मे सुकुमाराख्यस्त्वदनुध्यानतत्परः।
कवितापक्षपातात्ते मग्नो नैराश्यसागरे॥११॥

एतद्विघ्ननिरसनं तु भवदायत्तमेव। (विद्युत्प्रतिमा व्रीडया वैमनस्येन च सन्नतनयना तूष्णीं विमृशति।)

प्रशा०। भगिनि! परितुष्टोऽहमातिथ्येन। साधयाम्यहम्। स्वस्ति भवतीभ्याम्। (द्वाराभिमुखमुपसर्पति।)

विद्यु०। (सहसोत्थाय) क्षण स्थीयताम्। दर्शनदक्षिणा प्रदेया।

प्रशा०। (ग्रीवाभङ्गेण मुखं परावर्त्य) देव्यो दर्शनेनैवानुगृह्णन्ति। दक्षिणा तु पूजार्थिभिरेव दीयते। रिक्तहस्तोऽहमद्य। यथाकालं यथार्हं दक्षिणा मयैव समुपस्थापनीया। (हसन्निष्क्रान्तः।)

विद्यु०। परिस्थितिर्जटिलतां प्राप्ता। विभ्रान्ताऽहं संवृत्ता।

कुन्द०। (सस्मितम्) धनुर्भङ्गपणमेव बलवदाश्रित्य वर्तितव्यम्।

विद्यु०। अलं परिहासेन।

श्वःश्रेयसाय यदि तेऽकविमाश्रयेऽहं
स्वप्नो ममैति विलयं दयितश्चिराय।
सङ्कल्पसाधनपरा यदि मेऽस्ति बुद्धिः
शङ्के तवापि भवति प्रतिरुद्धमिष्टम्॥१२॥

( ततः प्रविशति गणेशजननी । )

गणे० । भट्टिदारिए ! नेसभोअणसमओ अदिवट्टदि । ( भर्तृदारिके ! नैशभोजन-समयोऽतिवर्तते । )

विद्यु० । यद्भावि तद्भवतु । एहि कलिके ! सूपकारः प्रतीक्षते । (सर्वा निष्क्रान्ताः ।)

---

## अष्टमोऽङ्कः

'भूरिभोजन'-संज्ञकमट्टशूलगृहम् (Hotel) । निजप्रकोष्ठे द्वारमभि पृष्ठं निधाय सुकुमारः साभिनिवेशं कविता रचयति । मञ्चोपरि तदुपेक्षितं मृष्टान्नपूर्णं पात्रं विद्यते । कण्ठलम्बितहृत्परीक्षणयन्त्रः प्रशान्तो निःशब्दं प्रविश्य सुकुमारपृष्ठतस्तल्लिखितं पद्यं पश्यति ।

सुकु० । ( स्वगतम् ) मन्ये दोषैकदृक् प्रशान्तोऽपि कवितयाऽनया विस्मयेन हतवाग् भवेत् । ईदृशी मे रचनाशक्तिरस्तीति न ममापि विदितम् । पुनः पुनः पठतोऽपि न मे तृप्तिर्जायते । ( पुनर्वाचयति )

मायापाशैः कुहकिनि ! महाबन्धमासाद्य तेऽहं
वीतस्पन्दो वनमृग इव क्लेशराशिं प्रविष्टः ।
कर्णौ शब्दग्रहणविधुरौ वीक्षते नाक्षियुग्मं
प्राज्यं भोज्यं सरसमधुरं जिह्वयोपेक्ष्यते मे ॥१॥

प्रशा० । ( जिह्वातालुसंयोगेन शब्दं कृत्वा ) अहह अहह सत्यमेव शोचनीया ते दशा ! कर्णद्वयं ते न शृणोति चक्षुर्द्वयमपि ते न पश्यति । उपेक्षितः खाद्यसम्भारोऽपि प्रमापयति रसना ते रसास्वादपराङ्मुखीति ।

सुकु० । ( चकितो ग्रीवां परावर्त्य ) अरे दुर्वृत्त ! चौर इव कथं निःशब्दं प्रविष्टोऽसि त्वम् ? रक्षिहस्ते समर्पणमर्हसि ।

प्रशा० । प्रशस्येयमेकाग्रचित्तता । अनेन श्रीभगवानपि तुष्यति किं पुनः काव्यभारती । सखे ! दिष्ट्या वर्धसे । कवितारचने हस्तस्ते परिपक्वो जातः । शेषमपि श्रोतुमिच्छामि ।

सुकु० । किं तिष्ठन्नेव श्रोष्यसि ? अत्रोपविश्यताम् । ( स्वयं काष्ठासनादुत्थाय मञ्चोपरि निषीदति । प्रशान्तः शून्यीकृतं काष्ठासनं गृह्णाति । ) अधुना श्रूयताम् । केवलमिदमेव शङ्क्यते नातः परं मेघदूतमपि सरसं प्रतिभास्यतीति । ( उच्चैर्वाचयति । )

स्मारं स्मारं दुरधिगमतां तेऽनुभूयातिशैत्यं
भूयस्तापाद् गलदविरलस्वेदबिन्दुश्च दूये ।
नित्यं चित्ताम्बर-समुदितं त्वन्मुखेन्दुं दिदृक्षुः
संवृत्तोऽहं निबिडतिमिरस्तब्धदृष्टिर्हताशः ॥२॥

प्रशा० । ( निमीलितनेत्रः शिरः सञ्चालयन् ) साधु साधु ! ततस्ततः ।

सुकु० । दूरस्थैवं भवसि यदि मे किं वृथाजीवितेन
प्राणांस्तुच्छांस्तव रथतले चक्रपिष्टस्त्यजेयम् ।
भक्ते रक्ता पतति मयि चेत् स्नेहदिग्धा सुदृष्टिः
सौभाग्यान्मे नरपतिरपि प्राप्नुयादभ्यसूयाम् ॥३॥

प्रशा० । ( सोत्साहम् ) भो भोः कविकुञ्जर ! विस्मयेन हतवागस्मि । कण्ठस्ते जयमाल्यमर्हति । क्व तावत् पुष्पमाल्यम् ? तदेतदेव तदनुकल्पो भवतु । ( हृत्-परीक्षणयन्त्रेण सुकुमारकण्ठं भूषयति । )

सुकु० । ( तत् प्रत्यर्पयन् ) आस्तां तावदुच्छ्वासः । सत्यं ब्रूहि किमनया कवितया कार्यं मे सिध्येत् ?

प्रशा० । सत्यमेव ब्रवीमि कवितायामस्यां छन्दो बन्धो गन्धः—सर्वमेव चित्तानन्दं विधत्ते ।

सुकु० । सावशेषं ते वचः । रन्ध्रान्वेषी खलु त्वम् ।

प्रशा० । नास्त्यत्र केवलं स्वाभाविकतासम्बन्धः । कृत्रिमतादोषेण गोमूत्रेण दुग्धस्येव रसहानिरजायत । सखे ! भावातिशयात् पर्यायेण शैत्यमप्यनुभूयते तापोऽपि । परन्तु विकृतमस्तिष्कमन्तरेण न कोऽपि प्रियाया रथचक्रतले जीवनं त्यजति । हास्यकरोऽयमुपन्यासः । अधिकन्तु प्रियाप्रसादेन सौभाग्य-प्राप्तिप्रसङ्गो धनलालसामेव सूचयति । तत् कवितान्तरं रचनीयम् ।

सुकु० । ( नैराश्यं नाटयित्वा ) तर्हि दुर्व्यसनादस्मान्निवर्तितव्यम् । विना प्रतीकेन कवितारचनं न सम्भवति ।

प्रशा० । ( चर्मपेटिकाया मुखमपावृत्य ततो विद्युत्प्रतिमाया आलेख्यमादाय तत्-सनाथं कराग्रं प्रसारयन् ) गृह्यतामेतत् । प्रतीकाभावदुःखस्य निवृत्तिरस्तु । ( सुकुमारस्तदालेख्यं गृहीत्वा विमुग्धवत् पश्यति । )

सुकु० । सखे ! केयं वरवर्णिनी ? अहो लोकोत्तरं लावण्यमस्याः !

प्रशा० । अरे मूढ ! यस्या मायापाशनियन्त्रितस्त्वं हरिणायस इयं सा लोक-ललामभूता विद्युत्प्रतिमा ।

सुकु० । असाध्यमेव साधितं त्वया । कथं संगृहीतमेतत् ? छलेन बलेन कौशलेन वा ?

प्रशा० । कौशलेनैव । चन्द्रकलाचित्रालयशिल्पी निरञ्जन एव तस्याश्चित्रकर इति पूर्णचन्द्रवचनं निशम्य तत्समीपमगच्छम् । तेन गृहीतस्य मूलप्रतिबिम्बस्य पुनर्मुद्रणमिदम् ।

सुकु० । एकस्य चित्रं नान्यस्मै शिल्पिना प्रदेयम् । उल्लङ्घितः शिष्टाचारो निरञ्जनेन ।

प्रशा० । किमसौ वराकः कुर्यात् ? पूर्वं तावन्मयाऽसौ चिकित्सित आसीत् । अतो ममानुरोधमतिक्रमितुं न प्रभवति । मन्ये चित्रदर्शनेन ते निरुद्धं भावस्रोतो मुखशतैं निःसरेत् ।

सुकु० । अट्टशूलस्य हट्टकोलाहलैर्विक्षिप्यते मे चेतः । विविक्तचिन्ताऽपि दुष्करा ।

प्रशा० । तर्हि स्थानान्तरं गम्यताम् । अधुनाऽपि पक्षाधिकः कालोऽवशिष्यते ।

सुकु० । क्व वा गन्तव्यम् ?

प्रशा० । ( विमृश्य ) आं स्मरामि । खरसाङ्ग (Kurseong) गिरिपत्तने मित्रस्य मे कुमुदबान्धवस्य शून्यीकृतं शैलभवनमस्ति । तत्रैव स्थातुं शक्यम् । अद्यैव दूरश्रुतियन्त्रेण तमुपमन्त्रयिष्ये ।

सुकु० । गते मयि छात्राध्यापनं केन निर्वाहितं स्यात् ? किमितो भ्रष्टस्ततो नष्टः स्याम् ?

प्रशा० । मयैव त्वत्प्रतिनिधिभूतेन तत् साधनीयम् ।

सुकु० । निरवसरेण त्वया कथमेतत् साध्यम् ?

प्रशा० । तन्मयैव चिन्तनीयं, न त्वया ।

सुकु० । भवतु । त्वदुपदेशो मया पालनीय एव । त्वमेव मे भाग्यपोतस्य कर्णधारः । साम्प्रतमेहि । खाद्यसम्भारस्य सद्गतिः साधनीया ।

प्रशा० । मदुदरे न स्थानं तिलधारणम् । त्वयैव ग्रस्यताम् । अधुनैव गृहीतातिथ्यो विश्वनिवासादागतोऽस्मि ।

सुकु० । ( भुञ्जानः ) किमुच्यते ? विश्वनिवासादिति ? किमर्थं तत्र गतस्त्वम् ?

प्रशा० । किमर्थं चिकित्सकेन प्रयोजनम् ? किमर्थं चिकित्सक आहूयते ?

सुकु० । रोगिदर्शनार्थम् ।

प्रशा० । तत्र तु रोगिणीदर्शनार्थम् ।

सुकु० । ( भोजनाद्विरतः सोत्कण्ठवत् ) किमसौ पीडिता ?

प्रशा० । अतिपीडिता ।

सुकु० । मन्ये त्वयासौ दृष्टा चिकित्सिता च ?

प्रशा०। न केवलं दृष्टा स्पृष्टाऽपि। अहो स्पर्शसुखम्! तत् स्मारं स्मारमधुनाऽपि पुलकाञ्चितशरीरो भवाम्यहम्। स्थाने खलु भवभूतिना कीर्तितम्—

विनिश्चेतुं शक्यं न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः॥ इति।

सुकु०। (साभ्यसूयम्) परमुल्लासितोऽहं तव सौभाग्येन। त्रातोऽहं कवितारचना-दुर्व्यवसायात्। श्वः प्रभृति पुनरपि मया कर्मान्वेषणे प्रवर्तितव्यम्। (विद्युत्-प्रतिमाया आलेख्यं प्रत्यर्पयितुकामः पाणिं प्रसारयन्) किमनेन चित्रेण मया रक्षितेन? त्वयैव सबहुमानं रक्षितं भवतु।

प्रशा०। (सुकुमारहस्तं निराकृत्य सुकुमारपृष्ठञ्च मुष्टिनाहत्य) अरे रासभ! किमिव मन्यते त्वया? नाहं मित्रद्रोही लघुचित्तो वा।

दृष्टा येन भवेत् सख्युः प्रिया कलुषया दृशा।
कशया दण्डनीयोऽसौ पशुः पुरुषविग्रहः॥४॥

कुन्दकलिकैव मया चिकित्सिता न ते विद्युत्प्रतिमा।

सुकु०। (सलज्जम्) कथं पूर्वमेव नैतत् स्पष्टीकृतम्। काऽसौ कुन्दकलिका?

प्रशा०। विद्युत्प्रतिमाया मातृष्वसेयी। सैव मे पितृसङ्कल्पिता वधूरिति पूर्वमेव ते कथितं मया। साऽपि विश्वनिवासमधिवसतीति न मया स्वप्नेऽपि चिन्तितम्।

सुकु०। किमसौ दर्शनेनैव प्रत्यभिज्ञाता?

प्रशा०। न सम्यक्। कथं वा तत् सम्भवति? मया दृष्टपूर्वाऽष्टवर्षदेशीया बालिकाऽद्य प्राप्तयौवना संवृत्ता।

तारुण्यस्पर्शमात्रेण योषितामङ्गसंस्थितिः।
ऐन्द्रजालिकयष्ट्येव भवत्येव नवीकृता॥५॥

सुकु०। अपि नाम त्वच्चिकित्सयाऽसौ प्रकृतिस्था जाता।

प्रशा०। (विहस्य) क्व तावदस्या व्याधिः? पूर्वत एव स्वच्छन्दचारिणी वन-हरिणीव स्वस्थैव सा। तत्पितुः पत्रेण विदितपूर्ववृत्ता विद्युत्प्रतिमैव—

रोगिणी दर्शनीयेतिच्छलमाश्रित्य मेलनम्।
उभयोः कौशलेनैवाकल्पयत् कौतुकप्रिया॥६॥

(सुकुमारः सोत्साहमासनादुत्थाय प्रशान्तं बाहुभ्यामुद्धृत्य नृत्यति।)

प्रशा०। अरे घातक! मुञ्च मुञ्च माम्। किं मामनूढमेव मृतमिच्छसि?

सुकु०। (प्रशान्तं मुञ्चन्) सखे देहि मे विरेचकं भेषजम्।

प्रशा०। किमर्थम्?

सुकु० । कुक्षिमें शून्यीकृत्य प्राज्यावकाशः सम्पादनीयः ।

प्रशा० । शान्तं पापम् ! नैवं विधेयम् । एवं चेत् शून्यीकृत एव स्थास्यति । त्वत्परिणयात् प्राङ् न मे विवाहो भावी ।

सुकु० । कथम् ?

प्रशा० । अपरिवर्त्तनीयोऽयं मे सङ्कल्पः । ( मणिबन्धबद्धं क्षुद्रघटिकायन्त्रं विलोक्य ) अहो संलापेन त्रियामायाः प्रथमो यामो व्यतीतः ! साधयाम्यहम् । ( उभौ निष्क्रामतः । )

---

## नवमोऽङ्कः ।

विश्वनिवासस्य उपवेशनप्रकोष्ठः । पूर्णचन्द्रो गृहसज्जायां निरतो दृश्यते । प्रविशति चिरञ्जीवः ।

चिर० । वत्स पूर्णचन्द्र ! तुन्दपरिमृजोऽसि त्वम् । क्षुद्रं कर्मैतन्नाधुनाप्यवसितम् ? विद्युत्प्रतिमा पश्यति चेद् भृशमप्रसन्ना स्यात् ।

पूर्ण० । अज्ज ण भेदव्वं किच्चमेदं खणेण ज्जेव्व कदं भवे । ( आर्य न भेतव्यम् । कृत्यमेतत् क्षणेनैव कृतं भवेत् । )

चिर० । त्वर्यतां त्वर्यताम् । दीर्घसूत्रेण न किमपि साध्यते । ( क्षिप्रहस्तः पूर्णचन्द्रो मञ्चं परितः काष्ठासनचतुष्टयं निदधाति । मञ्चञ्च सुदृश्येन वस्त्रावरणेनाच्छादयति । तदुपरि रजताधारं निधाय पुष्पस्तबकेन तद् भूषयति । )

पूर्ण० । पेक्खदु अज्जो । मण्णे सव्वं जधाजधं सज्जिदं अहुणा ( पश्यत्वार्यः । मन्ये सर्वं यथायथं सज्जितमधुना । )

चिर० । ( निपुणं पश्यन् ) एतदेव पर्याप्तं मन्ये ।

पूर्ण० । णं पुच्छामि कधं इयं घरसज्जत्ति । ( ननु पृच्छामि कथमियं गृहसज्जेति ? )

चिर० । भर्तृदारिका ते स्वयंवरा भवति ।

पूर्ण० । साडंबरा ? किं णाम तं ? ( साडम्बरा ? किं नाम तत् ? )

चिर० । नहि नहि । स्वयंवरा स्वयंवरा । द्वयोर्विवाहार्थिनो गुणागुणं विचार्य तयोरेकतरं वरीष्यते ।

पूर्ण० । तरिहि पदिवरणं अज्ज ज्जेव्व सम्पुण्णं हुविस्सदि ? (तर्हि पतिवरणमद्यैव सम्पूर्णं भविष्यति ? )

चिर० । तथैवाहं मन्ये ।

पूर्ण० । तरिहि सङ्खमल्लादिअं आदाय गणेशजणणी णिकसा जेव्व चिट्ठदु । (तर्हि शङ्खमाल्यादिकमादाय गणेशजननी निकषैव तिष्ठतु ।)

चिर० । का हानिः ? परन्तु परोक्षमेव स्थातव्यं तया ।

पूर्ण० । अज्ज ! गच्छामि हं । गणेशजणणी यधारिहं उवदेट्ठव्वा । (आर्य ! गच्छाम्यहम् । गणेशजननी यथार्हमुपदेष्टव्या ।)

(पूर्णचन्द्रो निष्क्रामति । ततः प्रविशतो विद्युत्प्रतिमा कुन्दकलिका च ।)

विद्यु० । ज्येष्ठतात !

चिर० । वत्से !

विद्यु० । ज्येष्ठतात ! (लज्जां नाटयति ।)

चिर० । वत्से ! अलं लज्जया । वृद्धोऽपि पुत्रोऽहं ते । यद्वक्तव्यमकुण्ठमेवोच्यताम् ।

(विद्युत्प्रतिमा तूष्णीमास्ते ।)

कुन्द० । ज्येष्ठतात ! नेयं लज्जया वक्तुमलम् । अहमेव भणामि । प्रत्यासन्न एव पुलकसुकुमारयोरागमनसमयः । ततो भवता पूर्णचन्द्रेण सह करणप्रकोष्ठ एव वर्तितव्यम् । उभावपि तौ विवाहार्थिनौ यथोचितं संवर्धनीयौ । ततस्तयोः पूर्वागतः प्राक् प्रकोष्ठमिमं प्रापयितव्यः, तस्य प्रस्थानादनन्तरमपरोऽपि । आवाभ्यामत्रैव स्थातव्यम् ।

चिर० । सर्वमेव सुकल्पितम् । वत्से निश्चिन्ता भव । नात्र मे काऽपि त्रुटिः स्यात् ।

(चिरञ्जीवो निष्क्रामति ।)

कुन्द० । हला ! कार्यकाले कथमीदृक् कुण्ठिताऽसि संवृत्ता ? एहि । अत्र निषीद । प्रकृतिं स्वां प्रतिपद्यस्व ।

विद्यु० । न जाने कथमद्य ससाध्वसाऽहं सञ्जाता ।

कुन्द० । तत् कथमस्मिन् प्रागल्भ्ये प्रवृत्ताऽसि ? मद्वचनमेव क्रियताम् । सुकुमारं वृणीष्व ।

विद्यु० । नाधुना तच्छक्यम् ।

कुन्द० । न जाने कथमीदृशं निर्लज्जमाचरणमनुष्ठेयमद्य त्वया भवेत् ।

विद्यु० । त्वञ्चेन्मामुद्धरसि शालीनत्वमव्याहतं स्यात् ।

कुन्द० । किं मया कृतमिच्छसि ?

विद्यु० । त्वयैव तौ परीक्षणीयौ न मया ।

कुन्द० । नैतत् सम्भवति । अपरिचितपुरुषाणां समक्षं न मे वाक् स्फुरति ।

विद्यु० । अगत्या मयैव पुरतः स्थातव्यम् । (विमृश्य) कलिके ! एवं कृते सर्पोऽपि म्रियेत लगुडोऽप्यभग्नः स्यात् । तवैव भूमिकामवलम्ब्य कार्यमिदमनुष्ठेयम् ।

कुन्द० । ततः किम् ?

विद्यु० । त्वच्छद्मनाहं स्वच्छन्दमेव संलपितुमलम् ।

कुन्द० । बाढम् । अहं तावद् गच्छामि । ( गन्तुं व्यवस्यति । )

विद्यु० । ( तां निवार्य ) तिष्ठ तिष्ठ । त्वयाऽपि मच्छद्मना वर्तितव्यम् ।

कुन्द० । ( विहस्य ) अहो नर्मप्रियता ! परन्तु सुकुमारमभि नैतच्चातुर्यमाश्रयणीयं त्वया ।

विद्यु० । कथम् ?

कुन्द० । असौ त्वामपि मामपि जानाति । मित्रसकाशात् सर्वमेव श्रुतं तेन ।

विद्यु० । नाम्नैव जानाति न तु तादात्म्येन । मुखसादृश्यमावयोरस्त्येव । नासौ कदापि नौ दृष्टवान् ।

कुन्द० । भगिनि ! साहसेन ते वेपते मे हृदयम् । यदि कथमपि च्छलनेयं ज्ञायते, परं लज्जाकारणं स्यात् ।

विद्यु० । अयि भयकातरे ! त्वामन्तरेण न केनापि ज्ञायेत ।

( ततः प्रविशति पूर्णचन्द्रः । )

पूर्ण० । भट्टिदारिए पुलओ णाम तरुणो पत्तो । ( भर्तृदारिके ! पुलको नाम तरुणः प्राप्तः । )

विद्यु० । ( आसनादुत्थाय ) तूर्णं प्रवेशय ।

( पूर्णचन्द्रो निष्क्रम्य पुलकप्रकाशेन सह पुनः प्रविशति । शिष्टाचारविनिमयः । )

विद्यु० । स्वागतम् । इदमासनमलङ्क्रियतां भवता । ( पुलको निषीदति । ) पूर्णचन्द्र ! बहिरेव स्थातव्यं त्वया । ( पूर्णचन्द्रो निष्क्रामति । ) ( कुन्दकलिकां निर्दिश्य ) भद्र ! प्रागनयैव परिचयस्ते करणीयः । इयं मे भगिनी विद्युत्प्रतिमा । अस्या एव विवाहप्रयत्नः क्रियते ।

पुल० । ( कविजनोचितविनयेन ) देवि ! नमो भवत्यै । अन्वर्थनामैव भवती मदक्ष्णोः साक्षाद्विद्युदिव प्रतिभाति । ( कुन्दकलिका लज्जां नाटयति । )

विद्यु० । सौम्य ! स्वसुर्मे काऽपि त्रुटिर्भवते निवेदनीया । निरतिशयलज्जाशीलाऽसौ मितभाषिणी च ।

पुल० । ( सावेगम् ) नहि नहि । नैवं सकृदपि वक्तव्यम् । नारीणां भूषणं लज्जा न दूषणम् । तासां वचनप्रागल्भ्यं न मे रोचते ।

विद्यु० । समाश्वासिताऽहमनया भवदुक्त्या । ( कुन्दकलिकां प्रति ) भगिनि ! न भेतव्यम् । लज्जया मौनाश्रयणं नैनं भद्रमुखमुद्वेजयेत् ।

पुल०। किमिदमुक्तं भवति? नैतन्मद्वचनतात्पर्यम्। वाचालतैव निन्द्यते मया न परिमितभाषणम्। भद्रे! संलापसूत्रेणैव हृदयं हृदयेन संग्रथ्यते। विवाहैषिणोः स्त्रीपुंसयोरन्योन्यपरिचयः सर्वथा वाञ्छनीयः। स तु संलापैरेव साध्यते।

विद्यु०। भद्र! किमधैर्येण? प्रयासोऽयं विवाहे पर्यवस्यति चेन्निविडतम एव परिचयः स्यात्। अन्यथा किं नाम साध्यं क्षणिकपरिचयेन? किं वाऽस्य मूल्यम्?

पुल०। नैवं वक्तव्यम्। यदि परिचयेऽप्यप्रवृत्तिः, कथमाहूतोऽहमत्र?

विद्यु०। भवता प्रेषितां कवितामधिकृत्य किमपि प्रष्टव्यमस्माभिः। मन्ये बहून्येव पद्यानि भवता विरचितानि।

पुल०। कोऽत्र संशयः? समाहृतास्ता महाभारतभ्रमं जनयिष्यन्ति। भद्रे! कविता-रचनं मे निश्वसितमिव नैसर्गिकम्।

विद्यु०। (भ्रुवावुन्नमय्य) एवम्? स्वभावकविरेव भवान्।

पुल०। निजमुखेन निजगुणकीर्तनं नैव शोभनं स्यात्।

विद्यु०। अहो विनयः! ननु पृच्छामि कदेयं कविप्रतिभा प्रथममाविष्कृता भवता?

पुल०। प्राथमिकविद्यालय एव। मत्कृतानि च्छन्दोबद्धानि प्रश्नोत्तराणि पश्यन्तः शिक्षका अपि विस्मयं प्राप्ताः। ततश्च कविडिम्भक इत्युपनामापि मयाधिगतम्।

विद्यु०। (सस्मितम्) अहो गौरवम्! मन्ये स्वरचिताः कविता ग्रन्थीकृत्य मुद्रणमपि प्रापिता भवता।

पुल०। नहि। (निश्वस्य) भारत्या परमनुगृहीतोऽपि कमलायाः कृपादृष्टिर्न मयि निपतिता। (कुन्दकलिकां निर्दिश्य) स्वसेयं ते साक्षात् कमलैव। इयं चेन्मयि प्रसीदति कविता मे स्वर्णाक्षरैर्मुद्रिताः स्युः। (तरुण्यावन्योन्य-मुखमवलोक्य स्मितं कुरुतः।) ननु पृच्छामि किमनया मदुपहृता कविताः प्रेक्षिताः?

विद्यु०। न केवलं प्रेक्षिताः स्मृतिरत्नागारे च सयत्नं रक्षिताः।

पुल०। किमस्यास्तुष्टिरजनि?

विद्यु०। न केवलं तुष्टिर्मनसोऽपि पुष्टिः।

पुल०। अहो भाग्यवान् खल्वहम्। सफलो मे सकलः श्रमः।

विद्यु०। (विस्मयं नाटयन्ती) किमुच्यते? श्रम इति? अथवायं मे श्रुतिभ्रमः? किं स्वभावकवेरपि श्रमेण प्रयोजनम्?

पुल०। (स्वगतम्) चतुरेयं तरुणी, तन्मया सावधानेन भवितव्यम्। (प्रकाशम्)

यथार्थमेव श्रुतं भवत्या। कवितान्तरेषु श्रमेण न मे प्रयोजनम्। अस्यां तु महान् प्रयत्नः कृतो मया।

विद्यु०। कथम्?

पुल०। यतो देव्याः सेवायामस्या विनियोगः।

विद्यु०। सौम्य! यदेव यत्नेन साध्यते तदेव कृत्रिमतादोषेण दूष्यते। तन्मन्ये येयं प्रशस्ति र्भवताऽस्यै निवेदिता साऽपि तद्दोषदुष्टा?

पुल०। अरुन्तुदमिदं वचनम्!

यन्मया प्रथमं सृष्टं तदासीद्वन्यमार्तवम्।
महता तु प्रयत्नेन संस्कारस्तस्य साधितः ॥१॥
देवीचरणसंस्थाप्ये नैवेद्ये त्रुटिरस्ति चेत्।
सपर्या विफलैव स्यादिति शङ्काऽस्पृशन्मनः ॥२॥

विद्य०। मांसशोणितमयी मानवीयं मे भगिनी। अस्या देवीपदप्रापणं प्रीत्यावहमपि वस्तुविरुद्धं प्रतिभाति।

पुल०। मानवीयं भवतु मा वा भूत्, मत्कविदृष्टौ देव्या अपीयं गरीयसी। कल्पनामयं मे मनोभुवनम्। वस्तुसंस्पर्शस्तत्र नास्त्येव।

विद्यु०। अश्रद्धेयमेतत्। परिणयानन्तरं वस्तुसंस्पर्शः कथमतिक्रमितुं शक्येत? शङ्के तेन ते स्वप्नभङ्गो भवेत्।

पुल०। अनवकाशेयं शङ्का। भद्रे! स्वयंसम्पूर्णः क्षयरहितो मे स्वप्नविलासः। तद्राहित्यं न मया चिन्तयितुमपि शक्यते। तन्मे मृत्युकल्पमेव स्यात्।

विद्यु०। एवं चेद्वस्तुसंस्पर्शो भवता दूरत एव परिहरणीयः। सौम्य! नास्ति मे प्रश्नान्तरम्। (आसनं विहाय समुत्तिष्ठति। पुलकप्रकाशोऽपि तथा कुरुते।) नमस्ते।

पुल०। नमो वाम्। परीक्षाफलं तु न मया ज्ञातम्।

विद्यु०। (सस्मितम्) अन्योऽप्यस्ति परीक्षणीयः कश्चित्। परीक्षाफलं परस्तात् प्रकाशनीयम्। (पुलकप्रकाशो निष्क्रामति।) कलिके! दृष्टोऽयं कविडिम्भकः। किंवा मन्यते त्वया?

कुन्द०। अनेन सह विवाहबन्धनादुद्बन्धनमपि श्रेयः।

विद्यु०। ततः पूर्वं त्वदभिमतं सुकुमारमपि द्रष्टुमिच्छामि। कथमसौ न प्रवेश्यते? (वैद्युतीमाह्वानघण्टिकां ध्वनयति। प्रविशति पूर्णचन्द्रः।) पूर्णचन्द्र! क्व तावदपरः प्रार्थी?

पूण० । णामू अहुणा वि दिस्सदि । ( नासावधुनाऽपि दृश्यते । )

विद्यु० । तत्र कारणम् ?

कुन्द० । कारणं तु जलमिव स्वच्छम् । गवितायामेव निष्णातोऽसौ न कवितायाम् ।

विद्य० । तत् किमत्र स्थित्या ? क्लान्ताऽहं वाग्वितण्डया । एहि विश्रामार्थं शयनकक्ष्यामेव गच्छाव । पूर्णचन्द्र ! समागते तस्मिंस्तत्रैवाहं विज्ञापनीया ।

( उभे निष्क्रान्ते )

पूर्ण० । ण जाणे किं आपडिदं णाम । सङ्खमल्लाइअं आददाणा गणेसजणणी विधा जेव्व पडिपालेदि । ( संयुक्तकराभ्यां ललाटं स्पृशन् ) अंब कालिए ! सअआ होहि । तुए पसण्णाए गणेशजणणीए सुवण्णकङ्कणसिविणो सहलो भवे । ( न जाने किमापतितं नाम । शङ्खमाल्यादिकमाददाना गणेशजननी वृथैव प्रतिपालयति । अम्ब ! कालिके ! सदया भव । त्वयि प्रसन्नायां गणेशजनन्याः स्वर्णकङ्कणस्वप्नः सफलो भवेत् । )

( नेपथ्ये ) पूर्णचन्द्र ! पूर्णचन्द्र ! इतस्तावदागम्यताम् ।

पूर्ण० । अम्महे अज्जचिरञ्जीअस्स कण्ठसरो अअं । मण्णे देईए सुदं मे पत्थणवअणं । ( अये । आर्यचिरञ्जीवस्य कण्ठस्वरोऽयम् । मन्ये देव्या श्रुतं मे प्रार्थनावचनम् । ( निष्क्रम्य क्षणान्तरे पुनः प्रविशति प्रशान्तसुकुमाराभ्याम् । )

पूर्ण० । ( स्वगतम् ) अम्मो दुद्देअं ! कि वा पत्थिदं किं वा लद्धं मए ! ( प्रकाशम् ) अज्ज, अत्थ ज्जेव्व उवविसदु भवं । ( सुकुमारं प्रति ) भवं पि निसीअदु । ( अहो दुर्दैवम् ! किं वा प्राथितं कि वा लब्धं मया ! आर्य ! अत्रवोपविशतु भवान् । भवानपि निषीदतु । ) ( उभौ निषीदतः । )

प्रशा० । क्व ते भर्तृदारिका ?

पूर्ण० । पउट्ठन्तरम्मि वट्टदि । अहुणा जेव्व विणावणोया । ( प्रकोष्ठान्तरे वर्तते । अधुनैव विज्ञापनीया । )

प्रशा० । किमवस्था मे रोगिणी ?

पूर्ण० । सुपिक्कदाडिमफलं विअ सत्थोज्जला । किं तं जेव्व दट्ठुं आगदो भवं ? ( सुपक्वदाडिम्बफलमिव स्वास्थ्योज्ज्वला । किं तामेव द्रष्टुमागतो भवान् ? )

प्रशा० । नहि । कार्यान्तरमस्ति मे । उभे अपि मया द्रष्टव्ये ।

पूर्ण० । तं पि हं जाणामि । चित्तग्गहणं अधिकरिय ताणं मन्तेदव्वं । (तदप्यहं जानामि । चित्रग्रहणमधिकृत्य ताभ्यां मन्त्रयितव्यम् । )

प्रशा० । ( सस्मितम् ) यथार्थमनुमीयते । अहो बुद्धिप्राखर्यम् !

पूर्ण०। उभाओ वि मए विणावणीआओ। खणं पडिक्खदु अज्जो। (उभे अपि मया विज्ञापनीये। क्षणं प्रतीक्षतामार्यः। (निष्क्रामति।)

प्रशा०। सुकुमार! कथमुत्ताम्यसि त्वम्? खरसाङ्गशैलनिवासे विरचिता ते कविता प्रकर्षस्यातिभूमिं प्राप्ता। तेनैव ते कार्यं सिध्येत्। बुद्धिस्थैर्यं तु सर्वथाऽवलम्बनीयम्। उध्मप्रकाशेन स्वार्थो न खलु विहन्तव्यः।

सुकु०। तदहमपि जानामि। कार्यकाले तु सर्वं विस्मर्यते मया। अतोऽहं ब्रवीमि मत्पार्श्वगतेन त्वया भवितव्यम्।

प्रशा०। एतदेव मनसि निधाय त्वया सार्धमागतोऽहम्। पार्श्वस्थितिस्तु तस्याः सम्मतिमपेक्षते। (आगच्छन्ती विद्युत्प्रतिमा द्वाराद् बहिर्दृश्यते। प्रशान्तस्तामवलोक्य स्मेराननस्तदभिमुखं गच्छति। द्वारपथे शिष्टाचारविनिमयः।)

विद्यु०। सुस्वागतम्। पूर्णचन्द्रेणाहमुक्ता गुरुकार्यानुरोधेन भवानागत इति। तद्वचने नासीन्मे प्रत्ययः। अधुना तु सविस्मयं पश्यामि तदेवाघटनं संघटितम्। महानयमनुग्रहः!

प्रशा०। (सस्मितम्) दर्शनदक्षिणां धारयामि भवत्यै। तन्निर्यातनार्थमेव मदागमनम्। (उभौ संलपन्तौ गृहाभ्यन्तरं प्रविशतः। (सुकुमारं निर्दिशन्) भद्रे!

सखाऽयमिष्टः सुकुमारनामा सुस्पष्टभाषी सरलश्च शिष्टः।
विज्ञानवारांनिधिपारदृश्वा सुधीश्च साधुश्च कविः सुरूपः॥

महानवमीविशस्यश्छागशिशुरिव वेपमानः परीक्षायूपकाष्ठं प्राप्तः। (विद्युत्प्रतिमा सुकुमारं सलज्जं पश्यन्ती ललाटे प्रणामाञ्जलिं निबध्नाति। सुकुमारोऽपि काष्ठासनं विहाय तथा कुरुते। सर्वे उपविशन्ति।)

विद्यु०। (प्रशान्तं प्रति सकुण्ठम्) आर्य! परीक्षेयं मत्स्वसुः प्रत्यक्षमेव करणीया। भवतः पुरस्तात्तस्याः स्वच्छन्दवृत्तिर्धृष्टतैव स्यात्। तदुपायान्तराभावात् सनिर्बन्धमहं प्रार्थये परीक्षाकाले कक्ष्यान्तरे भवताऽवस्थातव्यमिति। निजौदार्येण क्षन्तव्यमिदमनिच्छाचरितमसौजन्यम्। (वैद्युतीमाह्वानघण्टिकां निनादयति। प्रविशति पूर्णचन्द्रः।) पूर्णचन्द्र! आर्यमिश्रान् ग्रन्थागारं प्रापय।

प्रशा०। किमत्र कालात्ययेन? भैषज्यभवनमेव गच्छामि।

विद्यु०। नहि नहि। पश्चाद्भवता मे प्रयोजनमस्ति। ग्रन्थागार एव स्थातव्यम्। तत्र विचित्राणि बहूनि पुस्तकानि सन्ति। यथेष्टं जुष्यन्तां तानि।

प्रशा०। तद्दर्शनार्थं दिनान्तरे मयाऽऽगन्तव्यम्। अद्य तावत् साधयामि।

विद्यु०। (कृताञ्जलिः) गच्छति चेद्भवानात्मानं कृतापराधं मंस्ये। अतो न गन्तव्यम्।

प्रशा०। तर्हि स्थातव्यमेव मया। एहि पूर्णचन्द्र! ग्रन्थागारमार्गं प्रदर्शय।

विद्यु०। पूर्णचन्द्र! भावमिश्रान् ग्रन्थागारं प्रापय्य भगिनीं मे प्रेषय।

( पूर्णचन्द्रः प्रशान्तश्च निष्क्रामतः। )

विद्यु०। ( सुकुमारं प्रति ) सौम्य! अतिवर्तितसायंसमयः समागतः खलु भवान्। मन्ये पत्रनिर्दिष्टः क्षणो विस्मृत एव भवता।

सुकु०। कश्चिद्विलम्बो घटित एव। रोगिदर्शनाय गतोऽसौ प्रशान्तहतकः। तत्प्रत्यागमं प्रतीक्षमाणस्य मे कालात्ययो जातः। त्रुटिमिमां क्षन्तुमर्हति भवती।

विद्यु०। आत्मप्रत्ययाभावस्य लक्षणमिवैतत् प्रतीयते। अभूत्वा मित्रमुखापेक्षी कथमेकक एव नागतो भवान्?

सुकु०। ( मस्तकं कण्डूयमानः ) तदेव मे कर्तव्यमासीत्। परन्तु तेनैवाहमुक्तो मया साकं त्वया गन्तव्यमिति। भद्रे! मद्गतप्राणोऽसौ मे सुहृत्।

विद्यु०। ( सस्मितम् ) अकथितमपि तन्मे विदितम्। ( ततः प्रविशति कुन्दकलिका ) भद्र! इयं विद्युत्प्रतिमा। ममैव मातृष्वसेयी।

सुकु०। ( प्रतिपत्तिमूढतां नाटयन् ) किमिदमुच्यते नाम! इयं चेद् विद्युत्प्रतिमा, किं नाम्नाऽभिधीयते भवती?

विद्यु०। कुन्दकलिकाभिधानाऽहम्।

सुकु०। ( करतलाभ्यां नेत्रे प्रमृजन् ) किमहं सचेतनः सुप्तो वा?

विद्यु०। सर्वथा प्रबुद्ध एव भवान्।

सुकु०। ( सशिरःकम्पम् ) विद्युत्प्रतिमा चेत् सहसा कुन्दकलिकायां विपरिणमते नाहं कथमपि प्रकृतिस्थः।

विद्यु०। ( सस्मितम् ) योषितां विषये पुंसामीदृशी भ्रान्तिः प्रायशो दृश्यते।

सुकु०। ( उत्तेजनां नाटयन् ) भ्रान्तिः! भ्रान्तिः! भद्रे! नास्ति मे भ्रान्तेरवकाशः। ( वस्त्राभ्यन्तराच्चित्रं निष्कास्य ) कथय तावत् कस्या नु प्रतिकृतिरियम्।

विद्यु०। ( चित्रं गृहीत्वा तत् पश्यन्ती सभयम् ) ममैवेयम्।

सुकु०। अर्थाद्विद्युत्प्रतिमायाः?

विद्यु०। ( स्खलितवचना ) ना-ना-नाहं वि-वि-विद्युत्प्रतिमा। भद्र! कुतस्तावदियमधिगता?

सुकु०। आश्चर्यम्! आश्चर्यम्! कदाचित् सखा मे चन्द्रकलाचित्रालयशिल्पिन विप्रलब्धः!

विद्यु० । ( समाश्वस्ता ) किमत्र चित्रम् ? नितरां धूर्त्ता हि शिल्पिनः ।

सुकु० । ( विमृश्य ) भद्रे ! तदपि न सम्भवति । उभाभ्यामेव कृतपरिचयोऽसौ प्रशान्तः । अत्रैव भवने रोगिणीदर्शनार्थमागतोऽसौ । कथ्यतामधुना द्वयोः कतरा रोगिणीभूमिकां श्रितवती ? कुन्दकलिकेति तेनैवाहमुक्तः । ( विद्युत्प्रतिमा निरुत्तरं निषण्णा । ) कथं मूकायते भवती ? चित्रमिदं विद्युत्प्रतिमाया इत्युक्तोऽहं प्रशान्तेन । ततो भवत्या चेत् सत्यमुच्यते, प्रशान्तेनैवाहं प्रवञ्चितः । चित्रगतैव ललना मया प्रार्थिता नान्या । भद्रे न मे परीक्षया प्रयोजनम् । साधयाम्यहम् । ( द्वाराभिमुखं गच्छति । कुन्दकलिका स्वमासनं परित्यज्य झटिति तमनुसरति । )

कुन्द० । सौम्य ! प्रत्यागम्यताम् । सुहृदा नैव प्रतारितस्त्वम् । ( विद्युत्प्रतिमां प्रति ) प्रतिमे ! आस्तां तावदिदं कौतुकम् । ( सुकुमारं प्रति ) भद्र ! इयमेव विद्युत्प्रतिमा नाहम् ।

सुकु० । ( प्रत्यावृत्य विद्युत्प्रतिमायाः पुरतस्तिष्ठन् तां भर्त्सयमानश्च ) तत् त्वयैवाहं प्रतारितः ? अत्यद्भुतमेतत् । क्व वा त्रिदिवदुर्लभमनवद्यमिदं रूपं क्व वा छलनामलीमसमन्तःकरणम् । पुण्यश्लोकस्य विश्वविजयस्यात्मजायां नैतदुपपद्यते । ( विद्युत्प्रतिमा लज्जया कुण्ठया च मुखमवनमयति । )

कुन्द० । अलमुपालम्भेन । उपविष्टे भवति सर्वमेव व्याखास्यते ।

सुकु० । ( उपविश्य ) किं विवक्ष्यते ?

कुन्द० । भद्र स्वरूपेण स्वसा मे भवन्तं सम्भाषितुं लज्जते स्म । एतदेव च्छद्मश्रयणकारणम् ।

सुकु० । ( विहस्य तिक्तस्वरेण ) छलनायां योषितामशिक्षितपटुत्वं मयाऽपि श्रुतपूर्वं परन्तु न मे तत्र प्रत्यय आसीत् । अद्य तु तत् स्वयमेव प्रत्यक्षीकृतम् ।

कुन्द० । ( रोषमभिनीय ) अहो नारीविद्वेषः ! सर्वमेव विपरीतं दृश्यते भवता ।

सुकु० । ( विहस्य ) भद्रे ! नैवं वक्तुमर्हति भवती । यद्यहमद्धैव स्त्रीविद्वेषी कथमयं प्राणान्तकरः स्त्रीरत्नलाभप्रयासः ?

कुन्द० । कथं तदहमपि ज्ञातुमिच्छामि । भद्रसमाजं विहाय भवता वन्यपशुभिरेव विचरितव्यम् ।

सुकु० । भद्रे ! विभ्रान्ता भवती । स्त्रियो मया देव्य इव बहु मन्यन्ते । संसारधन्वनि ता एव मरूद्यानसमाः । परन्तु कैतवशून्यं मनो मे प्रतारणं न सहते ।

कुन्द० । प्रतारणमित्यसकृदुक्तं भवता । क्वात्र तावत् प्रतारणम् ? परिहास-

प्रियतया ; यदेतदनुष्ठितं तेन भवतः किमपकृतं नाम ? अपराधश्चेदयं किं महताऽप्यनुशयेन न तस्य प्रायश्चित्तं जातम् ? लज्जया भूगर्भं प्रवेष्टुमनसं कथं नेक्षसे मे स्वसारम् ? किं पारुष्येणैव घटितं ते हृदयम् ? ( सुकुमारो विद्युत्प्रतिमां चिरं निर्वर्णयति । शनैस्तस्य कठिना मुखभङ्गिः कोमलतां प्रतिपद्यते । )

सुकु० । ( विद्युत्प्रतिमां प्रति ) अयि ! कथं दूयसे ? यत्किञ्चिदुक्तं मया तत्तवैव हितकाम्यया । शारीरसुषमायां ते दोषलेशमपि न पश्यामि । मानससौन्दर्यमपि तेऽनवद्यं भवत्वित्येव सर्वान्तःकरणेन काम्यते मया । तथाऽपि यद्यनुचितमशिष्टं वा किमप्युक्तं तन्मर्षयितुमर्हसि । ( विद्युत्प्रतिमा लज्जामधुरं स्मितं करोति । )

कुन्द० । भद्र ! प्रसन्नश्चेद् भवान् सम्प्रति प्रस्तुतमनुसरणीयम् ।

सुकु० । तथाऽस्तु ।

कुन्द० । यद्भवता स्वचरणरजोभिः पावितं गृहमिदं तन्मन्ये कविताऽपि भवता विरचितैव ।

सुकु० । रचिता हि काचित् । कवितापदवाच्याऽसौ न वेत्यत्र भवत्यावेव प्रमाणम् । इयमेव मे रचना । ( कवितालिपिं ददाति । )

कुन्द० । प्रतिमे ! कवितेयं पठ्यते । दत्तावधाना भव । ( वाचयति । )

यस्यावश्याधिपत्यं प्रकटयति शिरोहैमसुकुटं
धीरं ध्यानावधानं विरतिविरहिता मौनपरता ।
येनोद्गीर्णोत्सलक्षैर्द्रवमयकरुणा रक्षति भुवं
विस्मर्तुं सुन्दरि ! त्वां तमहमुपगतो भूधरपतिम् ॥३॥

नैसर्गो वस्तुवर्गः स्पृशति न तु ममाशान्तहृदयं
त्वच्चिन्ता जृम्भमाणा कवलयति मम स्वान्तमनिशम् ।
तन्मे नायं विधत्ते शिशिरसितगिरिस्तापहरणं
सुभ्रु ! त्वामन्तरेण ध्रुवतरशरणं नास्ति किमपि ॥४॥

एहि त्वं मेघमाले ! ज्वलति मम मनोदावदहन-
स्तूर्णं निर्वापयैतं शिशिरमधुरिमासारविसरैः ।
सान्निध्यं ते नवीनप्रणयरविकरैरिन्द्रधनुषो
नानावर्णैः प्रकामं भवतु मयि समारोहरुचिरम् ॥५॥

दिष्ट्या सारथ्यमस्मिञ्छ्रयसि यदि मे जीवनरथे
पन्थानं स प्रयायाद्विषममपि विनोद्घातविपदः ।

दैवात् प्रेमप्रवाहैः स्नपयसि यदि मामीप्सिततमे !
साफल्येनाभिरामं सपदि मम भवेदूषरजनुः ॥६॥

भद्र ! मनोज्ञेयं कविता क्व नाम रचिता भवता ?

सुकु० । कवितापदैरेव तत् स्फुटतां नीतम् ।

कुन्द० । यतो हिमाचलस्य वर्णनं दृश्यते, मन्ये भागीरथीव हिमाद्रिप्रभवेयम् ।

सुकु० । यथार्थमनुमितम् ।

कुन्द० । किं भ्रमणायैव तत्र गतो भवान् ?

सुकु० । विलासिनः स्वास्थ्यान्वेषिणो वा तदर्थं गच्छन्ति । नाहमात्मानं विलासिनं रोगाभिभूतं वा स्मरामि । भद्र ! तपश्चरणायैव गतोऽहम् ।

कुन्द० । तरुण एव भवान् । नायं तपश्चरणकालः । तज् ज्ञातुमिच्छामि किमर्थकोऽयमध्यवसायः ।

सुकु० । "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।" मनोरथसिद्धिरेव मे प्रवृत्तेर्मूलम् ।

कुन्द० । कस्तावदसौ मनोरथो यस्तरुणमपि भवन्तं दुष्करेऽस्मिन् कर्मणि प्रावर्तयत् ?

सुकु० । नायं प्रश्नः समुचितः ।

कुन्द० । मन्ये कविप्रतिभोन्मीलनमेव भवता लक्ष्यीकृतम् ।

सुकु० । तदपि वक्तुं शक्यते ।

कुन्द० । किं तेनैव तपसा कालिदास इव भवानपि पूर्णमनोरथोऽजायत ?

सुकु० । भद्रे ! तपसा शशस्य शृङ्गं न प्रादुर्भवति, नापि वैज्ञानिकस्य कविताशक्ति-विकाशः । कारणान्तरमस्ति ।

कुन्द० । तदपि श्रोतुमिच्छामि ।

सुकु० । नास्त्यन्तो भवत्याः कौतूहलस्य । श्रूयताम् । कामपि तरुणीं प्रति चित्रदर्शनेनैव नवानुरक्तिर्मे बलवदजृम्भत । कल्पलोकतोरणोद्धाटनाय सैव मे काञ्चनकुञ्चिकाऽऽसीत् । किमवसिता मे परीक्षा ?

कुन्द० । न हि । इममपावृतद्वारं कल्पलोकं प्रविष्टेन भवता कति नाम कविता विरचिताः ।

सुकु० । इयमेकैव, नान्या ।

कुन्द० । किमेकयैव कवितया कवियशो लभ्यते ?

सुकु० । भद्रे नाहं कवियशःप्रार्थी । प्रियाप्रसाद एव मे काम्यः ।

कुन्द० । कवितेयं स्वकृतेति न यावत् प्रमाप्यते, तावत् प्रियाप्रसादोऽपि दुराप एव ।

सुकु० । ( उत्तेजितवत् ) किमियं परकृता ?

श्रीः

# काञ्चनकुञ्चिकम्

( प्रकरणम् )

भट्टपल्लीवास्तव्य-श्रीविष्णुपदभट्टाचार्य-विरचितम्

( मञ्जूषायां प्रकाशितम् )

वैशाख, १८८१

# काञ्चनकुञ्चिकम्

## पात्रपरिचयः

**पुरुषाः**

१। सुकुमारः—सुशिक्षितो निष्कर्मा तरुणः ( नायकः )

२। प्रशान्तः—चिकित्सकः (सुकुमारमित्रम्). ( उपनायकः )

३। पुलकप्रकाशः—विद्युत्प्रतिमायाः पाणिप्रार्थी तरुणः कविः।

४। चिरञ्जीवः—विद्युत्प्रतिमाया विषयकर्माध्यक्षः।

५। जनार्दनठक्कुरः—विवाहघटकः।

६। पूर्णचन्द्रः—विद्युत्प्रतिमायाः किङ्करः।

७। गर्जनसिंहः—विद्युत्प्रतिमाया दौवारिकः।

८। धुरन्धरः—वस्त्रवयनशिल्पालयपतिः।

९। वागानन्दः—धुरन्धरस्य कर्माध्यक्षः।

१०। तुन्दिलसिंहः—धुरन्धरस्य प्रतीहारी।

११। पतितपावनः—प्रशान्तस्य भेषजपरिवेषकः (compounder).

१२। सूत्रधारः।

१३। मारिषः—सूत्रधार-सहकारी।

१४। विरूपाक्षः—कश्चिन्नागरिकः।

१५। राष्ट्रीयः पत्रवाहः (postal peon)।

पञ्चषा नागरिकाः।

**स्त्रियः**

१। विद्युत्प्रतिमा ( प्रतिमा )—धनवती रूपयौवनान्विता कुमारी ( नायिका )।

२। कुन्दकलिका ( कलिका ) प्रतिमाया मातृष्वसेयी ( उपनायिका )

३। गणेशजननी—प्रतिमायाः प्रेष्या।

---

कुन्द०। नाहं जानामि। यथार्हं प्रमाणं भवतैवोपस्थापनीयम्।

सुकु०। रहोरचितायाः कवितायाः मद्वचनमन्तरेण नास्ति प्रमाणान्तरम्।

कुन्द०। नैवं वक्तव्यम्। अत्रैव चेदस्मन्निर्दिष्टविषयमधिकृत्य कवितान्तरं रचयति भवांस्तदेव प्रकृष्टं प्रमाणं स्यात्।

सुकु०। (कुप्यन्) भद्रे! कथं मद्वचने प्रत्ययो न निधीयते? नाहं जात्वपि मिथ्या ब्रवीमि।

कुन्द०। सत्यम्। तथाऽपि प्रत्यक्षं रचनशक्तिं प्रदर्शयितुमर्हति भवान्। संशयो नः सर्वथा निरसनीयः।

सुकु०। (गम्भीरस्वरेण) सन्दिहानानां संशयनिरसनं वह्निपरीक्षयाऽपि न साध्यम्, ततस्तत्प्रयासो मया नैव करिष्यते। मृषाभाषिणमेव मां मन्यतां भवती। वामनेन मया चन्द्रकलाजिघृक्षया बाहुरुन्नमितः। तत्फलमपि लब्धम्। आजीवनं सत्यमाश्रयन्नपि मिथ्यावादीति कलङ्केन लाञ्छितोऽहं संवृत्तः। एवंविधैव मे नियतिः! मादृशेन प्रतारकेण संसर्गो भवादृशैर्जनैः सर्वथा परिहर्तव्यः। तदात्मानं दूरमपसारयिष्यामि। स्वस्ति भवतीभ्याम्।

(आसनादुत्थितः सुकुमारो हृतसर्वस्व इव विधुरमतिः शनैर्बहिर्गमनद्वारमुपैति। त्यक्तासना विद्युत्प्रतिमाऽपि प्रागेव द्वारमासाद्य स्वशरीरेण तदवष्टभ्य स्थिता।)

सुकु०। भद्रे! प्रकोष्ठादस्मान्निर्गमनाय नास्ति द्वितीयः पन्थाः। द्वारादपसर्तव्यम्। (विद्युत्प्रतिमा निरुत्तरा।) भद्रे! कथमेवं स्थीयते? देहि मे पन्थानम्। (विद्युत्प्रतिमा निरुत्तरा।) किमर्थकमिदमाचरणम्? किं मां बन्दीकर्तुमिच्छसि? (विद्युत्प्रतिमा निरुत्तरा।) भद्रे! भूयो ब्रवीमि देहि मे पन्थानम्।

विद्यु०। (बाष्पावरुद्धकण्ठा) कथम्?

सुकु०। स्वस्थानं मया प्रतिगन्तव्यम्।

विद्यु०। (साश्रुनयना) भद्र! न गन्तव्यम।

सुकु०। (तां तथा दृष्ट्वा विस्मित इव) कथं रुद्यते त्वया? कथं वा निर्गच्छतो मे प्रतिरोधो विधीयते?

विद्यु०। (अश्रूणि विमुञ्चन्ती) एवं मामनामन्त्र्य क्व गम्यते त्वयाऽऽर्यपु- (इत्यर्धोक्ते सलज्जम्) आर्य! (कृताञ्जलिः) निरागसं मां कथमपराधिनीं मन्यसे? न मया त्वद्वचने विचिकित्सितम्। कुन्दकलिकैवात्र कृतापराधा, नाहम्। कथमद्य गुरुदण्डो मयि निपात्यते?

कुन्द०। ( सुकुमारमुपसृत्य कृताञ्जलिः ) प्रसीदतु भवान्। यन्मयोक्तं परिहास-विजल्पितं तन्मन्यमानो विस्मर्तुमर्हति भवान्। प्रत्यागम्यतामधुना। ( सर्वे प्रत्यावर्तन्ते। )

सुकु०। परिहासविजल्पितमेतत्? भद्रे केनाधिकारेण परिहाससायकानां शरव्यीकृतोऽहं त्वया?

कुन्द०। ( सस्मितम् ) आवुत्त! श्यालिकायास्तदधिकारस्तु चिरन्तनः सर्ववादिसम्मतश्च। तथापि भवदनभिमतमेवाचरितं मया। तेन च योऽयमपराधः कृतस्तत्प्रायश्चित्तमपि मयैव साधनीयमधुना। ( विद्युत्प्रतिमाया दक्षिणकरमाददाना ) आवुत्त! शास्त्रीयविधिस्तु परस्तादनुष्ठेयः। साम्प्रतं त्वयि न्यस्तचित्तायाः स्वसुर्मे गृह्यतामयं पाणिः।

उपचितसुषमाम्भःकायकासारजन्मा
ललितभुजमृणालो योऽयमम्लानकान्तिः।
प्रतलविततसद्यःप्रस्फुटारक्तपद्मं
तमहमुपहरामि प्रीतयेऽभ्यागतस्य ॥७२

सुकु०। भगिनि! नायमुपहार एव, अपि तु कल्पतरुप्रसवोऽयं कठोरतपसाऽधिगतः।

यो मे शुभं निभृतनर्मणि कण्ठमाल्यं
स्पर्शेन यो व्यथित-चित्तरसायनं मे।
सम्पत्स्यते निखिलकर्मसहायभूतः
पाणिः पुनातु दयितः स मदीयपाणिम् ॥७३

( पाणिना विद्युत्प्रतिमाया पाणिं गृह्णाति। )

अयि प्रियतमे!

शरीरिणी त्वं कविता श्रिताऽसि मां
यतस्ततोऽहं कविरेव शाश्वतः।
स्वकीयभासा रहितोऽपि चन्द्रमा
यथा भवत्यर्करुचा चिरोज्ज्वलः ॥

( नेपथ्ये शङ्खध्वनिः। ततः प्रविशन्ति चिरञ्जीवः प्रशान्तो माल्यहस्तः पूर्णचन्द्रः शङ्खहस्ता च गणेशजननी। )

प्रशा०। साधु! साधु! सखे। स्वार्थपरता त्वयि पूर्णप्रकाशं प्राप्ता। अस्मिन्नानन्दवासरे सुखदुःखभागिनमभिन्नहृदयं सुहृदं मां सर्वथाऽस्मरन्नेकक एव

प्रियायाः पाणिस्पर्शसुखमनुभवसि। नैतन्न्याय्यम्। ( सुकुमारः सलज्जं विद्युत्प्रतिमाकरतलं मुञ्चति। विद्युत्प्रतिमा कुन्दकलिका च मन्दमधुरं स्मयेते। अन्ये समुच्चैर्हसन्ति। )

चिर०। वत्स! कथं दुर्मनायमानोऽसि? अनेन विस्मृतोऽपि नास्माभिर्विस्मृतस्त्वम्। ( कुन्दकलिकां प्रति ) एहि वत्से! त्वत्पाणिश्शृङ्खलितपाणिरयं भवतु। ( कुन्दकलिकायाः करतलं प्रशान्तकरतले निधत्ते। पूर्णचन्द्रो वरद्वयस्य वधूद्वयस्य च हस्तेषु पुष्पमाल्यानि ददाति। गणेशजननी शङ्खं निनादयति। शङ्खनिनादमन्तरा माल्यविनिमयः। सर्वे चिरञ्जीवं प्रणमन्ति। )

चिर०। वत्साः किं वो भूयः प्रियमुपहरामि?

प्रशा०। ज्येष्ठतात! किमतः परमपि प्रियमस्ति?

स्थिरां रोधोभूमिं प्लव इव जलावर्तविधुरः
श्रितोऽयं बन्धुर्मे विधिविदलितो वाञ्छितवधूम्।
करभ्रष्टाश्चाहं पुनरधिगतः पूर्वदयितां
बहोः कालस्यान्ते नल इव नृपो भीमतनुजाम्॥

तथापि यन्नो हितं भवेदाभ्यामेव तद्गीतिमुखेन प्रकाश्यताम्।

गानम्

विद्यु०-कुन्द०। शान्तिः शान्तिः शान्तिः
स्थितिरिह तरसा क्रियतां सरसा ह्रियतां मनसः श्रान्तिः
अमलं चित्तं रमतां नित्यं क्रमतां तस्मिन् क्षान्तिः।
नन्दनवनतामयतां धरणिः
कुसुमैर्मृदुला भवतु च सरणि-
र्मोहतिमिरहर-नूतनतरणिः
स्फुरतु च भास्वरकान्तिः।
चल दृढचरणं प्रियकरशरणं शाम्यतु विपथभ्रान्तिः॥
शान्तिः शान्तिः शान्तिः।

पटीक्षेपः॥

---

# काञ्चनकुञ्चिकम्

## शुद्धिपत्रम्

(१)

| पृष्ठसंख्या | पङ्क्तिसंख्या | परिवर्तनीयाः पाठाः | परिवर्त्तितपाठाः |
|---|---|---|---|
| ३ | ११ | समृद्ध | समृद्धे |
| ३ | १५ | स्वातन्त्रा | स्वातन्त्र्य |
| ३ | २१ | पारतन्त्र्याग्र | पारतन्त्र्योग्र |
| ५ | २७ | प्रका० | प्रशा० |
| ७ | ९ | पङ्क ता | पङ्क ुता |
| ८ | १८ | विद्यत्प्रतिमा | विद्युत्प्रतिमा |
| १० | ६ | वध | वधू |
| १० | ९ | रक्षासङ्गा | रङ्गासङ्गा |
| १० | १२ | प्रसङ्गेनेना | प्रसङ्गेनानेना |
| ११ | १३ | तह्यन्यः | तर्ह्यन्यः |
| १२ | १७ | भ्रियते | भ्रियेत |
| १६ | ५ | गृहाण्याविशता | गृहं प्रविशता |
| १९ | ८ | श्चुचम्ब | श्चुचुम्ब |
| २१ | १३ | हस्तस्पर्शन | हस्तस्पर्शेन |
| २१ | २३ | आश्चयम् | आश्चर्यम् |
| २१ | २७ | घरः० | धुर० |
| २२ | ४ | प्रषितम् | प्रेषितम् |
| २५ | ३० | अनुष्ठ | अनुष्ठे |
| २७ | २९ | सच्चं तुह | सच्चं। पुण्णचन्द तुह |
| २८ | २६ | भरिदव्वा | सुमरिदव्वा |
| २९ | ११ कोऽसौ भाग्यवान् विडालो यस्य भोगाय दुग्धशिक्या त्रुटिता ?: | | |
| ३१ | ३ | रुचि | रुचिं |
| ३१ | २६ | मालेयं वाग्विसृष्टा | वाणीसृग्वा सगेषा |
| ४१ | ६ | विद्य० | विद्यु० |
| ४१ | ८ | विद्यत् | विद्युत् |
| ४२ | १४ | श्रतम् | श्रुतं |
| ६३ | ६ | हितकाम्यया | हितकामनया |

# धनञ्जयपुरञ्जयम् (रूपकम्)

(प्राक्तनोपाख्यानमूलकम्)

## प्रस्तावना ।

महेन्द्रवन्द्योऽपि तृणाय नाकं मत्वा श्मशानं बहुमन्यते यः ।
अकिञ्चनोऽप्यर्थपतिप्रणम्यो भूयाद्भवो वोऽखिलभूतिहेतुः ॥

(नान्द्यन्ते प्रविशति सूत्रधारः ।)

सूत्र० । अद्य तावच्छिवचतुर्दशीमेलकम् । विपश्चितां मनोविनोदनाय स्वल्पायास-साध्यं किमपि क्षुद्रं रूपकमभिनेतव्यमस्माभिरित्यादिष्टा वयम् । तद् भट्ट-पल्लीवास्तव्येन शौनकेन भट्टाचार्योपनाम्ना श्रीविष्णुपद-शर्मणा विरचितं धनञ्जयपुरञ्जयाख्यं स्वल्पकं रूपकमेव समयोपयोगि भवेदिति मन्यामहे वयम् । (तारस्वरेण) भो भोः कुशीलवाः ! प्राप्तोऽधुनाऽभिनयकालस्तत् स्वस्वकर्मस्ववहितै र्भवितव्यं सर्वैः । (प्रविशति मारिषः ।)

मारि० । आर्य ! अनभिमतमापतितं नाम । सर्वे हि कुशीलवा नितान्तविरागवन्तो दृश्यन्ते ।

सूत्र० । कथम् ?

मारि० । तेष्वन्यतमेन कृपानाथेन स्वनैपुण्य सर्वातिशायीति प्रतिपादयता सर्व एव परिभूताः । ततो रङ्गादस्माद् बहिष्करणमर्हत्यसाविति सर्वेषां सम्मतम् । यावत्तथा न क्रियते तावदभिनयोपक्रमो न सम्भवति ।

सूत्र० । अहो स्पर्धातिशयः ! अधुनैव गलहस्तेन निःसार्यताम् असौ दुर्विनीतः । अवलोकयत्वसौ जाल्मः—

कीर्तयन्निजनैपुण्यं जनकं स्वं धनञ्जयम् ।
निरयं प्रापयामास स्मयाविष्टः पुरञ्जयः ॥

एहि । प्रक्रान्तमेवानुसरामः ।

## प्रथमोऽङ्कः ।

(पल्लीस्थमुटजम् । तदलिन्दे समासीनो धनञ्जयो नाम वृद्धो ब्राह्मणः करतल-निहितकपोलः स्वं दुरदृष्टं चिन्तयति मुहुर्निश्वसिति च ।)

धन० । अहो भागधेयम् ! मृतपत्नीकस्य मे विंशतिः संवत्सराः समतीताः । स्तनन्धयं पुरञ्जयं विहाय भाग्यवती सा पुरन्दरपुरातिथिरभवत् । उपरतायां तस्यां महता क्लेशेन लालितः संवर्धितश्चासौ मे पुत्रः । साम्प्रतं प्राप्तवयस्कोऽपि

शिशुरिव मूढमतिरसौ न मां गणयति। जीवितोऽहं मृतो वेति वार्तामपि न पृच्छति। किमत्र स्थित्या? वाराणसीमेव गत्वा भगवतः श्रीविश्वेश्वरस्य चरणकमलमाश्रित्य मदायुषः शेषं क्षपयितुमिच्छामि। परन्तु जराक्लिष्टं मे शरीरम्। दृष्टिरपि मे क्षीणा। सुदूरदेशगमने को नु मे सहायो भवेत्? (ततः प्रविशति मल्लोचितवेषधरः पुरञ्जयः, पितरमतिक्रामन्नेव गन्तुं समीहते।) कोऽयं गच्छति? पदध्वनिनानुमीयते पुरञ्जय इति। वत्स पुरञ्जय!

पुर०। (सविरागम्) अयमहमस्मि। किमर्थमाह्वयसि माम्?

धन०। (इतस्ततो विलोकयन्) क्षीणदृष्टिस्त्वां न पश्यामि। इतस्तावदागम्यताम्।

पुर०। (उपसर्पन्) निरवसरोऽहमधुना। यद्वक्तव्यं द्रागेवोच्यताम्।

धन०। जात! क्व नु गमयसि दिवसान्? दिनान्तेऽपि शिखाग्रं ते न दृश्यते।

पुर०। नाहं भवानिव कूपमण्डूकः। अधुना मल्लक्रीडापरिशीलनाय मित्राणि मां प्रतीक्षन्ते। साधयाम्यहम्।

धन०। वत्स! क्षणं तिष्ठ। वक्तव्यमस्ति मे किञ्चित्। चरमावस्थं मे शरीरम्, यस्मिन् कस्मिन्नपि क्षणे प्राणा मे व्युत्क्रामेयुः। यद्यधुनाऽपि न श्रूयेत मे वचनं पश्चान्मनस्तापो जायेत।

पुर०। तर्हि त्वरितमेव कथ्यताम्।

धन०। वत्स! विंशतिवर्षदेशीयोऽसि त्वम्। एतावन्तं कालं न किमपि याचितस्त्वं मया। परन्तु चिन्तैका मां बलवद् बाधते। तवैव लालनविधौ निविष्टचित्तेन मया मदिष्टदेवस्य शङ्करस्य नामाऽपि सर्वथा विस्मृतम्। पारलौकिकं कृत्यं न किमप्यनुष्ठितं नाम। मरणाधिदेवतायाश्चरणध्वनिरधुना कर्णकुहरयो रंरण्यमाना महाभीतिं मे जनयति। ततो वाराणसीं गन्तुकामोऽस्मि। तत्र भूतभावनो भवानीपतिरेव मे शरणं भवेत्।

पुर०। (उत्फुल्लवत्) उत्तमः कल्पः। अविलम्बमेव गम्यताम्। नाहं त्वद्विरहेण विमनायमानः स्याम्।

धन०। तदहमपि जानामि। केवलं चिन्तयामि दूरपथयात्रिणः कः खलु मे सहायो भवेदिति। एकको वार्धकविकलीकृतसर्वाङ्गः पङ्गुरेवाहम्।

पुर०। परिहृतमल्लविलासो नाहं गन्तुमलम्। अन्यः कोऽपि विचीयताम्।

धन०। त्वदृते नास्ति मे सहायान्तरम्। मल्लक्रीडया संहननं ते वृकोदरस्येव पेशीबहुलं सञ्जातम्। किमनेन सुसंभृतकायेन त्वं जनकस्यान्तिममपि मनोरथं न पूरयसि। ततो सनिर्बन्धं प्रार्थये त्वमेव मां पुण्यक्षेत्रं प्रापयेति।

पुर०। ( क्षणं विमृश्य ) भवतु। अहमेव भवन्तं वाराणसीं प्रापय्य तदैव प्रत्यागमिष्यामि।

धन०। वत्स! चिरं जीव।

पुर०। श्वः प्रातरेव सन्नद्धो भवतु भवान्। अधुनाऽहं मल्लक्षेत्र गच्छामि। ( पटी परिवर्तते। )

---

## द्वितीयोऽङ्कः

(वाराणसीक्षेत्रम्। पितृवियोगसमुचितवेषधरः पुरञ्जयो गङ्गातटस्थं वृक्षतल्पमधिशेते।)

पुर०। ( स्वगतम् ) अहो मे कृतित्वम्! नास्त्येव वसुन्धरायां मद्विधः कोऽपि सुपुत्रः। अन्ये हि पितरं धनादिना पालयन्ति। तुच्छमेव तत्। मया तु पितृपादास्तापसैरपि दुष्प्रापं निःश्रेयसं प्रापिताः। काशीमृतस्य सद्योमुक्तिर्भवतीति विबुधैः कीर्त्यते। ततः पिता मे मुक्तिमधिगत इत्यत्र नास्ति कोऽपि संशयः। ( मुहुर्जृम्भते ) अहो! किमित्यकालनिद्रा मामभिभवति? भवतु क्षणमहं स्वप्स्यामि। ( पुरञ्जयः स्वपिति। स्वप्नावस्थायामाविर्भवति ज्योतिर्मण्डलमध्यस्थो भगवान् भूतभावनो विश्वेश्वरः। )

विश्वे०। अरे मूढ! अलं विकत्थनया। पश्य पश्य तातं ते प्राप्तनिरयम्।

( ततः पटपरिवर्तने नरकदृश्यमपावृतं भवति। यमदूतद्वयेन ताड्यमानश्च करुणं परिदेवयन् धनञ्जयो दृश्यते। )

धन०। हा हतोऽस्मि! कियता नाम पापेन पुरञ्जयेन मे पुत्रता प्राप्ता! पिनाकिचरणशरणस्य काशीमृतस्यापि मे निरयप्राप्तिस्तत एव जाता। धिगधन्यं माम्! धिङ् मे कुलाङ्गारं तनयम्!

पुर०। पितः! मा भैषीः। एषोऽहं पुरञ्जयः। भवदुत्पीडका मया निमेषेणैव निपातिताः स्युः। तिष्ठत तिष्ठत रे दुर्वृत्ताः! न जानासि भारतख्यातनामानं मल्लप्रवीरं पुरञ्जयम्। ( पाणिपादमुत्क्षिपति। )

( सहसा पटीपरिवर्तने सधनञ्जयं नरकदृश्यं विलीयते। )

विश्वे०। मूढ! किमधुनाऽपि विकत्थसे? तातस्याधोगतेस्त्वमेव कारणम्। तवैव विकत्थनया पिता ते पिशाचत्वमासाद्य नारकयातनामनुभवति। धिक् त्वाम्।

पुर०। प्रसीद प्रसीद प्रभो! चरणाब्जयोस्ते पतामि। अरुन्तुदं खल्वेतद् दृश्यम्। पितुस्त्राणोपायं कथयितुमर्हति भवान्।

विश्व० । पापस्य ते प्रायश्चित्तमपि न विद्यते ।

पुर० । प्रभो यथार्थं सानुशयोऽहमधुना । अतो मर्षयितुमर्हसि माम् । भोः शरण्य ! रक्ष रक्ष मामशरणम् ।

महे० । तर्हि श्रूयताम् । अस्ति कश्चिदुपायः परन्तु सुदुष्कर एवासौ ।

पुर० । प्राणव्ययेनापि पितरमुद्धर्तुं व्यवसितोऽहम् ।

महे० । साधु ! साधु ! माहीष्मतीपुराधिपसन्निधानं गन्तव्यं त्वया । अतिथिसेवा-परायणोऽसौ नरपतिः । स्वगृहागतान् पूजयित्वा प्रतिदिनं महापुण्यम् अर्जयति । तेनैकदिवसार्जितं तत् पुण्यं त्वञ्चेदाहर्तुं शक्नोषि पिता ते क्षपितकिल्बिषोऽचिरा-देव मत्सायुज्यं लप्स्यते ।

पुर० । अद्यैव माहीष्मतीमभि गन्तव्यं मया ।

महे० । परन्तु नितरां दुर्गमोऽसौ पन्थाः । भीषणश्वापदसङ्कुलं महारण्यम् अति-क्रमणीयं त्वया ।

पुर० । नास्ति मे ततोऽपि भीतिलेशः । मल्लक्रीडया सुसंहतं मे संहननम् । श्वाप-दानामप्यहं शङ्काकारणम् ।

महे० । तर्हि गम्यतां वत्स ! शिवास्ते सन्तु पन्थानः । भूयो विकत्थमानोऽपि साहसेनानेन न त्वं न शोभसे ।

( महादेवस्तत्रैव विलीयते । सुप्तोत्थितः पुरन्दरो विस्मितवल्लक्ष्यते । )

पुर० । विचित्रोऽयं स्वप्नः । मन्ये स्वप्नेनैव दैवनिर्देशोऽधिगम्यते । ततो यथानिर्देशं करणीयमेव मया । अन्यथा पितुरानृण्यं कथं वा सम्पत्स्यते ? ( निष्क्रामति । )

---

## तृतीयोऽङ्कः

( गहनमरण्यम् । नैशोऽन्धकारो दिशि दिशि प्रसरति । प्रविशति समुद्भ्रान्तः पुरञ्जयः । )

पुर० । ( सविलापम् ) अहो दुर्दैवम् ! यथाशक्ति त्वरितं चलन्नपि महारण्यस्यान्तं नैव पश्यामि ।

ध्वान्ताच्छन्नं वनतलमिदं सङ्कुलं वृक्षगुल्मै-
र्लुप्ता सम्यग् वनचरकुलैः सेविता वर्त्मरेखा ।
दिग्भ्रान्तोऽहं यदि तव पितस्त्राणहेतुर्नवास्यां
सिंह-ग्रस्तस्तव सहचरो रौरवेऽहं भवेयम् ॥

( पुरतो विलोक्य ) आः किमेतत्! मध्येतिमिरमालोकरश्मिरिव लक्ष्यते। ( उच्चैः ) कः कोऽत्र भोः? द्रुतपदक्षेपमागम्यताम्। विपन्नोऽहं ब्राह्मणः।

( ततः प्रविशति ज्वलदुल्काहस्तो धनुर्धरः कोऽपि निषादः। )

निषा०। अहो दुःसाहसम्! कथमसहायो गभीरं वनमिदं प्रविष्टो भवान्?

पुर०। नियतिपरिचालितोऽहमत्रागतः। सौम्य! दर्शय मे निर्गममार्गम्।

निषा०। तमिस्रायां न तत्सम्भवति। यदि दीनस्य ममातिथ्यं भवते रोचते, पादरजसा पावय मे कुटीरम्। तन्निकषैव वर्तते।

पुर०। त्राताऽसि त्वं मे। गच्छाग्रतः। ( पुरञ्जयानुसृतो निषादो निष्क्रामति। )

---

## चतुर्थोऽङ्कः

( वनस्थमुटजम्। प्रविशति निषादमनुगतः पुरञ्जयः। )

निषा०। भगवन्! इदं मे कुटीरम्। प्रवेष्टुमर्हति भवान्। अत्रैव निःशङ्कं भवता निशेयं यापनीया।

पुर०। अहो! स्वल्पावकाशमिदं पर्णोटजम्! एकस्यापि नात्र पर्याप्तं शयनस्थानं वर्तते। मयैव चेदधिक्रियते तत् क्व वा शयिष्यसे त्वम्?

निषा०। महात्मन्! मदर्थे चिन्ता नैव कार्या। बहिरेवाहं धनुष्पाणिः स्थास्यामि।

पुर०। नैतदुपपन्नम्। गृहस्वामिनं विपदि निपात्य न मया निजप्राणाः कथमपि रक्षितव्याः! यद्भावि तद्भवतु साधयाम्यहम्। ( गन्तुं प्रक्रमते। )

निषा०। ( पादयोर्निपत्य ) भगवन्नैवं कार्यम्। अतिथिर्भवान् साक्षाद्दैवतमेव मे। पशुमारणैकव्रतो निषादोऽहम्। बहुजन्मार्जित-सुकृतैर्भवानत्र प्राप्तः। सर्वत्रैव निशायापनोचिता वयम्। अतो न काऽपि विचारणा विधेया। धनुर्धरेण मया श्वापदानाम् उपप्लवः सर्वथा निवारणीयः। प्रविशतु भवान् ममावसथम्।

पुर०। अहो निर्बन्धः! अगत्या त्वद्वचनमेव कर्तव्यम्। इदन्तु न मे प्रीतिमावहति।

निषा०। ( कृताञ्जलिः ) प्रभो! गृहान्तः शिक्यायां कानिचित् फलानि सन्ति। तैरेव क्षुन्निवृत्तिः कथमपि साधनीया।

पुर०। तथाऽस्तु। ( पुरञ्जयः कुटीरं प्रविशति। निषादो निष्क्रामति। )

---

प्राप्तम्। मन्ये साम्प्रतं पिता मे राजपुण्येन निरयात् त्रातो भवानीशसायुज्यमनुभवति। (जृम्भते। स्वपिति च। स्वप्नावस्थायामाविर्भवति देवो महेश्वरः।)

महे०। वत्स! पुनरहं त्वदन्तिकं प्राप्तः। साम्प्रतं निवर्णय ते निरयमुक्तं पितरम्। (जोतिर्मयशरीरो दिव्यमाल्याम्बरधरो धनञ्जयो दृश्यते।)

धन०। वत्स! सुपुत्रकार्यमनुष्ठितं त्वया। सम्यग् निर्वृतोऽहमद्य शिवसायुज्यमनुभवामि। सर्वविधकल्याणानां भाजनं त्वं भूयाः। (धनञ्जयस्तिरोधत्ते।)

पुर०। आश्चर्यमाश्चर्यम्! देवदेव! भूतभावन! कृतार्थम्मन्यस्य मे गृहाण सभक्तिकमभिवादनम्। भवत एव प्रसादेन परित्रातो मे जन्मदः पिता।

महे०। वत्स! नैवं मन्तव्यम्। महाराजस्य प्रतर्दनस्यैकदिवसार्जितेन पुण्येनैव तारितस्ते जनकः। पुनरपि श्रूयताम्। अद्यैव त्रियामान्ते महीपतेर्महिषी पुत्रमेकं प्रसोष्यते। पूर्वजन्मन्यसावेव निषादान्वयः केसरिकवलतस्ते परिरक्षणविधौ स्वप्राणान् हेलया व्यसर्जयत्। तेन सुकृतेनासौ पुण्यश्लोकस्यास्य पार्थिवस्य पुत्रतामवाप्स्यति। एतदेवातिथ्यमाहात्म्यम्।

पुर०। आश्चर्यमाश्चर्यम्।

महे०। अतोऽहं ब्रवीमि नित्यमतिथिपरिचर्यापरायणो भव। विकत्थना च विषवत् परिहरणीया।

पुर०। भगवन्निदेशोऽयं माल्यमिव मया शिरसि निधीयते।

महे०। किमन्यत् प्रियं ते करणीयं मया?

पुर०। प्रभो! किमतोऽधिकमपि प्रियमस्ति?

पिता मे निष्क्रान्तो नरकगहनान्निर्वृतिमि
मोहान्मुक्तं शश्वत् स्वहितमपि मे पश्यति मनः।
दुष्प्रापो यो योगैरपि यतिजनैर्भोगविमुखैः
स दिष्ट्याऽद्य त्वं भो भवसि भव! मद्दृष्टिपथगः॥

तथाऽपीदमस्तु—

अस्तु नः शर्मदो धर्मः परार्था कर्मणो गतिः।
सद्यः सीदतु पापस्य दम्भदीर्घः पदक्रमः॥

पटीक्षेपः॥

समाप्तमिदं रूपकम्।

पश्चिमवङ्ग-सर्वकारीय-वङ्गीय-संस्कृत-शिक्षापरिषदध्यक्ष-

डक्टरश्रीयतीन्द्रविमल-चतुर्धुरीण विरचितं

# भक्ति-विष्णुप्रियम्

## The Bhakti-Visnupriya

( A new Sanskrit drama on the life of Śrī Viṣṇupriyā,
Holy Consort of Lord Gaurāṅga )

BY

**Jatindra Bimal Chaudhuri,**
Ph. D. ( London )

Secretary, Vangīya Sanskrit Siksha Parishat,
**Govt. of West Bengal**

*(Formerly, Principal, Govt. Sanskrit College, Calcutta and Head of the Dept. of Sanskrit, Presidency College, Calcutta).*

Calcutta—1959

# आशीः

सहृदयाः, कस्य न परिचिता, कस्य न बहुमता, कस्य न सुपूजिता श्रीमती विष्णुप्रिया देवी या खलु भगवतः श्रीचैतन्यदेवस्य शक्तिश्च सहधर्मिणी च प्रथमा शिष्या चासीत्, यामवलम्ब्य पल्लवितश्च पुष्पितश्च फलितश्च भारते वर्षे चैतन्यधर्मः, ययैव प्रथमतः प्रचारिताः प्रेमभक्ति-वरिवस्योपदेशा महाप्रभोर्विनिर्मितं च नवद्वीपमण्डनायमानं महाप्रभु-मन्दिरम्, यस्यै रुरुचेतमां पत्युरभिमता कठिनतमापि तपस्या, यस्या उद्विविजिरे सर्वाणि व्यसनजातानि, यस्या गुणगणा आसेतुहिमाचलं भक्तजनैर्निरन्तरं सङ्कीत्यन्ते, यस्यां चाविद्वदङ्गनाबालं सर्वेषामेवास्थासीत्। इमामेव महीयसीं देवीमवलम्ब्य प्रीतिविष्णुप्रियम् भक्ति-विष्णुप्रियमिति परमरमणीयं प्रसादगुणसमुज्ज्वलं संदृब्धं नाटकद्वयं शारदसुधाकर-समुज्ज्वल-यशसायुष्मता यतीन्द्रविमल-चतुधुरीणेन। तत्र भक्ति-विष्णु-प्रियमिदानीं प्रकाश्यते, प्रीतिविष्णुप्रियमपि नातिचिरादेवानुरञ्जयिष्यति वाचकमहाभागान्।

आयुष्मता यतीन्द्रविमलेन तत्सहधर्मिण्या चायुष्मत्या रमादेव्या परःशतानां प्रबन्धानां प्रणयनेन, आ हिमालयाद् आ च कुमारिकायाः संस्कृतरूपकाणां प्रयोजनेन, प्राच्यवाणी-संस्थाप्रतिष्ठापनेन, पुरातत्त्व-गवेषणेन चाहर्निशमगणित-सुखलेशं संसेव्यते सुरसरस्वतीति विदितमेवेदमखिलानां भारतवर्षीयाणाम्। चिरं जीवतां श्रीमान् यतीन्द्रविमलः श्रीमती च रमा देवी, चिरं च सुखं च शान्तिं च यशश्चा-धिगच्छताम्, चिरं च गैर्वाणीं वाणीं परिचरतामिति शिवम्।

इति—श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य

# Author's Note.

We have great pleasure in presenting the lovers of Sanskrit Learning with a new Sanskrit drama called Bhakti-Viṣṇupriyam based on the life of Śrī Viṣṇupriyā, Holy consort of Śrī Kṛṣṇacaitanya Gaurāṅga Mahāprabhu.

There is hardly any character that deserves greater attention, love, respect and reverence not only from a devotee but also from every individual, irrespective of caste and creed. Still, it is a great pity that the life-history of the Holy Mother is not yet known to scholars even.

Fortunately, after a long search for materials, substantial, factual and really dependable—for writing a biography of Śrī Viṣṇupriyāji, we have been able, through Her Grace, to collect now sufficient data on the basis of which we have written a Bengali work called Śrī Viṣṇupriyā. Mother willing, this will soon see the light of the day. In dramatic form, this life-history has been divided into two parts, first up to the Renunciation of Lord Śrī Kṛṣṇacaitanya, and second—till the Mahātirodhana of the Holy Mother, under the titles Prīti-Viṣṇupriyam and Bhakti-Viṣṇupriyam respectively. This second part has been frequently staged under the direction of Principal Dr. Roma Chaudhuri in different parts of our great country ; also on many important occasions such as All India Writers' Conference, Calcutta ; All India Sanskrit Conference, Puri ; All India Devotees' Conference, Navadwip ; Foundation Day Celebration of Govt. Sanskrit Siksha Parishat and so on. All the leading musicians of West Bengal headed by Sri Pankaj Kumar Mullick and Srimati Chabi Banerj

in the musical programme of the drama, for our grateful thanks are due to them.

are indeed extremely grateful to our revered Prof. Dr. Kshitish Chandra Chatterjee for very publishing this drama in his Journal of repute, the a. May his good wishes serve as our best armour

yavani Mandir
Federation St.
Calcutta—9
10. 6. 59

**Jatindra Bimal Chaudhuri**

उत्सर्गमुखेन

## यतीन्द्रविमलस्य निवेदनम्

प्रिया नाम प्रिया नाम प्रियाया नाम केवलम्

मितायुर्जीवनं मातर्विष्णुप्रिये जगद्धिते ।
तच्चापि भूयसा यातं सुप्तेऽलसतया सुते ॥१
स्नेहात् प्रबोधितस्यास्य जननि भक्तपूजिते ।
मोहमानमदैश्वर्यैः कथं बाधा विधीयते ॥२
मातुराशीभिरेवाशु पुत्रहितं प्रजायते ।
अनवद्यमजस्रञ्च सर्वशास्त्रेषु गीयते ॥३
विष्णुप्रियासुतो धन्यो भणामि वज्रनिःस्वनम् ।
मातुस्तुल्यगुणः पुत्रो बाधे बाधामहर्निशम् ॥४
अस्तु नाम तवाकाङ्क्षा पितुर्गौरवघोषणे ।
यतेस्तु केवलाकाङ्क्षा मातृनामप्रचारणे ॥५

प्रिया नाम प्रिया नाम प्रियाया नाम केवलम् ।
कलौ कलुषनाशाय लोकानां लपनं बलम् ॥६
जीवनं मरणं वाऽपि सममेव यतेः कृते ।
इह काले परत्रापि जननीक्रोडसंस्थितेः ॥७
विष्णुप्रियाभया-पुत्रो यतीन्द्रोऽद्य सुखायते ।
शमनसुचिराजीव इत्थं काले विलोप्स्यते ॥८

---

# INTRODUCTION

## Visnupriya, Holy Consort of Lord Gauranga

Jayānanda, the great contemporary Poet-Devotee of Lord Caitanya Mahāprabhu, has rightly said in his Caitanya-Maṅgala that, but for the presence of Viṣṇupriyā in Navadwip Gaudīya Vaiṣṇavism could have hardly flourished. Lord Gaurāṅga declared that Vairāgya was Kāla-Dharma and as such Viṣṇupriyā and He could not live together. Continuing, he also said that Mother was much more beneficial to the son, to the Society than the Father and naturally, therefore, it devolved upon Viṣṇupriyā to stay in Navadwip and cater to the needs of her Sons and Daughters there to their eternal good. Mahāprabhu also insisted that she must stay in Navadwip for rendering service to his old mother who was 67 during the time of his Sannyāsa or Great Renunclation. The ideal wife proved absolutely true to all these high ideals her husband wanted her to follow.

Mother Viṣṇupriyā, the Real Śakti of Śrī Gaurāṅga, was, from the worldly point of view, also his first Disciple, the first to propagate his lofty messages of Love, Devotion and Service. It was she who was responsible for the wide spread of worship of Lord Gaurāṅga as the saviour of the world, as an Incarnation.[1] Thus, as His real Śakti or

---

1. See Iśāna Nāgara's account in the in the Advaita-prakāśa,

"तव रूप-साम्य चित्र-पट निर्माइला।
प्रेमभक्ति महामन्त्रे प्रतिष्ठा करिला ॥

Power, the Light of His Lights, she worked miracles in dispelling the gloom—social, political and religious—that darkened Fifteenth Century India all around.

Viṣṇupriyā was Austere Penance Incarnate.[1] Ever since the Renunciation of household-life by Lord Gaurāṅga, she used to sleep on ground. She rendered her mother-in-law every possible service day in and day out[2] and seldom went out of the house except for her daily bath

---

सेइ मूर्ति निभृते करेन सुसेवन ।
तव पादपद्मे करि आत्मसमर्पण ॥"

Viṣṇupriyā also built the temple for Mahāprabhu's worship—the famous Mahāprabhu-Mandir of Navadwip with the assistance of Vaṃśīvadana :

"सेइ त पराण-नाथे देखिते पाइनु ।
यार लागि मन-आगुने दहिया मरिनु ॥"

1. Cf. her prayer to her Lord Śrīkṛṣṇa-Caitanya :—

"यखन ये नियम प्रभु आपनि पालिवे ।
ता हते कठोर नियम ए दासीरे दिवे ॥"

2. Mahāprabhu used to get reports about these through Jagadānanda Paṇḍita or Dāmodara Paṇḍit. See the Advaita-prakāśa, Vaṃśī-śikṣā and Anurāga-vallí. Even Iśāna Nāgara could not see her for months together because she used to hide herself indoors, particularly after the death of her mother-in-law. Advaita Prabhu used to weep when he had occasions to hear about these austere penances of Śrī Viṣṇupriyā. In one place in the Advaita-prakāsa, Iśāna Nāgara has recorded how he, an attendant of Viṣṇupriyā herself, could see her after many months and that also after repeated prayers through Gadādhara

in the Ganges. Even then she would not talk to anybody, nor even the most intimate disciple of Lord Gaurāṅga could see her face. The little time that could be saved she would devote to the worship of her Lord.

Her mother-in-law left her mortal coils at the age of 72 and she was then only about to pass her teens. Viṣṇupriyā

---

Dās, Rāma Paṇḍita, Dāmodara, etc. :—

"वज्रघात सम वाक्य करिया श्रवण।
भाविनु मातारे कैछे पाइमु दरशन ॥
हेनकाले आइला तथा दास गदाधर।
श्रीराम पण्डित आदि भक्त प्रवर ॥
प्रसाद लइते सवे दामोदर सने।
अन्तःपुरे प्रवेशिला सजल नयने ॥
तवे विष्णुप्रिया माता आज्ञा अनुसारे।
मो अधमे लञा पण्डित गेला अन्तःपुरे ॥
याञा देखि काण्डापटे मायेर अङ्ग ढाका।
कोटि भाग्ये श्रीचरणे पाइनु मात्र देखा ॥
विष्णुप्रिया मातार कथा कि कहिव आर।
तान भक्ति निष्ठा देखि हैनु चमत्कार ॥
शची मातार सेवा करेन विविध प्रकार।
सहस्रेक जने नारे ऐछे करिवार ॥
शचीमातार पात्र शेष मात्र से भुञ्जिया।
देह रक्षा करे ऐछे सबार लागिया ॥
शची सेवा कार्य सारि पाइले अवसर।
विरले वसिया नाम करे निरन्तर ॥"

was left alone by her husband to carry on his great mission at the comparatively young age of 38; and for a long period ever since, more than 50 years—she as a true Sahadharmiṇī dedicated herself completely to the propagation of her husband's Dharma.

In her early days, she used to preach the Gospel of Truth to women in Navadwip whereas her husband used to do the same to Men in particular.[1] When Lord Gaurāṅga renounced the world, she took upon herself the whole burden of Mothering the young Religion of Devotion and Love which nobody else than "This Devotion or Bhakti Incarnate" as she was so aptly called by Advaita Prabhu one day in the presence of Lord Gaurānga could do.[2]

Iśāna Nāgara, Vaṃśīvadana, Advaita Prabhu, Nityānanda, Jagadānanda, Dāmodara, Manohara Dāsa, Mādhava Ghoṣa and his two illustrious younger brothers Vāsudeva and Govinda Dāsa and many other Leaders of Vaiṣṇava Faith have unequivocally described Viṣṇupriyā as "Isvarī"[3] —The Adya Shakti, the Mother of the Universe. Last but not least, Śrīnivāsa Prabhu, Mother Viṣṇupriyā's

---

1. "प्रभु यथा युगधर्म करिल प्रचार। निजगुणे दूर कैल दुष्कृतिर भार ॥
नाम सङ्कीर्तने कैल जगत् शोधन। जगतेर कैल सर्व मङ्गलसूचन ॥
तथा देवी विष्णुप्रिया कुलङ्गनागणे।
आश्रमेर सर्वधर्म करान शिक्षणे ॥
शिक्षा दीक्षा क्षेत्र हला प्रभुर भवन।
नर नारी यातायात करे अगणन ॥"

2. See Caitanya-candrodaya of Kavi Karṇapūra Gosvāmin).

3. See Jayānanda's Caitanya-maṅgala and Trilocana Dāsa's Caitanya-maṅgala.

great favourite, one of the most outstanding propounders of Vaiṣṇava Religion most emphatically declared her to be Divine Mother Incarnate. It was Iśvarī Viṣṇupriyā who brought about a concord, a real harmony between Gadādhara Vaiṣṇava and Śrīnivāsa who resorted to fasting unto death if the former would not pardon him for his forgetfulness in communicating the message of Gadādhara Gosvāmin who had in the mean time expired in Puri. Viṣṇupriyā herself called for Gadādhara and made him understand that it was absolutely unfair on his part to behave in that malevolent way with Śrīnivāsa who was after all even then in his teens and again made sufficient amends through words and deeds for a simple mistake which was really made much of by Śrīnivāsa himself. [1].

Visṇupriyā's work for the upliftment of women also will remain written in letters of gold for ever in the annals of Gauḍīya Vaiṣṇavism. It was through her influence and preaching that Gauḍīya Vaiṣṇava Religion could produce such great women Saints and Seers as

---

1. See the Prema-vilāsa. Viṣṇupriyā remonstrated Dāmodara as follows :

"जानिया ना करे यदि अपराध भाल ।
विस्मृत हइला ताहे कि करु छावयाल ॥
यदि वा आमारे चाह मोर बोल धर ।
साक्षाते आनिया अपराध क्षमा कर ॥"

The Holy Mother blest her boy with the touch of her feet :—

"एत कहि वस्त्रे वेष्टित चरण अङ्गुलि ।
श्रीनिवासे डाकि चरण दिला माथे तुलि ॥
चरण-परशे अति प्रेमावेश हैला ।
लोटाइया धरणीतले काँदिते लागिला ॥"

Jāhnavī Devī [1], Sītā Devī [2], Subhadrā Devī [3] and others.

Towards the end of Viṣṇupriyā's life, all these great women leaders of thought and action—her own Devotee-Daughters, congregated together in the house of Caitanya, son of Vaṃśīvadana, mainly for the purpose of dissuading the Mother (Isvarī) from starving herself and catering for the needs of her sons and daughters at the cost of her most precious life. To all these entreaties, she had only one answer—a sweet smile; but she went on passing her days just in the same way as before, always burning the incense of her God-scented sacred human coil for the good of others.

Mother Viṣṇupriyā's Religion was a universal religion which brooked no distinctions of castes and creeds[4]; that was why the high and the low, the learned and the illiterate, the rich and the poor, men and women—were all

---

1. Consort of Nityānanda Prabhu.
2. Consort of Advaita Prabhu.
3. Wife of Vīracandra. She composed an elegy on Jāhnavī Devī immediately on her death under the heading "Anaṅga-kadambāvalī in 100 verses, one of which is as follows :—

"वन्देऽहं तव पादपद्मयुगलं मत्प्राण-देहास्पदं
सत्यं ब्रूमि (?) कृपामयि ! त्वदपरं तुच्छं त्रिलोक्यास्पदम् ।
श्रीलश्रीचरणारविन्दमधुपो मन्मानसं नेच्छति
हा मातः करुणालये तव पदे दास्यं कदा यास्यति ॥"

4. Cp. the cardinal principle of Gauḍīya Vaiṣṇavism. The Dāsa-kūṭa Bhaktas of Karṇāṭaka adhered to this as opposed to those of the Vyāsakūṭa, the orthodox section. Mahāprabhu came into a close contact with Vyāsatīrtha Rāya during his sojourn in the south.

equally accepted by her as her children and inspired by her holy teachings.

Thus even from this very brief and incomplete survey of the Holy mother Visnupriyā's Divine Life, it would appear that true to Indian Tradition, she sanctified the world with her presence at a time when True Religion was at stake, true education at the lowest ebb, morality jeopardised and Women's position most deplorable.[1] Our scriptures assure us that whenever there is a real need, God with His Śakti incarnates Himself for the protection of virtue and destruction of vice. Śrī Śrī Gaurāṅga with his Śakti Śrī Śrī Viṣṇupriyā also did the same for the benefit of

---

"चण्डालोऽपि द्विजश्रेष्ठो हरिभक्तिपरायणः।"

Also Advaita-prakāśa :—

"येइ कृष्ण भजे, सेइ श्री वैष्णवजाति।"

Eulogising Haridāsa, a Muslim Devotee of Mahāprabhu, the Lord has said :

"हरिदास ठाकुर महाभागवत प्रधान।
दिन प्रति लय तिँह तिन लक्ष नाम॥
नामेर महिमा आमि तार ठाँञि शिखिल।
ताँर प्रसादे नामेर महिमा जानिल॥"
श्रीचैतन्य-चरितामृत-अन्त्यलीला।

One must remember the classical statement about Lord Sri Kṛṣṇacaitanya made in the Caitanya-caritāmṛta by Kṛṣṇadāsa Kavirāja :

"भक्त महिमा प्रकाशिते भक्ते सुख दिते।
महाप्रभु सम केह नाहि त्रिजगते॥"

1. For details about these, see Introduction to the present author's Sanskrit drama, Mahāprabhu-Haridāsam, pp. 9—11.

mankind during an age which may certainly be taken as one of the darkest periods in the glorious history of India. But unfortunately, uptil now—we have not cared much to know about this great Śakti behind Śrī Gaurānga's great Religion. It is high time for us all to dedicate ourselves to her holy feet and try our best to fructify her eternal messages of universal Love, Fraternity and Peace in our lives.[1]

We conclude this introduction with our prayer to Lord Srīkṛṣṇacaitanya and Śri Śrī Viṣṇupriyā in two Sanskrit Songs :—

---

1. The Prema-vilāsa has rightly said about the Holy Mother :—

"ईश्वरीर नामग्रहण शुन भाई सव।
ये कथा श्रवणे लीलार हय अनुभव ॥
प्रभुर प्रेयसी यिहो ताँहार कि कथा।
दिवा निशि हरिनाम लयेन सर्वदा ॥
ताँहार असाध्य किवा नामे एत आर्ति।
नाम लयेन ताहे रोपेन प्रभुर शक्ति ॥"

# श्रीश्रीविष्णुप्रियास्तुतिः

जननि विष्णुप्रिये नमामि त्वाम्
सुरगणवन्दितां विष्णुलोकमहितां शरणीं भरणीं मातरम् ॥१

त्वं हि मधुकैटभनाशिनी महिषासुरमर्दिनी
शुम्भनिशुम्भघातिनी विश्वैकजननी नमामि त्वाम् ॥२

त्रेतायां सीतारूपिणीं दशाननविनाशिनीं
रामचन्द्रविलासिनीं वसुन्धरासुतां नमामि त्वाम् ।
द्वापरे राधिकारूपां श्रीकृष्णमनोहारिणीं
कंसनिसूदनीं जरासन्धघातिनीं मातरम् ॥
प्रणमामि विश्वंभरामन्नपूर्णां त्वाम् ॥३

बुद्धावतारे त्वं हि गोपा बहुजनसुखहिता
मुदिता प्रज्ञापारमिता त्रैलोक्यपूजिता हि त्वम् ।
कलियुगपावनी विश्वहितकारिणी सनातननन्दिनी
गौरमनोरमा रमा हि त्वम् ॥४

त्वं हि पाषण्डदलनी काजीपराभवकारिणी
जगमाधवोद्धारिणी परा शक्तिरूपिणी त्वम् ।
त्वमेव हि कनकचम्पकगौरी गौरहरिपूजावतारिणी
जगद्धितकारिणी विश्वजननी त्वम् ॥५

भुक्त्ये मुक्त्ये वापि लालसा नाशमेतु मे ।
नामकीर्तनमात्रं हि यतीन्द्रस्यास्तु मे गतिः ॥६

# श्रीश्रीमहाप्रभु-स्तुतिः

गौराय गौरचन्द्राय गौराङ्गाय नमो नमः
सर्वशङ्कराय हरये नमः ॥१

नमः शचीजगन्नाथ- हृदयानन्ददायिने ।
खञ्जनगञ्जिनेत्राय करुणासार-वर्षिणे ॥२॥

सत्यनामस्वरूपाय नित्यनामप्रचारिणे ।
चिक्कणकेशपाशाय वरकरप्रसारिणे ॥३॥

राहुग्रासच्छलेनैव नीलवर्णवियोगिने ।
राकाशशिपराजेत्रे रुक्मवर्णाय ते नमः ॥४॥

"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।"
इति मन्त्रेण सम्पूर्णभारतोद्धारकारिणे
गौराङ्गाय नमो नमः ॥५॥

जगद्रोदिति यस्यार्थे सत्यं रोदनतत्परः ।
कथं प्लावयसे भूमिं वज्रग्राव-विरोदकः ॥६॥

ज्ञानकर्मपथौ तावत् सुदूरे तिष्ठतामलम् ।
कलौ तव प्रभावेण भक्तिरेव गरीयसी ॥७॥

सार्वभौमः पराभूतस्तपोज्ञानपरायणः ।
त्वयोत्कलाख्यदेशे हि प्रतापरुद्रसेविते ॥८॥

भक्तिसूत्रेण संबद्धं धर्मराज्यमनाकुलम् ।
प्रतिष्ठितं त्वया देव सर्वसुखहितप्रदम् ॥९॥

अन्यत् सर्वं परावृत्य भक्तिस्त्वया प्रचारिता ।
कायमाश्रित्य सा जाता माधवी माधवप्रिया ।
विष्णुप्रियाभिधायुक्ता सर्वजीवशुभप्रदा ॥१०॥

विष्णुप्रिया-गौरचन्द्र-कायद्वयं समात्मनः ।
युगलं मिलितं नित्यं सर्वसुखं करोतु नः ॥११॥

गौरसुन्दरपादाब्जे यतीन्द्रस्य नमो नमः ।
विष्णुप्रियाहृदानन्द कुरु दूरे जगत्तमः ॥१२॥

## A Synopsis of the Drama Bhakti-Viṣṇupriyam

### ACT I

#### Scene I

Nāndī Singer, Stage-manager, Mahāprabhu, Śacī Devī and Viṣṇupriyā.

Mahāprabhu Lord Gaurāṅga has just returned from Gayā-Dhāma. His heart is full of compassion for mankind, submerged in the mire of ignorance and suffering. Accordingly, he decides to renounce the world and preach his Rellgion of Universal Love and service all over the country. He approaches his mother Śacī Devī and Consort Viṣṇupriyā for getting their consent. Though overwhelmed with grief, Śacī makes a heroic decision not to stand in the way of her son's Holy Vow of dedicated service to the cause of all. Lord Gaurāṅga, then, entrusts Viṣṇupriyā with two great responsibilities, viz., firstly looking after Śacī Devī and his disciples and devotees ; secondly, propagating his Religion to all and sundry. Viṣṇupriyā accepts these great trust gladly, with full faith that the Lord will always be with her to guide her aright.

### ACT II

#### Scene I

Curd-seller, Fruit-seller, Nyāyacañcu (a bombastic Naiyāyika), Tantrapuccha (a corrupt Tāntrika), Bheruṇḍaka (a ferocious Kāpālika).

Corruptions and malpractices reign supreme all around. A curdseller and a fruit-seller plot amongst themselves to

cheat their prospective buyers. They are joined by Nyāyacañcu, Tantrapuccha and Bheruṇḍaka who, too, have been plotting against Viṣṇupriyā for preaching the Great Vaiṣṇava Dharma of Lord Gaurāṅga. They conspire together to attack Viṣṇupriyā ; but are flown away by a sudden, violent hurricane.

### Scene II

Dāmodara (a devoted disciple of Lord Gaurāṅga and entrusted by him to look after Śacī Devī and Viṣṇupriyā), Śacī Devī and Viṣṇupriyā.

Through the earnest supplications of King Pratāparudra of Orissa, Lord Gaurāṅga accepts a costly 'Sāḍī' during the Nandotsava Ceremony ; but sends it to Śacī Devī through Dāmodara. Śacī Devī requests Viṣṇupriyā to put it on. Viṣṇupriyā, however, gives it away to her disciples, as it has not been sent for her by name, by Lord Gaurāṅga.

## ACT III

Mahāprabhu, Cāraṇa-Kavi (Minstrel), Advaitācārya (an elderly devotee of Lord Gaurānga), Śacī Devī, Nityānanda (a celebrated disciple of Lord Gaurāṅga).

After four and half years, Lord Gaurānga is returning ) Bengal. The melodious songs of eulogy of Mother Bengal y a wondering minstrel enchants him.

Lord Gaurāṅga meets Advaitācārya and has a dis- ıssion with him regarding the nature of 'Bhakti'. 'hen the Lord feigns ignorance regarding the nature 'Bhakti', Advaitācārya makes bold to tell him straight at it is Viṣṇupriyā who is Bhakti incarnate on earth.

In deference to the wishes of Lord Gaurāṅga, Śacī Devī is brought to Śāntipur from Navadvipa by Nityānanda. Śacī Devī requests the Lord to meet Viṣṇupriyā as well. "A hermit should not meet his wife"—in reply to this objection of the Lord, she points out that Viṣṇupriyā is not an ordinary woman, but Lakṣmī incarnate, and so to see her is to be blessed. Accordingly, the Lord agrees to go to Nadadvīpa.

## ACT IV

Paṇḍita Dāmodara, Rāya Rāmānanda and Mahāprabhu.

Paṇḍita Dāmodara and Rāya Rāmānanda express great satisfaction for the rapid spread of Religion of Love and Devotion in Bengal. They attribute it to Śrī Viṣṇupriyā. Mahāprabhu is lost in meditation and begins to talk about something else.

## ACT V

### Scene I

Śrīnivāsa (a devotee of Viṣṇupriyā), Gadādhara (a well-known devotee of Lord Gaurāṅga).

Gadādhara Gosvāmin, a close companion of Lord Gaurāṅga sends a message, from Purī, through Śrīnivāsa, to his spritual brother Gadādhara Dāsa at Navadvīpa, to the effect that he (Gadādhara Gosvāmin) is on the point of death. But unfortunately, through inadvertence, Śrīnivāsa forgets to deliver the message to Gadādhara Dāsa in time, with the result that when the message is finally delivered by him, Gadādhara Gosvāmin has already expired. Naturally, Gadādhara Dāsa is very much irritated at this and takes Śrīnivāsa to task for his forgetfulness. Śrīnivāsa, in repentance, decides to embrace death through fasting on the banks of the Ganges.

### Scene II

Viṣṇupriyā

Viṣṇupriyā comes to know of this through her Yogic powers, and at once rushes forth to the banks of the Ganges, to save the life of Śrīnivāsa.

### Scene III

Śrīnivāsa, Viṣṇupriyā, Vaṃsīvadana (deputed by Lord Gaurāṅga to look after Śacī Devī and Viṣṇupriyā, after he left home), Iśāna Nāgara (brought up in the house of Advaitācārya: later, rendered unique services to Mother Śacī and reared up Lord Gaurāṅga with great affection and loyalty) Gadādhara Dāsa, Murāri Gupta (the most celebrated physician of the day, and a reputed devotee of the Lord).

Though she always hid herself away from the eyes of the world in her secluded prayer-chamber, Viṣṇupriyā unhesitatingly runs to the crowded bank of the Ganges to save the life of Śrīnivāsa. She remonstrates with Gadādhara Dāsa for his rough behaviour with Śrīnivāsa not befitting a true Vaiṣṇava. Through her intervention, Śrīnivāsa and Gadādhara are reconciled and Śrīnivāsa gives up his fast.

## ACT V

### Scene IV

Viṣṇupriyā and Śrīnivāsa

Śrīnivāsa acknowledges his heartfelt gratitude to the mother for all her kindness and prays that he may, through Her grace, devote himself whole-heartedly to the propagation of the Religion preached by the Mahāprabhu. The Mother blesses her to shine out as the second half of the Mahāprabhu Himself, and instructs him on some principles of her Religion.

Requested by Śrīnivāsa to permit him to go to Vriṇḍāvana, the Holy Mother replies that he had better go there later on. He has still much to learn and should reside with two of the most leading Disciples of the Mahāprabhu, viz. Nityānanda Prabhu and Advāitācarya. Śrīnivāsa prays that he may be able to do something for the great Religion of Mahāprabhu through Kīrtana songs.

## ACT VI

Vaṃśīvadana, Śrīnivāsa and Viṣṇupriyā

The Holy Mother wants all Her children to resort to the Durgā Pūjā in the form in which it is prevalent even to-day. Formerly, only Durgā, Lion and the Demon were worshipped. But the worship of Kārtika and Gaṇeśa, Lakṣmī and Sarasvatī, Jayā and Vijayā together with Śiva seated in the middle of the Durga-maṇḍala is something unique first introduced by Viṣṇupriyā. The Mother also explains why this method of worship is indispensible for the present age.

## ACT VII

Vaṃśīvadana, Viṣṇupriyā, Śrīnivāsa, Sītā Devī, Jāhṇavī Devī, Vasudhā Devī, and other Vaiṣṇava Devotees.

In accordance with Viṣṇupriyā's wishes, Vaṃśīvadana erects a wooden image of Lord Gaurāṅga. Śrī Vīṣṇupriyā's joy knows no bounds.

Viṣṇupriyā decides to renounce her mortal coils; accordingly, she calls to her Sītā Devī, wife of Advaitācārya, Jāhnavī Devī, Vasudhā Devī and other famous women of those days, and entrusts them with the great task of preserving Lord Gaurāṅga's Prema and Bhakti Dharma.

Devotees sanctify the earth by their inspiring Saṃkīrtana of the holy names of Śrī Gaurāṅga and Śrī Viṣṇupriyā.

## Sanskrit Dramas of Dr. J. B. Chaudhuri

### *In the Press*

1. **The Sakti-Sarad›m,** based on the life of Sāradāmaṇi, Holy Consort of Śrī Śrī Rāmakṛṣṇa Paramahaṃsa Deva Thākura. This work deals with the life of the Holy Mother uptil the Mahātirodhāna of Śrī Paramahaṃsa Deva. Frequently staged since its composition in July, 1958.

2. **The Mukti-˙aradam,** based on the Holy Mother Sāradāmaṇi's life from the Mahātirodhāna of Śrī Śrī Thākura uptil her Mahā-tirodhāna.

3. **The Mahimamaya-Bharatam** or The Glorious India, staged for the first time in Delhi Drama Festival on 2oth. April, 1959, under the auspices of All India Radio, New Delhi.

4. **The Mukti-Yajnah,** on Indian Struggle for Freedom.

5. **The Bharatiya-Agni-Mantra-Sadhanam,** on the Armed Revolution of India for Freedom.

6. **The Aravinda-Caritam** on Śrī Śrī Aurobindo.

# भक्तिविष्णुप्रियं

## नाटकम्

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितम्

## प्रथमोऽङ्कः

## नान्दी

प्रणमामि सनातन-नन्दपरां
नवधाम-सुखाकरविष्णुप्रियाम्।
जननी-शचिकानयनाञ्जनिकां
जगदीश-महाप्रभु-चित्तहराम्॥

नान्द्यन्ते सूत्रधारः—अद्य खलु तावत् सर्वकारीय-वङ्गीय-संस्कृत-शिक्षा-परिषत्कर्तृपक्षीयैर्विज्ञापितोऽस्मि गौरप्रियाया जनन्याः श्रीश्रीविष्णुप्रियाया जीवनचरितमधिकृत्य किञ्चन नाटकं प्रयोजयितव्यमिति। तदधुना वयं श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितं भक्तिविष्णुप्रियं नाम नाटकं प्रयोक्ष्यामहे।

विद्यन्ते कति कति नाम वर्षाणि, किन्तु अतुलनीयं सर्वथाऽस्माकं भारतवर्षम्। अत्र युगे युगे भगवान् स्वयं जगदम्बिकया पार्षदैश्च सह अवतरति पाषण्डविदलनार्थं धर्मसंरक्षणार्थञ्च। शुचिर्नित्यं भजते शचीं—सेयं शचो शक्तिर्वा त्रायते वसुन्धराम्।

कायेन मनसा वाचा शचीं चेद् भजते नरः।
अचिराल्लभते क्षेमं यस्मात् परतरं न हि॥१
तस्मिंस्तुष्यति गोविन्दः सर्वानन्दविधायकः।
असीमा हि कृपा तस्य मातृपूजापरायणे॥२

( इति प्रस्तावना )

( ततः प्रविशति महाप्रभुः )

**महाप्रभुः**—अहो को नु खलु अस्मन्मातरं वन्दते। सेयं धन्या जननी पतिसुताष्टकचिरविरहजं मदग्रजविश्वरूपसंसारत्यागजनितं च दुःखं मौनेन सहते। केवलं विष्णुप्रियाया मम च वदने अवलोक्य जीवितं धारयति।

इयं साक्षाद्देवी जगति जनयित्रीति विदिता
यदुत्सङ्गेऽपत्यं त्रिदिवसुलभं शर्म लभते।
शिशौ यूनि स्नेहः प्रवयसि च तुल्योऽस्ति तनुजे
यदीयस्तां वन्दे करुणमसृणाम् ईश्वरकृपाम् ॥३

साम्प्रतं कुत्रास्ते अम्बा मे ?

**शचीदेवी**—इयमहं वत्स ! तात ! कथं मां स्मरसि ? नात्र अन्यः कोऽपि दृश्यते।

**महाप्रभुः**—जननि ! बहुधा विचिन्त्य अद्य तत्रभवतीं काञ्चन निगूढाम् आत्मकथां कथयितुं वाञ्छामि।

अस्मच्छास्त्रानुसारेण मातुरभ्यधिको न कोऽपि गुरुर्विद्यते। माता हि परमं तपो ध्यानं ज्ञानं साधनं मोक्षश्च।

विन्दोरारभ्य समग्रदेहगठने संपुष्टौ च जननी, मानसिकभाव-संपूर्तौ तद्विभूतिप्रकाशने च जननी, सन्तानस्य सर्वेषु कर्मसु मातैव प्रसरति प्रचरति च—यतः सन्तानो मातुरेव सर्वप्रकारेण संप्रसारणम्। अहो मातुः सम्माननं भारते वर्षे—एतद्देशो भगवान् अस्ति नास्ति वा इति विषये वादविसंवादतत्परो दृश्यते, न पुनः मातुः गुरश्रेष्ठत्वविषये ; जगद्विनिमयेन, आत्मविनिमयेन, भगवद्विनिमयेन वाऽपि मातुः सन्तोषविधानविषये च। ततः जगज्जननीरूपा आद्याशक्तिर्मे जननी। तस्मान्मातः भवत्यै मे साम्प्रतिकं मनोभावं निवेदयितुमिच्छामि।

**शचीदेवी**–[स्वगतम्] अहो न जाने पुत्रो मे किं वा कथयिष्यति ? कथं वा हृदयं मम कम्पते ? (प्रभुं प्रति) वत्स ! वक्तव्यं ते निःसङ्कोचं ब्रूहि। सर्वस्य समाधानं वर्तते खलु। अस्ति किञ्चित् ते दुःखकरम ?

**महाप्रभुः**—गयाधाम्न आगमनाद् अनन्तरं चित्ते मे काचित् अनिवार्या अशान्तिः जाता, यां दूरीकर्तुं नाहं शतशो यतमानोऽपि समर्थोऽस्मि। केवलं संस्मरामि किल जगत् सर्वं दुःखपरिवृतम् अज्ञान-तिमिरावृतं पापकालिमलिप्तं जातं, कथं वा दूरीभवेत् गाढतमिस्रा. भूयोऽपि कदा आविर्भविष्यति प्रेमदेवता सूर्यदेवो घनान्धकारात्, हिंसाविमलिना पृथ्वी प्रेमपूर्णा भविष्यति, देशे देशे प्रतिजन राजिष्यते अविच्छिन्ना शान्तिः अखण्डा प्रीतिश्च? मातः! साधनाय मानव-जीवनम्। अमूल्यं तत् जीवनं मे प्रतिपलम् अर्थहीनमिव जायते—यतः अहं सर्वथा सर्वशक्तिप्रयोगेण प्रेमधर्मसंप्रसारणपरोऽप्यत्वेऽपि न यते। तस्मात् प्रार्थये—यथा जगतः सर्वाणि दुःखानि दूरीकर्तु प्रभवेयं तथा भवती कुरुताम्। भवत्कृपया प्रव्रज्याग्रहणक्रमेण कृष्ण-धनमवाप्तुं तथाराधयिष्ये यथा अचिरेणैव कालेन स मां स्वरूपं प्रदर्श्य जगत्समुद्धरणप्रकारं स्वयमेव कथयिष्यति।

**शचीदेवी**—[ स्वगतम् ] अहो! दुरन्ता खलु नियतिः। यत् मया चिन्तितपूर्व तदेव संघटितम्। इतः पूर्वं यथा पुत्रो विश्वरूपस्तथा अयं विश्वम्भरोऽपि सन्न्यासग्रहणमेव वरं मन्यते। किंवा भविष्यति मद्दुहितुः परमपतिव्रताया लक्ष्मीस्वरूपाया विष्णुप्रियायाः? कथं पुत्र-विरहातुरा अहं वा जीवितं धारयिष्यामि? ( प्रभुमुद्दिश्य )—पुत्र! सावधानं वचनं मे शृणु। त्वयैव उक्तं माता एव धर्म इति। तस्मात् मातरं मां विहाय कथं तव धर्माचरणं भविष्यति? धर्मप्रचारणमेव ते अभिलषितं चेत् स्वयं धर्मत्यागिनस्ते को वा अनुरागी अनुसरणकारी वा भविष्यति, तदभावे च कथं धर्मप्रचारः।

**महाप्रभुः**—जननि! शान्ता भव, धैर्यं धारय यदि मोहाद् विन्दुमात्रमपि कष्टं ते मया जनितं, मया प्रार्थ्यते—यथा चिरं तथा अद्यापि मां परमस्नेहेन क्षमस्व।

**शचीदेवी**—ततः गृहे ममान्तिके स्थित्वा सर्वथा धर्ममाचर। पत्न्यपि ते स्वयं माधवीरूपा साक्षान्माधवप्रिया विष्णुप्रिया, सा हि कमललोचना कमला, परमरमणीया रमा।

आर्याचारपरायणा परहिते दत्तावधाना स्वयं
लावण्यं परमं सदा विकिरती पुण्यप्रभाशोभया।
आत्मानं कमपुष्पकं कृतवती विश्वेशपादाब्जयोः
सेयं निष्कलुषा नितान्तसरला त्याज्या कथं ते प्रिया ॥४

अपि चिन्तितं त्वया तद्विषयकं किमपि ? कथं वा सा त्वत्त्याग-दारुणव्यथां संसहिष्यते। धर्मदारान् विहाय कथं वा ते धर्माचरणं संभविष्यति ?

**महाप्रभुः**—मम अम्बा साक्षाद्विश्वजननी इत्यत्र मे चेतसि न कश्चन सन्देहः। त्वमेव मातः! सर्वेषामेव हृदयेषु वर्तसे। किन्तु अधुना त्वत्सन्तानाः सर्वे आत्मविस्मरणपरा हिंसाद्वेषकलुषितात्मानो वन्यपशुवत् उच्छृङ्खलं यातना-निष्पेषितं जीवनमतिवाहयन्ति। जननीं प्रति स्वं कर्तव्यं स्मारं स्मारम् अधमोऽपि पुत्रः अहं चिन्तयामि—भ्रातॄणां मे दुर्मतिं दूरीकर्तुं भक्तिद्वारेण - प्रेममन्त्रद्वारेण यथा प्रभवेयं तथा साधनमङ्गीकर्तव्यम्। अतो वैराग्यमेवावलम्बनीयमिति। अस्मिन् विषये मातुर्मे आज्ञा प्राथम्येन प्रार्थनीया इति चिन्तयित्वा अहं भवत्याः श्रीपादपद्मं प्राप्तोऽस्मि।

( शचीदेवी साश्रुवदना तिष्ठति )

**शचीदेवी**—अहो कष्टम्, अहो दौर्भाग्यम्! विष्णुप्रिये विष्णुप्रिये।

( विष्णुप्रिया त्वरितं प्रविशति )

**विष्णुप्रिया**—अम्ब, कथं माम् आह्वयसि ? अहो कथं मे जननी क्रन्दनतत्परास्ते ? नाथ! किं त्वया भणितम् ? इयं मे जननी विश्वजननी इव निखिलविश्व-कल्याणतत्परा—किं तस्याः चक्षुर्वारि युज्यते ? मातः! किं संघटितम्, त्वरितं मे ब्रूहि।

**महाप्रभुः**—कल्याणि! मयाऽपि उक्तं जननी आवयोः विश्व-जननी इति। ततः स्थावरजङ्गमाः सर्वे विश्वेऽस्मिन् भ्रातर एव आवयोः। किन्तु सर्वेऽधुना परस्परविद्वेषका जाता इति अहो नु कष्टम्! स्वरूप-सिद्धान्तविषये को नु एतेषां भ्रातृवर्याणां विभ्रान्तिं दूरीकरिष्यति इत्यस्मिन् विषये जननीं प्रति मे प्रश्नः। जननी तु भाविनं मत्संन्यासं

संचिन्त्य व्याकुला जाता। परं विश्वजननी सर्वेषां पुत्राणां कल्याणं समभावेन काङ्क्षिष्यति इति ध्रुवमेव। तस्मादावाभ्यां वैराग्यमेव अवलम्बनीयं सर्वथा आवां जगतो दुःखानि दूरीकर्तुं युगपत् प्रयतिष्यावहे।

विष्णुप्रिया—नाथ! तत्र गृहपरित्यागेन किम्? भक्तिमात्रसमाराध्यो हरिस्ते, मम हरिस्तु साम्प्रतं मदग्रत एव वर्तते। सर्वदा ध्यानतत्परो हरिं भवान् ध्यायतु, मद्धर्मानुसारेण अहञ्च मम हरिं ध्यास्यामि। अहं ते सहधर्मिणी। भवान् यत् यत् आचरिष्यति, अहम् अविकलं तदेवानुसरिष्यामि। अहं सर्वथा भवतः समपथगामिनी भविष्यामि, गृहे वा वने वा। भवान् गृही चेत् अहमपि गृहिणी; भवान् संन्यासी चेत् तत्क्षणादेव अहमपि सन्यासिनी। सोऽयं जगद्विहितविधिः; कोऽन्यथा कर्तुं शक्ष्यति? किन्तु जगदम्बिकाया मातुरावयोः किं भविष्यति, कथं वा अत्रभवती जीविष्यति।

शचीदेवी—परमादरिणि दुहितर्मे, अत एव त्वं विष्णुप्रिया। स्वयं विष्णुस्त्वत्प्रियसाधनं निरन्तरं प्रार्थयते। दुहितः, जपकालो मेऽतिक्रान्तो भविष्यति—तस्मादहं यामि विष्णुमन्दिरम्। त्वत्कृतसमाधानं ममापि समाधानं भविष्यति। यथा विश्वम्भरस्तथा त्वमपि मे जीवनावलम्बनम्। (निष्क्रान्ता)।

महाप्रभुः—कल्याणि! विष्णुप्रिये! कठोरेऽस्मिन् कलिकाले वैराग्यमेव आवयोः केवलमवलम्बनम्। तस्मात् त्वया एव जनन्या सह नवद्वीपे स्थातव्यम्, यतः भक्ताः सर्वे त्वामेव आश्रित्य जीविष्यन्ति, त्वं मम मातुरपि जीवितावलम्बनं भविष्यसि। हृतश्रीको धर्मश्च त्वाम् आश्रयं प्राप्य पुनः जगद्धारणकारणं भविष्यति।

विष्णुप्रिये पतिप्राणे कठोरोऽयं कलियुगम्।
वैराग्यमेव मार्गोऽस्मिन् आवयोर्न सहस्थितिः॥५
अन्तर्योगो बहिर्भेदो नास्ति नौ गतिरन्यथा।
विरहानलसन्तप्ता मा त्यज व्रतमुत्तमम्॥६
हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
नामकीर्तनयज्ञे स्याद् व्याघातो न कथञ्चन॥७

पितृहीनाः सुताः खिन्ना जीवन्ति हि कथञ्चन ।
मातृहीनास्तु ते नष्टाः प्राणैरपि धनैरपि ॥८
सन्तानार्थं नवद्वीपे वासः स्यात्ते निरन्तरम् ।
मातृसेवा तथा कार्या नाम्बा दुःखमवाप्स्यति ॥६
पङ्के निमज्जितं राष्ट्रं हिंसाद्वेषप्रपूरितम् ।
सदा संरक्षितव्यं ते न राष्ट्रं धर्मवर्जितम् ॥१०
स्वयं पङ्कजिनी भूत्वा पङ्कं सर्वं विदूरय ।
विष्णुप्रिये जगद्धात्रि पूर्णां शक्तिं प्रदेहि मे ॥११

विष्णुप्रिया—जीवनवल्लभ ! अहं भारतीया ललना, तव पन्था एव मे पन्थाः, स एव नितरां मयाऽपि सर्वशक्ति-प्रयोगेण अनुसर्तव्यः । भवदभीष्टविषये अहं सर्वथा आत्मानं नियोजयिष्ये ।

नदीयेश
विश्वं तव परमो विकाशः ।
अनलेऽनिले जले सुचिरनभोनीडे
स्फुरति ते सुमोहनहासः ॥१२
प्रियादेशवाणी- पालनप्रयासिनी
प्रिया तव भवतु प्राणेश ।
त्वमेव मम शरणं त्वमेव मम भरणं
त्वमसि साधनं विश्वेश ॥१३
जननीक्रन्दनासार- संजातपारावार-
स्रोतोधारा-वारण-व्रतिनी ।
श्रीगौराङ्गभक्तदल- हाहाकारकलरोल-
विलोडन-प्रशमन-विधायिनी ॥१४
नाथपादपद्मतले जन्मान्तरतपःफले
सेवानता सुधर्मपालिनी ।
हस्तं तव प्रसारय रूपं स्वकं प्रकाशय
नूनमस्मि प्रियसंसाधिनी ॥१५
[ ध्यानमग्ना तिष्ठति ]

महाप्रभुः—यथा तथा वा भवतु, विष्णुप्रिया खलु नारी एव। अहो! नासौ मम चिराय गृहाद् बहिर्गमनसमये आत्मानं सान्त्वयितुं शक्ष्यति। तस्मादहं कालरात्रि-प्रभावेण एनां निद्रापयिष्ये। (क्षणं इतस्ततो विलोक्य) अहो! निर्भरं प्रसुप्ता मे प्रिया विष्णुप्रिया। समग्रे महीमण्डले नास्याः तुलनम् अस्ति। भृशं दुःखितापि न कदाचित् सा मां स्वकीयं दुःखं निवेदितवती; स्वयं श्रेष्ठराज-पण्डितदुहिता परमसुखेन लालिता अस्मद्गृहे दारिद्र्यदावानलदग्धाऽपि न कदापि किमपि दुःखकरं मन्यते। सर्वदैव सर्वथा आत्मानं केवलमैत्रीभावनायां परहितसाधने च नियुङ्क्ते। अहोरात्रं करोति विद्यादानं—तत्कृते अस्मद्गृहं श्रेष्ठशिक्षानिकेतनमिव जातम्। जन्मनैव सा सर्वमेव जानाति—सर्वशक्तेराधारभूता सा; तथापि सा मामेव नितरां ज्ञानाय याचते—स्वकीयां शक्तिमवमत्य शक्त्यै मामेव प्रार्थयते। भगवन्नामोच्चारणपूर्वकं प्रार्थनाक्रमेण सा निरन्तरं मयि शक्तिं निदधाति।

फलतः—सा एव मम हृदयस्य शक्तिः, प्राणानां स्फूर्तिः, चित्तस्य च शान्तिः। तथापि कालधर्मानुसारेण अहं तां परित्यज्य साधनमार्गे प्रचरिष्यामि। भगवान् तस्या मनसि बलं ददातु, सा मद्धर्मरक्षणे समर्था भवतु—निखिलविश्वस्य परमहितकारणं सर्वदुःखदावानल-निर्वापणकारणं ममैव विष्णुप्रिया भवतु।

विष्णुप्रिये स्वसुखभोगपराङ्मुखि त्वं
कर्तुं जगद्धितमहो यदसि प्रवृत्ता।
तत्सिद्धये विरहजानि तथेतराणि
दुःखानि शान्तमनसा वरितुं यतस्व॥१५

ममतासर्वस्वे विष्णुप्रिये! गमनाय त्वाम् आपृच्छे।

विष्णुप्रिया—( उत्स्वप्नायते )—हृदयसर्वस्व ! नाथ ! कदापि मां न परित्यज। सर्वं सोढं समर्थाऽहं, न तु त्वद्विरहम्। तव चरणतले स्थिता तव मातुः जगतः अन्यस्य कस्यापि वा नाहं दुःखकारणं भविष्यामि। संकल्पनं तव निखिल-जनदुःखापहरणाय चेदहमपि त्वदभिप्रायसिद्ध्यर्थं भृशमहर्निशं यतिष्ये। नाहं कदापि त्वदभिप्रायसिद्धेः प्राक्-पर्यन्तं सुखिनी भविष्यामि। केवलं न मां विरहजर्जरितां कुरु।

# द्वितीयोऽङ्कः

## प्रथम-दृश्यम्

[ नवद्वीपधाम्नि कश्चन राजमार्गः। ततः प्रविशतः फलविक्रेता च ]।

**दधिविक्रेता**—साम्प्रतं नवद्वीपधाम्नो बहिर्गते गौरसुन्दरे समग्रमेव नदीयामण्डलं तमसावृतं जातम्। सर्वेऽधर्मपरायणाश्चेद् वयमपि कथं साधवः स्याम ? तस्मात्—

अन्तर्वारांनिधि विक्रीणे खलु दधि
केवलं मुखे मिष्ट-सरावधि।
राजस्वविवृद्धे- वस्तु-मूल्यवृद्धेः
प्रजातं कृष्णहट्टं निरवधि ॥१
का निशा दिवा वा सुखं प्रचरति शिवा
राजमार्गः पङ्कस्य परिधिः।
अविरल-सुप्रचार- दस्युकुल-तरवार-
त्रस्तो लोको हा हतो विधिः ॥२

**फलविक्रेता**—भो दधिविक्रेतः! सुखं त्वया गीयते प्रेमसङ्गीतम्। अदूरे तु पश्य—समागच्छन्ति कापटिकधुरन्धरा अपरिमितकौशलाः परमनृशंसाः तर्कचञ्चु-तर्कपुच्छ-भेरुण्डकाः। ते तव दधिमूल्यं यथा दास्यन्ति तथा मम फलमूल्यमपि। सर्वं निःशेषयित्वा मुष्ट्याघातैर्यष्टिसंपातैश्च संतोष्य आवां विदूरीकरिष्यन्ति। तस्माद् गानं परिहरन् त्वरितं पैतृकप्राणैः सह एतेषां चक्षुरन्तराले चल।

( इति निष्क्रान्तौ )

[ ततः प्रविशतः न्यायचञ्चुः तन्त्रपुच्छश्च ]

**न्यायचञ्चुः**—तन्त्रपुच्छ! अहमस्मि न्यायस्य अग्रं त्वमसि तंत्रस्य अन्तः—तत्र न सन्देहः कश्चित्।

**तन्त्रपुच्छः**—आवाम् आद्यन्तौ।

**न्यायचञ्चुः**—तस्मान्मयि यस्य आरम्भः, त्वयि तस्य शेषः।

तन्त्रपुच्छः—बाढ़म्, निश्चितमेव।

न्यायचञ्चुः—तस्मान्नदीयाया मयि आरम्भः, त्वयि च शेषः।

तन्त्रपुच्छः—न हि, न्यायस्य त्वयि आरम्भः, तन्त्रस्य मयि शेषः। आवाम् आद्यन्तौ न्याय-तन्त्रयोरिति।

न्यायचञ्चुः—तस्मात् एकस्य आरम्भः अन्यस्य शेष इति एतद् भवति। न्यायश्च तन्त्रञ्च समानमिति मन्यताम्।

तन्त्रपुच्छः—तत् कथं भवितुमर्हति।

पुंस्त्रियोरावयोश्चापि न चेद् भेदस्तथा सति।
त्वत्पुत्रो मम पुत्रः स्यात् त्वत्प्रिया च मम प्रिया॥३

न्यायचञ्चुः—नाहमन्याय्यं कथयिस्यामि। सन्ति भूयोऽपि केचन—ते तु कथयन्ति—अहं त्वम् असौ सर्वमेव स इति। नाहं विद्ये, न त्वं विद्यसे, एवम्। अहो, भयावहो व्यापारः—नारीपुरुषयोर्भेदोऽपि तस्मान् न विद्येत। तथाहि, श्रूयते किल नवद्वीपेऽपि काचन नारी धर्ममुपदिशतीति। ताञ्च कतिचन नदीयावासिन ईश्वरीं वदन्ति। नारी धर्मप्रचारिणी स्याच्चेत् मादृशानां का गतिर्भवेत्। पुनः सा कूटतर्क शास्त्रजालं च निन्दति, केवलं भक्तिवादेन जगत् जेतुं यतते। अचिरेणैव कालेन तस्या धर्मद्रुममूले कुठाराघातः करणीयः।

तन्त्रपुच्छः—अस्मिन् विषये भेरुण्डकस्य साहाय्यं ग्रहणीयम्। असौ स्वकीयस्वार्थानुरोधेन अस्मत्पक्षभुक्तो भविष्यति। नार्यो गुरुपदमधिष्ठास्यन्ति चेत् नारीणां बहुधा समुन्नतिरनिवार्यैव। नारीणां समुन्नतौ कथं कापालिकाः शोभेरन् कथं वा भवेत् पञ्चमकार-साधनम्? भेरुण्डक-कापालिकस्यापि का गतिर्भवेत्। अये! इत एव भेरुण्डक आगच्छति। भेरुण्डक! भेरुण्डक!

[ ततः प्रविशति भेरुण्डकः ]

भेरुण्डकः—तन्त्रपुच्छ! कथं वृषभ इव भां भां करोषि? किं संघटितम्?

तन्त्रपुच्छः—[ क० एवम् एवम् ]।

भेरुण्डकः—तस्माद् वयं तस्या उच्छेदसाधनाय बद्धपरिकरा भविष्यामः। अहो अधःपातो धर्मस्य। अहो प्रगल्भताऽद्यत्वे रमणीनाम्। धर्मशास्त्रं स्त्री-शूद्रयोः समस्थानं निर्दिशति। नार्योऽपि दीक्षादानादिकं कुर्वन्ति चेत् शूद्रा अपि तथा कुर्युः। नारीणामभावे संघटिते मम तपस्याहानिः, शूद्राणां विशेषेण समुन्नतौ युष्माकं जीविकानाशः। तस्माद् ईश्वरीमचिरान् नाशय नाशय।

न्यायचञ्चुः—अहो! ईश्वरी न विनश्यति चेत् कच्छपडिम्बोऽपि अश्वडिम्बं प्रसविष्यते, कर्कटचक्षुरपि विश्वचक्षुः भविष्यति, अङ्गुली कदलीवृक्षायिष्यते, कृकलासोऽपि महागजोदरो भविष्यति।

भेरुण्डकः—अधःपातं यातु मे तपस्या। नारीणां तपस्याप्रभावात सर्वेऽधुना धर्मध्वजा जाताः। अन्यथा कथं मे सेवका गतेऽपि सुदीर्घ समये न इतः प्रत्यागताः। भवतु नारी मन्त्रणादायिनी, न सा मन्त्रदायिनी भवेत्; यन्त्रं सा यन्त्रिणी भूत्वा यन्त्रणां न दद्यात्। अहो, हतं विश्वम्। कदा मिलिष्यति मे खाद्यकं घण्टम्? कुत्र वा तदुपकरणानि वायसनखानि, कृकलासजिह्वाः, गर्दभप्लीहाः, शृगालयकृत् मण्डूकमस्तिष्कं जलौकोलाला च?

तन्त्रपुच्छः—भेरुण्डक!

एवं चमत्कारक-वस्तुभारः
सुसंस्कृतं यस्य सुखाद्यमन्नम्।
किमद्भुतं सात्त्विकभोजनाना-
मुत्सादने यत्नमसौ विदध्यात्॥४

अत्र तु समाधानमेकमेव। धर्मध्वजाधारिणीं नारीं विनाशय। तत्रैव अस्माकं सर्वेषां क्षेमम्।

भेरुण्डकः—तस्माद्वयं प्रलयनृत्यं कुर्मः। अवश्यमेव नारीगुरुनिधनं भविष्यति। ( सर्वे प्रस्थिताः )

———

## द्वितीयोऽङ्कः

### द्वितीय-दृश्यम्

[ ततः प्रविशति महाप्रभुप्रेषितं प्रतापरुद्रदत्तं पट्टाम्बरमादाय दामोदरः । ]

**दामोदरः**—( राजमार्गतः ) जननि ! जननि ! अयमहं दामोदरो नीलाचलपुरादागतोऽस्मि । जननीं प्रणमामि ।

( शची प्रविशति )

**शचीदेवी**—( द्रुतमागत्य ) दामोदर ! अपि कुशलं ते ? अपि नीलाचलपुरे सवषां कुशलम् ? अपि कुशलं मम विश्वम्भरस्य ?

**दामोदरः**—जननि ! सवषां कुशलं तत्रास्ते । भगवतश्च सर्वाङ्गीणं कुशलम् ।

मातः ! पुरीधामतः प्रभुणा प्रेषितः श्रीमहाप्रसादो मया आनीतः, एका बहुमूल्या शाटी च । शाटीयं दत्ता उडिष्याराजेन प्रतापरुद्रेण नन्दोत्सवोद्यापनावसरे भगवते श्रीकृष्णचैतन्याय । भगवान् तु मामेव एतद् वस्त्रं त्वत्सकाशमानेतुमादिदेश । तद् भवत्या सानन्दं ग्रहीतव्यम् ।

**शचीदेवी** - अपि नाम उड़िष्याराजोऽपि विश्वम्भरस्य शिष्य-पदवीभाक् आस्ते ? तद्धि आनन्दावहं सर्वेषाम् ।

**दामोदरः**—प्रभुरस्माकं धनिने न दर्शनदानं करोति । अतः बहोः कालात् निरन्तरं प्रार्थयमानोऽपि नैष उडिष्याधीशः प्रभोः दर्शन-सौभाग्यमलभत । स कातरं प्रभोः सकाशम् आत्मानं भक्तरूपेण वारं वारम् उत्ससर्ज । ततः महता कालेन भक्ति-माहात्म्यादेष प्रभोः शिष्यपदवीमारूढ आस्ते ।

**शचीदेवी**—कथं पुत्राय मे धनिजनेभ्यो दर्शनदानं न रोचते ।

दामोदरः—मातः! तद् भवती जानाति, प्रभुर्जानाति, अस्माकमीश्वरी च जानाति, कथं वयं जानीमहे? तथापि मन्ये आगत-धनं भक्तिधनविरोधीति, चिरकृपालुर्महाप्रभुर्धनिनं वर्जयति।

शचीदेवी—किन्तु दामोदर! तत्रापि व्यतिक्रम आस्ते। यथा राजा प्रतापरुद्रो धनी भक्तश्चास्ति। एते व्यतिक्रमा एव जगतो महोप-काराय भवन्ति। पश्य, उन्मत्तता किल विषमापदः कारणं, किन्तु देशप्रेमोन्मत्ता भागवतप्रेमोन्मत्ताः सेवाधर्मोन्मत्ताश्च मनुष्येषु श्रेष्ठा-स्तदपि सत्यम्।

दामोदरः—जननि! अथकिम्।

शचीदेवी—मातर्विष्णुप्रिये! अत्र आगच्छ।

(ततः प्रविशति विष्णुप्रिया)

शचीदेवी—मातर्विष्णुप्रिये! दामोदरः साम्प्रतं नीलाचल-पुरादत्रागतः। तेन सार्धं विश्वम्भरेण श्रीमहाप्रसादेन सह शाटीयं संप्रेषिता। तन्मातः! गृह्यतामियं शाटी।

विष्णुप्रिया—जननि! अपि प्रभुणा उक्तमियं मया परिधातव्या इति।

शचीदेवी—दामोदर! एतद्विषये विश्वम्भरेण किम् उक्तम्?

दामोदरः—मातः! प्रभुः शाटिकेयं गृहं नेतव्या इति केवलं प्राह। मया तु मन्यते बहुमूल्येयं शाटिका सौभाग्यवतीयोग्या, तस्मात् सा ईश्वर्यैव परिधातव्येति।

विष्णुप्रिया—जननि! महामूल्यम् अम्बरम् इदं त्वत्पुत्रेण दीनालये संप्रेषितं विश्वजनहितार्थम्, न मदर्थम्।

दामोदरः—कथम्? भवती परिधत्ते चेत् विश्वजनानामेव परिधानं तेनैव भविष्यति।

विष्णुप्रिया—तत्तु प्रभुणा नोक्तम्। तेन उक्तं यथा श्रीमहा-प्रसादस्तथेयं शाटिका गृहं नेतव्येति। सर्वमेतत् भक्तजनेभ्यः संप्रेषितम्

विश्वम्भरस्य निखिलं जगदम्बरं यद्
विश्वाम्बरं तत इदं यदनेन दत्तम्।
विष्णुप्रिया परिदधातु कथं तदेका
संरक्ष्यतां जननि तद्धि जगद्धिताय ॥५

नाहं परिदधामि।

दामोदरः—भगवन् महाप्रभो! एतदेव तव अभिप्रेतमासीत्?
अथवा—

गुह्याद् गुह्यतरा प्रज्ञा दिवा निशा जने जने।
यद् दिवा सर्वभूतानां निशा सा हि विपश्चिताम् ॥६

# तृतीयोऽङ्कः

( ततः प्रविशति श्रीमन्महाप्रभुः )

**महाप्रभुः**—संन्यासधर्मानुसारेण वर्षपंचकादनन्तरं मातृभूमि-दर्शनाय वङ्गदेशमागतोऽस्मि। अहो! महानानन्दः, जननी जन्मभूमिः मां सस्नेहं स्ववक्षसा निलराम् आश्लिष्यतीव। अदूरे सेयं जननी प्रसन्नसलिला भागीरथी—गोमुखात् निःसृत्य जलधारया सर्वदुःखं दूरीकृत्य पुण्यप्लावनेन निखिलं देशं पवित्रीकृत्य सागरसङ्गमाय प्रवहति। गायन्ति उच्चैः पक्षिणः, वहति मन्दं मन्दं सुस्निग्धः पवनः, परमामोदेन दिग् दिगन्तश्च परिपूरितो राजते। अहो वङ्गजनन्या अपूर्वो महिमा।

दक्षिणापथेषु तथा उत्कलेषु तथा वङ्गेषु सर्वत्रैव जनन्याः समं रूपमपश्यम्—महामहिममयीं भारतमातरं वन्दे।

तत्रापि वङ्गजनन्याः सौन्दर्यमवर्णनीयमेव। अहो! मधुरं किमपि सङ्गीतं वङ्गजननीमुद्दिश्य वृक्षतले समुपविष्टेन केनापि गीयते।

नमामि वङ्गजननीं विश्वधात्रीम्।

दीर्घतमः-पालकाप्य- कपिलादि-पुण्यगोष्ठ-
सुधीसन्तान-साधन-फलदात्रीम्।
जयदेव—चण्डीदास- चक्रदत्त-शिवदास-
हलायुध-शूलपाणि-पालयित्रीम् ॥१
महामातृ-शचीदेवी- जह्नुसुता-पुण्यच्छवि-
वहन-महिम-पुण्य-धारयित्रीम्।
गृहे गृहे पुण्यमूर्ति- जगद्वन्द्य-विश्वमातृ-
सुदुहितृ-प्रपालन-मोदयित्रीम् ॥२
जगदाशा-देवभाषा-विलसित्रीं
नमामि वङ्गजननीं विश्वधात्रीम्।

**महाप्रभुः**—( चारणकविमुपसृत्य )

सुष्ठु गीतं भवता। देशजननीमाहात्म्यं विश्वजननीमाहात्म्यं स्वजननीमाहात्म्यञ्च सगोत्रकमेव। एतदधिकं न नः किमपि प्रियतमम्।

चारणकविः—[ स्वगतम् ] को न्वयं तपःप्रभावेण असाधारणो महापुरुषः स्वयमवतीर्णो भगवान् इव लक्ष्यते। देव ! नमो भवते।

महाप्रभुः—यदि न भवतोऽनभिप्रेतं, विभिन्नर्तु-परिवर्तन-सुभगां वङ्गजननीमधिकृत्यैव मधुरकण्ठनिःसृतेन स्वरमाधुर्येण मे श्रोत्र-विनोदनं कुरु।

चारणकविः—देव ! बाढम्। ( गायति )

वङ्गजननि मंगलखनि सर्वधरणिवन्द्ये
हरितकान्ति-जनितशान्ति-तनयहृदयनन्द्ये।
जगन्मोहिनीं मातरं त्वां वन्दे।
षड्ऋतुविलासिनीं सुहासिनीं वन्दे ॥३

आतपविरसे निदाघदिवसे सान्ध्यसमीरणसुसेविनीम्।
नवघनमाले वर्षणकाले नदीकल्लोलोल्लासिनीम् ॥४
शेफालिशोभित-शारदप्रभात-नृत्यत्काशकुलशोभिनीम्।
परम-सुकान्त-सुशान्तहेमन्त-लसद्धान्यमधुहिल्लोलिनीम् ॥५

वङ्गजननीं सुभाषिणीं वन्दे ॥

संहतशोणित-हिमवातशीत-विदलनारुणकरपीयूषिणीम्।
अशोकचम्पक-केसरकुरुवक-शोभितवासन्त-हिल्लोलिनीम् ॥६

वन्दे विश्ववन्द्यां वङ्गजननीं
दुर्गतिनाशिनीं दुरितहारिणीं वन्दे
गुञ्जदलिकुञ्जपुञ्जां मातरं वन्दे। [ गायन् प्रस्थितः ]

महाप्रभुः—अहो माधुर्यं गीतस्य [ इति क्षणं तन्मनास्तिष्ठति ]

( ततः प्रविशति आचार्यप्रभुः अद्वैतः )

अद्वैताचार्यः—

वयःकनिष्ठोऽपि जगद्वरेण्यः पूर्णावतीर्णो हरिरेव साक्षात्।
गृहागतं दीर्घदिनावसाने द्रक्ष्यामि चैतन्यमहाप्रभुं तम् ॥७

**महाप्रभुः**—अहो ! आचार्यप्रभुः इत एव आगच्छति। स्नेहातिशय्येन प्रभुर्धावतितराम् ! अहो ! भक्ति-माहात्म्यं महात्मनः प्रभुवर्यस्य।

**अद्वैतः**—( उपसृत्य ) भगवन्तं वन्दे। अपि सर्वाङ्गीणं कुशलं भगवतः ? अपि सर्वे धर्मभ्रातरो मे कुशलभाजः ? दीर्घपथश्रमेण भगवान् विशेषेण न क्लिश्यति ?

**महाप्रभुः**—बहोः कालादनन्तरं प्रभुसमागममाप्तस्य मे कुतोऽधुना श्रान्तिः क्लान्तिर्वा ? सर्वम् अधुना मधुमत् जातम्। सर्वत्र आनन्द-सन्दोहः परिलक्ष्यते। जननी मातृभूमिः मां तस्या धन्यतमे अङ्के निधाय मद्गात्रेषु निर्भरं मंगलहस्तविलेपनमिव करोति। अपि भवतां सर्वं कुशलं कुशलं मे जनन्या भक्तवृन्दस्य च ?

**अद्वैताचार्यः**—[ स्वगतम् ] अहो वाक्चातुर्यं महाप्रभोः—सर्वेषां वृत्तान्तं ज्ञातुं प्रोत्साह एतस्य न तु साक्षाल्लक्ष्म्या विष्णुप्रियायाः। भवतु, प्रकारान्तरेण अहं भगवन्तं जननीविष्णुप्रियाया वार्तां निश्चितमेव संश्रावयिष्यामि। जानाति प्रभुः किल विष्णुप्रियायाः स्वरूपं, तथापि न स्वमुखेन तस्या नाममात्रमपि उच्चारयति।

[ महाप्रभुं प्रति ] प्रभो ! सर्वेषां कुशलमत्र भगवदाशीर्वादेन। भक्तिमार्गानुसरणे च मतिर्जाता अत्रत्यानां जनानाम्। भवद्गृह-त्यागाद् अनन्तरं सर्वे नदीयावासिनः परस्परं कथयन्ति स्म – अहो नु मतिविभ्रमः अस्माकम्। वयं धर्मनिरता निष्कलुषा अभविष्याम चेत् अस्माकं गलितकांचनसमप्रभो जननीविष्णुप्रियाजीवनः नदीया-सर्वस्वं महाप्रभुरपि नास्मान् अहास्यत्। यद् भवतु अधुना वयं तन्मार्गावलम्बिनो भविष्यामः। भक्तिमाहात्म्यमेव श्रीकृष्णचैतन्य-नामधारी नदीयेशः प्रचारयति चेद् वयमपि भक्तिधर्ममेव अनु-सरिष्यामः। किन्तु प्रभो ! का सा भक्तिः, नाहं निश्चितरूपेण जानामि। ततः अस्मिन् परमशुभाहे भवतो ज्ञातुमिच्छामि भक्तेः प्रकृतं रूपम्। को नाम सा यां वयं नित्यम् अनुसरामः।

**महाप्रभुः**—भवन्त एव जानन्ति सा का इति। नाहं किमपि

जानामि। अहं केवलं जानामि भक्तिपरवशो भगवान्, भक्तजनवशो भगवान्, भगवतोऽपि गरीयान् भक्त इति।

ज्ञाने कटाक्षपरिवीक्षणयोग्य ईशो
भक्तौ तु निर्निमिष-लोचन वीक्ष्यमाणः।
ज्ञानार्जने श्रममतः परिमुच्य भक्ता
विश्वम्भरे कुरुत भोः परमानुरक्तिम् ॥८

अद्वैताचार्यः—तथापि भगवान् ब्रवीतु का सा। यां वयं हृदयेन जिज्ञासामहे तस्याः स्वरूपम् अस्माभिः अवश्यमेव ज्ञातव्यम् ॥

महाप्रभुः—आचार्यप्रभो! भवतां हुंकाररवेण स्वय भगवान् अपि धरणीतले प्रादुर्भवति, कथं भवता उच्यते भवान् भक्तिस्वरूपं न जानातीति। बाढम्। तथापि भवन्निर्बन्धातिशय्यहेतोर्ब्रवीमि, भवतां धमनीषु. भवादृशानां भक्तानां धमनीषु या नाम स्रोतोधारा प्रवहति—सा एव भक्तिः। भक्तजनसंरक्ष्या भक्तिः, भवताम् आश्रयेण सा वसति।

अद्वैताचार्यः—नहि नहि, भगवता चातुर्यमधुनापि न मुच्यते। भवान् यथार्थतो न ब्रवीति चेत्—मया उच्यते सुस्पष्टं—सैव भक्तिः या न केवलं भक्ताधमाय मह्यम् अन्यस्मै भक्तजनाय वा आश्रयं ददाति, या तु भवन्तमपि परिरक्षति या भक्तिधर्ममाहात्म्यं निखिले विश्वे विघोषयति च। सा नाधुना गोलोकधाम्नि वर्तते, किन्तु नवद्वीपे एव समागता भवद्गेहे राजते। प्रभो! सैव विष्णप्रिया। सैव विष्णुप्रिया साक्षाल्लक्ष्मीः माधवी माधवप्रिया॥

शरण्या भक्तानामखिलजनमान्या बहुगुणै-
र्जनानां या शोकं शमयति सुखाधानविधिना।
यया रक्षौषध्या त्वमपि कृतरक्षोऽसि भगवन्
प्रिया सेयं भक्तिस्तव मम परेषामपि नृणाम् ॥९

क्रन्दन्ती स्मितभूषणा समहिमा दृष्टा हि योगेश्वरी
लीलाकारसुसज्जिता कृतयुगे या चान्यकालादिषु।

या विश्वम्भरसंगता कलियुगे नित्याश्रुसंतापिता
धारासारपराकृतिस्त्रिभुवने सैवाद्य गौरप्रिया ॥१०

( नित्यानन्देन सह जननी शचीदेवी प्रविशति )

**महाप्रभुः**—( साष्टाङ्गं मातरं वन्दते )

**शचीदेवी**—चिरं जीव, वत्स ! अहो ! कथं नु मे पुत्रः काषाय-परिहितः गलदश्रुवदनो नितरां श्रीकृष्णम् अनुसन्दधानः अन्यमनस्क आस्ते। बहोः कालादनन्तरं जन्मभूमिं प्रत्यागतः अपि सतीश्रेष्ठाया आजन्मपरिपूताया विष्णुप्रियाया नामापि न गृह्णाति। अहो नु कष्टम्।

**अद्वैतप्रभुः**—जननि ! भवत्या आगमनेन दिव्यधाम इव जातं मे गृहम्। ईदृशं शुभदिनं न मे जीवने कदापि समागतम्, न कदापि समागमिष्यति वा।

यस्याः प्रादुरभूदपूर्वचरितो गौरो हरिर्भूतले
सेवाभिः परिचर्यया करुणया विश्वं यया पालितम्।
या मूर्तिः करुणामयी कलियुगे विश्वैकमातुः शुभा
तस्याः श्रीचरणार्पणेन नित्ययोऽद्वैतस्य धन्यश्चिरात् ॥११

भगवतो नीलाचलाद् आगमनं, भगवज्जनन्या भवत्या अपि दीन-जनस्य मे गृहे पदधूलिप्रदानं महापुण्यफलेन जातम्।

नित्यानन्द-महाप्रभू विलसतः, श्रीवास-विद्यानिधी
दास-श्रीलगदाधराख्य-सुकृतिर्दत्तो मुकुन्दस्तथा।
एते हन्त विशिष्टवैष्णवगणा यन्मे गृहे स्वागता-
स्तेनाहं सकलत्रमस्मि नितरां पूतः कृतार्थोऽपि च ॥१२

किन्तु जननी विष्णुप्रिया न समागता इति हृदयं मे दूयते। कथं वा सा वर्तते ? अपि शरीरवैक्लव्यं किमपि संघटितम्।

**नित्यानन्दः**—न हि आचार्यप्रभो ! भगवता महाप्रभुणा आदिष्ट आसम् मया जननी विष्णुप्रिया नात्र आनेतव्या इति—आगच्छन्तु नाम अन्ये सर्वेऽपि नदीयावासिनः।

क्षुद्रक्षुद्रस्यापि जीवस्य दुःखं सोढुं शक्तो यो न गौरो दयालुः।
निष्कारुण्यः किं स विष्णुप्रियायां जातो यद्वा दुर्विगाह्या महान्

तन्मया किमपि न करणीयमासीत्। जननी विष्णुप्रियाऽपि भगवदादेशं श्रुत्वा मातरं स्वयम् अनुरुध्य प्रेषितवती। सर्वे भगवत्पादरजांसि मूर्धनि निधातुं समर्थाः, न केवलं नवद्वीपहृदयमणि-विष्णुप्रिया।

शचीदेवी—नाहं जानामि तत् कथं भवेत्? सा एव सन्न्यासिनोऽपि मम पुत्रस्य सहधर्मिणी, सर्वथा सर्वजनपूजनीया सुचरिता महामहिममयी निखिले विश्वे एकतमा नारी—सर्वथा अतुलनीया वर्तते। धर्मोऽपि विलोपं यास्यति यदि तस्या मनसि केनापि प्रकारेण दुःखं दीयेत। सर्वथा मन्मतेन अन्याय्यमाचरितं तस्या विषये। पुत्रो मे स्वयं गच्छतु तस्याः सन्निधौ अचिरेण—यथा सती नारी रोरुद्यमाना कालं न नयेत्। सतीचक्षुर्जलेन स्वयं वसुन्धराऽपि दह्यते, सर्वमङ्गलानि नश्यन्ति, जगत् जीर्णारण्यमिव प्रजायते। मा मा मद्दुहितरं क्रन्दय, अचिरं मया सह विष्णुप्रियासकाशं चल। नात्र कार्या अन्या कापि विचारणा। अयं जनन्यास्ते आदेशः।

नित्यानन्दः—प्रभोरनुमतिर्लभ्यते चेदहं त्वरितं गत्वा तामत्र आनेष्यामि अथवा महाप्रभोर्गमनकालं तस्यै अग्रत एव विज्ञापयिष्यामि।

महाप्रभुः—किन्तु जननि! सन्न्यासिजनस्य स्त्रियाः सन्दर्शनं न युक्तमित्यत्र को वा सन्देहो विद्यते।

शचीदेवी—वत्स! न सा स्त्री; नारीवेशेन स्वयं आद्याशक्तिः भगवती श्रीश्रीलक्ष्मीः। त्वया सन्न्यासमवलम्ब्य देशदेशान्तरं परिव्रज्य नीलाचलपुरे स्थित्वा वा यो धर्म आचरितः, त्वत्तः समधिकतरो धर्मो मद्दुहित्रा अत्रैव स्थित्वा आचरितः। तस्या महिमा अपूर्व एव।

कमगृहकुलाये वासन्तः कुहुर्मधुरो रवो
विकचकुसुमं पुष्पोद्यानस्य नान्दनसौरभम्।
मिलनमसृणः सेतुः सामुद्रिकः सुदृढो ध्रुवं
निजसुतशतात् संसारे मङ्गला हि वरा वधूः ॥१४

अहं मन्ये तस्या धर्मानुसरणे नास्ति प्रयोजनम्; जगतः प्रयोजनाय धर्म एव तामनुसरतु। अथवा सा एव स्वयं धर्मः अधुना नारीरूपेण नवद्वीपधाम्नि मद्गेहे वधूर्भूत्वा सर्वं पवित्रीकरोति—यं धर्मं त्वमपि अनुसरसि। तस्मात् तस्याः सन्दर्शनं तव, भक्तजनस्य, जगतश्च कल्याणाय भविष्यति। न सा सामान्या स्त्री या सन्न्यासिजनस्य दर्शनार्हा न वेति त्वया चिन्तयितव्यम्। स्वयं नारायणोऽपि तस्या दर्शनमात्रेण आत्मानं पूततरं मंस्यते।

नित्यानन्दः—अस्मिन् विषये न कश्चन सन्देहो विद्यते। कथमपि सा न वञ्चयितव्या। जनन्या वाक्यमवश्यमेव पालयितव्यं भगवता।

महाप्रभुः—मातुरनुशासनमवश्यमेव मया शिरसि धारणीयम्। सा देवी इतः पूर्वं मया उक्ता—यद् आवयोर्विच्छेदः न कदापि गणनीयः। यत्र कुत्रापि वा भवेयमहं सदैव तस्याः सान्निध्ये तिष्ठामीव। आवयोः दूरावस्थितिः जगतां हितायैव। तथापि—भवतामभिमतं चेदहं नवद्वीपं गत्वा दिनमात्रमेव स्थास्यामि। भवद्भिः तद्विषये यत्न आधीयताम्॥

## चतुर्थोऽङ्कः

( पण्डित दामोदरः राय-रामानन्दो महाप्रभुश्च )

( स्थानं नीलाचलपुरे महाप्रभोराश्रमपदम् )

**रामानन्दः**—साम्प्रतं वङ्गेषु भक्तिमहाधर्मस्य विजय-वैजयन्ती सगौरवम् उड्डीयते इत्यस्माकमानन्दः। महाप्रभोः प्रचारितो धर्मः वङ्गेषु अधुना बहुशः अनुस्रियत इत्यत्र महाप्रभुभक्तसाधकश्रेष्ठानाम् अद्वैताचार्य- नित्यानन्द-श्रीवासपण्डित-गदाधरपण्डित-हरिदास-ठाकुर-जगदानन्द-गोपीनाथ-श्रीवास-मुरारिगुप्त-स्वरूपदामोदर गदाधरदास-चन्द्रशखरा-चार्यरत्न-राघवपण्डित-वक्रश्वर-श्रीरामदासप्रभृतीनां साधन-प्रचारयोर्माहात्म्यं सूच्यते।

**दामोदरः**—आर्य रामानन्द! भवता यदुक्तं, ततोऽपि अभ्यधिकं किमप्यास्ते। वङ्गेषु नवद्वीपधाम्नि राजते महाशक्तिः, यस्या विभूतिरधुना सर्वत्र प्रकटीभवति, सा विष्णुप्रिया नक्तं दिवं केवलं हरिं भजते, हरिनाम जपति, जनन्याः शचीदेव्याः सेवायामात्मानं नियुङ्क्ते, किन्तु हरिनाम क्षणमात्रमपि न जहाति।

**राय-रामानन्दः**—दामोदर! जनन्या महामहिमा अचिन्तनीय एव।

**दामोदरः**—आर्य! भूयोऽपि भवता श्रूयताम्। दिवसस्य तृतीयप्रहरे भगवन्तं महाप्रभुं पूजयित्वा

सेयं हरिनामपरा जपसमसंख्यकं तण्डुलं नीत्वा।
पक्त्वादौ भक्तेभ्यो दत्त्वाऽवशिष्टं स्वयमत्ति ॥१

श्रीकृष्णनाम्ना सा महाप्रभुमेवोपास्ते। महाप्रभोः आकृतिसदृशं पटं निर्माय हरिनाममहामन्त्रैस्तस्मिन् प्राणान् प्रतिष्ठाप्य साऽधुना महाप्रभुपूजनं वङ्गेषु प्रचारयति प्रसारयति च।

**राय रामानन्दः**- ततस्ततः। तेन किं फलं जातम्?

**दामोदरः**- फलेन वङ्गेषु सर्वे तस्या नामाकर्ण्य आत्मनः

पुण्यवतो मन्यन्ते, पशुपक्षिणोऽपि तस्या जयगानं कुर्वन्ति। सा सर्वत्र आत्मानं संगोपयति, भक्तजनास्तस्याः पादाङ्गुष्ठमपि न पश्यन्ति। पटावृता सा केनापि उपायेन गृह-भृत्यैरपि न दृश्यते। भक्तिधर्मस्य चरममाहात्म्यमधुना नवद्वीपधाम्नि महाप्रभुगृहे प्रमूर्तं जातम्। अत एव महाधर्मस्य अभ्युन्नतिः। सर्वे भक्तजनाः तस्या एव प्रसादात् निरन्तरधर्मकर्मपटवो जाताः। मातुर्महिम्ना सन्ताना महीयांसो जगति दिग्विजयिनश्च वर्धन्ते।

राय-रामानन्दः तत् मया न केवलमनुमितं तत्त्वतो ज्ञातमपि। श्रूयते नारीभक्तजनेभ्योऽपि सा दर्शनदानं न करोति। सदा आत्मसमाहिता सा जगत्कल्याणं संसाधयति। मातुर्माहात्म्यं कथं वयं वर्णयितुं समर्था भवामः। तथापि हृदयं मे द्रवते यदा श्रवणगोचरं जातमिदं यत् तस्याः तपःक्लेशं स्मारं स्मारमद्वैताचार्य-प्रभुर्निरन्तरं क्रन्दति।

दामोदरः—सत्यमुक्तं भवता। अद्वैताचार्यप्रभुः सर्वमेव सत्यं वृत्तान्तम् ईशाननागरमुखात् जानाति। ईशाननागरः स्वयमेव मामित्थं प्राह :—

न दत्ते नारीभ्यस्त्वपि निजपादप्रणयिनीं
नमस्कर्तुं वार्ता पुरुषविषये का खलु भवेत्।
विधत्ते नालापान् इतरजनकर्णान्तिकचरान्
गृहद्वारादाराद् बहिरपि पदं नार्पयति सा ॥२

अपि च

हेम्नो दर्पं वह्निपूतस्य पूर्वं
येयं हा धिक् संजहार स्वकान्त्या।
तां निर्वाणालातकल्पां वियोगे
दृष्ट्वा नेत्रे साश्रुणी कस्य न स्तः ॥३

महाप्रभुः—[ अर्धबाह्यावस्थः ]—अहो! कीदृश आस्ते आचार्यप्रभुः। अपि कुशलं वङ्गेषु सर्वेषाम्?

---

## पञ्चमोऽङ्कः

### प्रथम-दृश्यम्

### स्थानं नवद्वीपराजवीथी

( श्रीनिवासप्रभुः प्रविशति )

श्रीनिवासप्रभुः—प्रत्यागतोऽस्मि नवद्वीपधाम। अहो दौर्भाग्यम्! यदागच्छं नीलाचलपुरं ततः पूर्वमेव महाप्रभोर्महाप्रयाणं संघटितम्। तथापि महाप्रभोस्तत्कलीयगदाधरप्रभुं प्रति "वङ्गदेशादागच्छन्तं श्रीनिवासं भागवतं पाठय" इति मच्छिक्षणविषयकमादेशं तत एव गदाधरगोस्वामिनो विज्ञाय क्षणं मे हर्षस्यावधिर्नासीत्। भूयोऽपि गदाधरगोस्वामिप्रभुणा विज्ञप्त आसं यत् तस्य स्वकीयो भागवतग्रन्थो महाप्रभोर्महाप्रयाणानन्तरं निरन्तराश्रुनिषेकाल्लुप्ताक्षरो जात इति। तेनैव महात्मना संप्रेषितोऽस्मि श्रीनरहरिठक्कुरसमीपे वङ्गेषु भागवतपाठाय। पत्रं च तस्मै दत्तम्। ततो महाप्रभुस्तथा करोतु यथा मे पाठहानि र्न कदापि स्यात्।

( ततः प्रविशति गदाधरदासः )

गदाधरदासः—जय गौराङ्ग महाप्रभो! [ स्वगतम् ] हन्त! अवसितम् इदानीम् उत्कलगमनप्रयोजनम् अस्माकम्। अस्तं गतो गौरचन्द्रः। यश्चासीत् परममित्रं मे गदाधरगोस्वामी, सोऽपि साम्प्रतं साधनोचितधाम गतः। अहो दौर्भाग्यम्। मित्रेण गदाधरेण मे यः खलु समयबन्ध आसीत् यद् मृत्योः पूर्वमहमवश्यमेव तेन विज्ञापनीय इति—न जाने केन दैवदुर्विपाकेन स तेन विस्मृतः। अथवा समागते मृत्युसमये प्रायः स्मृतिभ्रंशः प्रजायते।

श्रीनिवासः—को नु भवान् महाप्रभोर्नामोच्चारणं करोति। अहं साम्प्रतमत्रागतोऽस्मि। ततः क्षमस्व मां भवतां नाम नाहं जानामीति।

**गदाधरदासः**—अहं गदाधरनामा वैष्णवो महाप्रभोः दासानुदासः। यदा महाप्रभोर्महातिरोधानवृत्तान्तः गदाधरगोस्वामि-प्रभुणा संप्रेषितः, तदा प्रभृति वयमत्र गौडीयभक्ताः सर्वथा शान्ति-विहीना अद्यत्वे सर्वशक्तिहीना इव स्मः। अहो नु कृपा महाप्रभोर्यतः स भागवतीं कृपां प्रतिगृहं विततार।

( श्रीनिवासेन किञ्चिद्विषयस्मरणं नाट्यते। )

**श्रीनिवासः**—( स्वगतम् ) अहो चरमदौर्भाग्यम्! प्रभुणा गदाधरगोस्वामिना उडिष्यामण्डलपरित्याग-समये अस्मै एव वैष्णवाय सन्देशदानाय आदिष्ट आसम्। किन्तु हतभाग्येन मया किं कृतम्! स्वाभिलाष-परिपूरणाय तथा उन्मत्त इवासं यथा मया सा वार्ता न अस्मै प्रदत्ता।

[ काशं गदाधरमुद्दिश्य ]

अपि भवान् वैष्णवाचार्यः गदाधरदासः? भवत्-सकाशे अहं सापराधो वर्ते। प्रभुः गदाधरगोस्वामी पुरीधाम्नः प्रत्यावर्तनसमये मां भवते विज्ञापनाय इत्थम् आदिदेश।

**गदाधरः**—किमादिष्टं तेन महात्मना?

**श्रीनिवासः**—"ब्रूहि—मित्रं ते गमिष्यति गृहान्तरम्" इति। मया तु दौर्भाग्यवशात् सर्वमेव विस्मृतमासीत्। तत् सर्वथा क्षन्तव्योऽस्मि।

**गदाधरः**—अहो दुर्वृत्त वटो! किं कृतं त्वया। महदनिष्टं मे एतेन आपतितम्। दिवसचतुष्टयात् प्राक् मया ज्ञातं यद् असौ लोकान्तरं गत इति। अनेन त्वद्दत्तसन्देशेन किं मे प्रयोजनम्? रे नराधमसद! नाहं त्वां क्षमिष्ये। भगवान् महाप्रभुस्त्वत्कृताप-राधहेतोः त्वां शासिष्यति। वैष्णवस्य चरमानिष्टकरस्य ते शान्तिर्न कदापि भविता। तव सर्वथैव अधोगमनमहं प्रार्थये। अधःपातमाप्नुहि। अधःपातमाप्नुहि मूढ वटो!

( गदाधरो निष्क्रान्तः )

श्रीनिवासः—अहो कष्टम् !

देशाद्ध्येतुकामोऽचलमहह पुरीधाम कामाभिरामं
नाभूत्तत्रेष्टसिद्धिः पुनरहमगमं वङ्गदेशं स्वकीयम् ।
अत्राप्यागत्य जातोऽशुभ-नियति-वशाद् वैष्णवाक्रोशपात्रम
एवं सर्वत्र सर्वेष्वपि विधिषु भृशं विघ्नितः किं नु कुर्याम् ॥१

यां शान्तिः प्राप्तु कामोऽहं प्रथमं पुरीधाम, ततः श्रीखण्डं पुनः नवद्वीपं गतवान्, सा शान्तिः अधुना मे समूलं विनष्टा एव ।

वैष्णवस्य हृदये एतादृक् दुःखं दत्त्वा कथमहं शान्तिभाक् भविष्यामि । अवश्यमेव मरणं मम वरम् । वैष्णवस्य दुःखं प्रदातुर्जनस्य जीवनेन किम् ? तस्मादद्य प्रभृति अनशनव्रतेन देहक्षय-मवाप्स्यामि । परलोके महाप्रभुर्मे शान्तिं विधास्यति ।

## द्वितीय-दृश्यम्

[ ततः प्रविशति जपमन्दिरे आसनस्था विष्णुप्रिया ]

विष्णुप्रिया—[महाप्रभोर्ध्यानं नाटयन्ती] प्रभो ! नाथ ! कथं करुणम् अवलोकयसि । किं नु ते दुःखम् ! किमहं दुरितमाचरितवती !

( ऊर्ध्वदृष्टिः महाप्रभुणा साकं कथोपकथनं नाटयन्ती )

तव परमप्रियो बालकः श्रीनिवासो मनस्तापेन उपवासम् अवलम्ब्य भागीरथीतीरे शयान आस्ते ! अहो प्रभो ! मा त्वं करुणं विलोकय । अहं स्वयमेव गत्वा तत्प्रतिविधानं करिष्ये ।

## तृतीय-दृश्यम्

[ भागीरथीतीरे उपवासव्रती श्रीनिवासः शयानः ]

( प्रविशति धावमाना जननी विष्णुप्रिया )

( पश्चात् प्रविशति ईशान-नागरो वंशीवदनश्च )

विष्णुप्रिया—असहनीयमेतद् यद् वैष्णवगदाधरेण आचरितम् ।

**वंशीवदनः**—जननि ! किम् अन्याय्यमाचरितम् । किं नु संघटितम् ।

**विष्णुप्रिया**—सोऽयं दीनो बालकः श्रीनिवासो विस्मृतिवशात् कंचन सन्देशं गदाधरवैष्णवाय न दत्तवान् इति असौ ईदृक् क्रोधपरवशो जातः यद् बालमपि श्रीनिवासं न क्षन्तुमर्हति । तन्नु आश्चर्यम् । किं नाम असावपि वैष्णवः ? अत्र एको वैष्णवः अन्यस्मै वैष्णवाय दुःखं दत्त्वा अनशनव्रतेन तस्य जीवनावसानं कामयते । अन्यो वैष्णवस्तु तज्ज्ञात्वाऽपि नानुशोचति । नूनं वैष्णवनूत्नोऽसौ । वत्स वंशीवदन ! त्वरितं याहि । मद्वचनेन ब्रूहि गदाधरं झटित्येव तेनात्र आगन्तव्यमिति । याहि त्वरितम् ।

( वंशीवदनो निष्क्रान्तः )

**ईशाननागरः**—( स्वगतम् ) अहो ! किमियम् अस्माकं जननी विष्णुप्रिया या शतसाध्यसाधनैरपि परमभक्तजनानामपि न भवति दर्शनीया । वयं स्वगृहपरिचारका अपि अर्धमासाभ्यन्तरे वारमेकमपि यां न पश्यामः, कथं साऽद्य गृहं परिहाय धावमाना उन्मत्तेव गङ्गातीरमागता सर्वजनसमक्षमेव ! अहो नु मातुर्दया ! अहो वटोरस्य महाभाग्यम् ।

( जननीं प्रति ) मातः ! दीनसेवकोऽत्र भवदादेशप्रार्थी वर्तते । किं नु कर्तुं शक्नोमि ?

**विष्णुप्रिया**—साम्प्रतम् अनशनव्रतेन मृत्युदशामुपागतस्य अस्य बालकस्य प्राणरक्षणाय यतस्व । भिषजं मुरारिगुप्तं त्वरितमाहूय, मद्वचसा कथय च कश्चन अनशनव्रतक्लिष्टो वैष्णवः चिकित्सितव्य इति । भैषज्यम् आहार्यं पानीयञ्चापि—यत् यत् प्रयोजनं—तत् सर्वं तेनैव अचिरादेव आनेतव्यम् । ( ईशानो बहिर्गतः )

महाप्रभो ! केयं तव इच्छा । अहं सर्वदा काण्डापटावृता तिष्ठामि—तव ध्यानमेव मे जीवनस्य एकमवलम्बनम् । किन्तु किन्तु अद्य संघटितम् । बलात्त्वया अद्याहं बहिः प्रापिता—भूयोऽपि भवान् इच्छति—अहमेव अस्य बालकस्य हिताय, देशस्य कल्याणाय,

मातः! तथा दयस्व यथाऽहं धर्मपुत्रः युवयोः महाप्रभोः धर्म-प्रचारविषये आत्मनियोगं कर्तुं समर्थो भवामि।

विष्णुप्रिया—पुत्र! त्वं महाप्रभोर्द्वितीयं स्वरूपम् इव राजस्व।

वत्स! कर्म ज्ञानं भक्तिश्च साधनमार्गाः। किन्तु एतेषु भक्ति-मार्गो हि गरिष्ठः। भक्तिधनमेव भगवतो मृग्यं सर्वथा सर्वदा च।

हरिनाम-स्मरण-कीर्तनादिमुखेन भक्तिधनं प्रापणीयम्;—

यागो जन्मान्तरगतसुख क्लेशसाध्यो विधत्ते
योगोऽष्टाङ्गः फलति वपुषो भूयसा कर्षणेन।
क्लेशाश्लेशादपि जनिमतां जन्मनीहैव सत्यं
सूते भक्तिं शमदमफलां श्रीहरेर्नाम पूतम्॥ २

श्रीहरेर्महाप्रभोर्नाम शरणं व्रज।

सुखसुधा प्रभुनाम परायणं
गहनकानन-राजपथोपमम्।
भवमरौ सुखप्रस्रवणोत्तम
निखिलदाहनशान्तिरसायनम्॥ ३

श्रीनिवासः—जननि! तव उपदेश एव मे परम सम्बलम्। पुनरस्ति एकं निवेदनम्। बहोः कालात् वृन्दावनंगमनाय दृढसङ्कल्पोऽस्मि। भवत्या अनुमतिर्लभ्यते चेत् तत्र यातुमिच्छामि।

विष्णुप्रिया—ऊनविंशतिवर्षवयस्कस्य तनयस्य मे "बहोः कालाद्" इति किम्? तव इष्टसिद्धिः भविष्यति। साम्प्रतं प्राथम्येन खडदहं गच्छ; द्वितीयतः शान्तिपुरधाम—इष्टगोष्ठीम् अन्तरङ्गसङ्गं च कुरु विशेषतः नित्यानन्द-प्रभुणा अद्वैताचार्यप्रभुणा च सह। समायाते काले अवश्यमेव त्वं वृन्दावनं गमिष्यसि। यच्चोक्तम्—

त्यक्त्वा वैषयिकं सुखं परिणतिक्लेशाकुलं सर्वथा
संरक्षन् पुरुषोत्तमे विषयतो व्यावर्तमानं मनः।
स्त्रीपुत्रादिपरिग्रहं परिहरन् काषायवासो वसन्
कन्थामात्रपरिग्रहः क्षपयते धन्यो दिनं धूलिषु॥ ४

तन्न सार्वलौकिकम्। तव जीवनस्य गतिस्त्वन्यादृशी एव। तस्मात्त्वं वृन्दावनं गमिष्यसि काले प्रत्यावर्तनायैव।

यस्याः समुद्गमवशाद् भगवद्विभूतिं
कुर्वन्ति मानसपटे मनुजाः समक्षम्।
यामन्तरेण च पशोः समतां प्रयान्ति
प्राणात्ययेऽपि परिपालय तां हि भक्तिम्॥५

**श्रीनिवासः**—आशिषो देहि यथा तत् कर्तुं शक्ष्यामि। तुभ्यं भूयो भूयो नमः।

मातः सङ्कीर्तनमाध्यमेन महाप्रभोः प्रेमधर्मसप्रचारणमेव मम जीवनस्य लक्ष्यं भवतु—

महादेवि महामाये महाभागे महाश्रुते।
विश्वरूपे महापुण्ये नमो मातर्नमोऽस्तु ते॥६
मातृस्नेहप्रमत्तोऽहं जननीं शरणं गतः।
मातुः स्नेहः परा सम्पन् मातुर्मे तुलनं कुतः॥७
भक्तिमत्तं जगत् सर्वं कुरु देवि महास्तुते।
शक्ति देहि जगन्मातः प्रचाराय शुचिव्रते॥८
गौरशक्तिः परा भक्ति-मूर्तरूप-प्रकाशिनि।
भक्त-शतहितानन्द-महामिलनसाधिनि॥६
सङ्कीर्तन-महाभावे नामब्रह्मस्वरूपिणि।
माधवि माधवानन्दे भक्ति देहि सनातनि॥१०
प्राण-गौरांग-सर्वस्वे विश्वमातः शुचिस्मिते।
श्रीनिवासे सुते दीने कृपां कुरु सदा हिते॥११

---

## षष्ठोऽङ्कः

[ विष्णुप्रियया दुर्गापूजाया वर्तमानाकारेण अवतारणम् ]

( प्रविशन्ति वंशीवदनः श्रीनिवासो विष्णुप्रिया च )

वंशीवदनः—मातः जगदीश्वरि ! अहो महत् कष्टं यद् भवत्यां जीवन्त्यामपि अद्यापि भक्तजना देवपूजनं पूर्णोपचारैः सुष्ठुतया कर्तुं न पारयन्ति। वत्सराभ्यन्तरे कदापि कार्त्तिकेयस्य, कदा वा गणेशस्य ; कदापि वा मातुर्लक्ष्मीदेव्याः कदाचन जनन्याः सरस्वत्या एवं अन्येषामपि देवानां पूजासु क्रियमाणासु कालधर्मानुसारेण महान् विघ्न उत्पद्यते। वङ्गेषु सर्वत्र धर्मक्रियापरायणा विपद्यन्ते। तत् महानर्थकरं सत्यमेव।

श्रीनिवासः—न केवलं वङ्गेषु ; वङ्गेभ्यो बहिरपि अवस्था एतादृश्येव। पाञ्जावादि-प्रान्तेषु स्वाभाविकी विद्योतनी सनातनी धर्मक्रिया विपर्यस्ता। आचार्य-नानकेन कोऽपि युगोपयोगी धर्मः संप्रचारितः। किन्तु अत्रत्यानां जनानां मनोविभवप्राण-स्पन्दनानुसारिणी वार्षिकी धर्मक्रिया-पद्धतिः भवत्या प्रचार्यताम्। किं नु करणीयं यथा देवदेवीपूजा न विपर्यस्ता स्यात् ?

विष्णुप्रिया—पुत्रौ ! समुचितोऽयं प्रश्नः। सत्यमेव अस्माभिरत्र विषये करणीयमास्ते। महाप्रभोः धर्मसंप्रचारणफलेन वङ्गीया प्राणस्फूर्तिधारा खरतरं प्रवाहिता भविष्यति। गौडीयाः स्वभावेन भावप्रवणा ब्रह्म मातृरूपेण आराधयन्ति।

यद्यप्यम्बरचुम्बि-मन्दिरघटा वङ्गेषु नो लक्ष्यते
दृश्यन्तेऽत्र तथापि चेतसि नृणां देवालयाः कोटिशः।
गङ्गेव प्रवहत्यपूर्व-महिमा भक्तिश्चिरादत्र यद्
घण्टाशङ्खरवा अतो हि मुखरीकुर्वन्ति तत्सैकतम्॥१

अतो महाप्रभोरागमनं गौडेषु। निगूढ-साधना प्रतिव्यक्ति प्रचरतु,

किन्तु सर्वजनीना पूजाऽपि अवश्यमेव कर्तव्या। न तदा बहिर्बाधा भविता—आगताऽपि न सा कार्यकरी भविष्यति।

प्रसङ्गाद् दुर्गार्चां चिरमुपदिदेश प्रभुरपि
स्वयं तामानर्च प्रतिनियतमेकाग्रमनसा।
प्रतस्थे यद् वृन्दावनमपि दशम्यां खलु तिथौ
अतः पूज्यास्माभिर्भुवनजननी सात्र मिलितैः ॥२

श्रीनिवासः—किन्तु जननि! लक्ष्मी-सरस्वती-प्रभृतिपूजा-दिवसेष च वाधा संप्रजायेतैव। अस्मिन् विषये किं नु कर्तव्यम्?

विष्णुप्रिया—तात! भगवन्मननशीलो न कदापि भीतिं जानाति। देवता-पूजनावसरे काचन वाधा भवेच् चेद् ध्रुव-मपनेतव्या सा। तथापि भक्तजनैरित्थं क्रियताम्। देवी-पूजा तथा विधातव्या—यथा लक्ष्मी-सरस्वतीप्रभृतयोऽपि सन्तोषमेष्यन्ति। ता देवता देवीपूजावसरेऽपि पूज्यन्ताम्। यद्यपि लक्ष्मीः सरस्वती च देव्या एव नामान्तरे, तथापि गौडेषु देव्याः कन्यारूपेण ते उपास्येताम्। जया विजया च देव्या नामान्तरं, ते अपि सखीरूपेण आगच्छताम्। जनन्याः पुत्रौ अपि अस्मिन् अवसरे पूज्येताम्।

वंशीवदनः—अहो माधुर्यम्—तथा जननि! सर्व एव शिव-परिवारः अस्माभिः सममेव पूजितो भवेत्।

श्रीनिवासः—किन्तु जननि! न केवलं प्राक्तनेषु कालिका-पुराण-देवीभागवतादि-ग्रन्थेषु परवर्तिग्रन्थेष्वपि चण्डिकासुरसिंह-रूपत्रिक-संपूजनं केवलं विहितम्। फलत आधुनिकेन स्मार्तभट्टाचार्य-रघुनन्दनेनापि तदेव विधानम् अनुसृतम्। तस्मान् नवे विधाने संप्रवर्तिते अपि किं जना न संचिन्तयिष्यन्ति एतत् नवीनं विधानं शास्त्रानुसारि नवेति?

विष्णुप्रिया—धर्मो युक्तिहीनो न भवेदेतद्विषये मतविरोधो नास्ति। किन्तु धर्माचरणं प्रतिजाति स्वकीय-वैशिष्ट्यद्योतकं भविष्यत्येव। प्रतियुगं युगावताराणामाविर्भावफलेन धर्माचरणविधौ युगधर्मानुसारि पार्थक्यम् अवश्यं भवेत्। महाप्रभोर्युगधर्मो भाव-

प्रवाही। अद्य वात्सल्यं सख्यं च महाप्रभोर्भक्तिधर्म-प्रचारणानन्तरं समाजे धर्माचरणव्यपदेशेनापि सुप्रतिष्ठे भवेताम्। तस्मात् जगदम्बिका आगच्छतु कन्यारूपेण; शिवो हिमाचल-जामातृरूपेण दिवसत्रयं कैलासे विरह-जर्जरितः तिष्ठतु, प्रतिगृहं पुत्रकन्या-समन्विता कन्या दुर्गा समागच्छतु। एतेन भक्तिधर्मस्य वात्सल्यं परिस्फूर्तिं लप्स्यते। सख्यस्य प्रतीकत्वेन जया-विजये देव्या उभयपार्श्वयो राजिष्येते।

वंशीवदनः—ब्रह्मण एतादृशं दुहितृरूपत्वम् अविभावितपूर्वमेव। अपि तत् सर्वेभ्यो रोचिष्यते ?

विष्णुप्रिया—तात ! "सर्वेभ्य" इति को वादो वर्तते ? अहं केवलं जानामि ये केचन महाप्रभोर्धर्मापेक्षिण आसते, तेषां सर्वेषामेष एव श्रीदुर्गापूजनप्रकारो भविष्यति।

श्रीनिवासः—जननि ! तव प्रसादेन अनुशासनमेतत् अद्य प्रभृति तव पुत्राधिकः शिष्यः संप्रचारयिष्यति। जानन्तु सर्वे पृथिवीवासिनः—जननी जगदम्बिका विष्णुप्रिया घोषयति।

अद्यारभ्य रमा षडानन-गणेशानौ गिरामीश्वरी
दुर्गार्चावसरे जया च विजया संपूजिताः स्युः समम्।
कन्यारूपमुपागता त्रिदिवसं स्थित्वा च वङ्गालये
पत्युर्गेहमसौ महेश-गृहिणी तुर्ये दिने यास्यति ॥३

विष्णुप्रिया—बाढम्। अनेन प्रकारेण जननीं श्रीदुर्गां पूजयत। सा युष्माकं महते कल्याणाय भविष्यति।

श्रीनिवासः—जननि ! त्वमेकदाऽकथयः—देशमातृका जगदम्बिकायाः प्रतिबिम्बनमिति। तेन मन्ये श्रीदुर्गापूजनेन देशमातृका-पूजनमपि भविष्यति।

विष्णुप्रिया—वत्स ! जगदम्बिका श्रीदुर्गा देशमातृका च इति एतयोः को भेदः ? भगवत्याः पुत्रः कार्त्तिकेयो बलदाता, गणेशः सिद्धिदाता, लक्ष्मीः धनसौभाग्यदात्री; सरस्वती विद्यारूपा; जया विजया च जयकरा सुसामञ्जस्यविधात्री च—दुर्गापूजासंविधाने च

जातिधर्मनिर्विशेषं सर्वेषां समाधिकार उद्घोष्यते—शत्रुमपि मित्रं विभावयेत्, चण्डालद्विजयोः विभेदोऽपि दिवसत्रयं लुप्येत !

ततः—जगदम्बिका-पूजने देशमातृका-पूजने च को भेदो जायेत ? देशमातृका-पूजायां जीवशिवपूजा विहिता। देवी च सर्वभूतेषु क्षुधा-रूपेण, तृष्णारूपेण, इत्यादिक-विविधरूपेण तिष्ठति। देवीपूजनं तस्मात्तत्त्वतो देशमातृकापूजनमेव।

श्रीनिवासः—जननि ! विद्यते अन्यः कश्चन प्रश्नः। सौरा गाणपत्या वैष्णवा अन्ये च धर्मावलम्बिनः सर्वे कथं दुर्गापूजनतत्परा भवेयुः ?

विष्णुप्रिया—तात ! माता मातव—भवतु शाक्तानां, वैष्णवानां तथा अन्येषाम्। सन्तानविषये जनन्या हृदयं न कदापि पार्थक्याध्य-वसायि। जनन्याः कल्याणहस्तः यत्र यत्र संप्रसरति, तत्रैव कल्याणम्—अजस्रम्—अचिन्तनीयपूर्वञ्च। का वा मेधा, दुर्गा, गौरी, श्रीः, शाक्त-वैष्णवशक्तिरन्या वा—एका सैव। पुत्रेषु विभेदः प्रतीयते पितृरिकथाय मातृधनं तु हृदयं नाम—तत् सर्वेभ्यः सममेव। तस्मात् श्रीश्रीदुर्गा-पूजनविषये न कदापि भिन्नधर्मीयाणां भेदो गणनीयः; विशेषतः तेषां मातृमुखानां वङ्गीयानां ये सनातनकालात् वर्तमानकालपर्यन्तं सर्वदा मातृपूजावलम्बिनो मातयव सव सार्थक्यं पश्यन्ति।

श्रीनिवासः वंशीवदनश्च—जननि ! आवयोर्नमः। भगवते महाप्रभवे नमः, जनन्यै श्रीश्रीमहादेव्यै महाप्रभुमहाशक्तये नमः, जग-दम्बिकायै सपरिवारायै श्रीश्रीदुर्गादेव्यै नमः।

## सप्तमोऽङ्कः

### प्रथम-दृश्यम्

[ वंशीवदनो जननी विष्णुप्रिया च प्रविशतः ]

**वंशीवदनः**—मातः ! भवतीं प्रणमामि। जननि ! भवदादेश-क्रमेण मया निर्मिता महाप्रभोर्दारुमयी मूर्तिः। इत आरभ्य भगवत्या प्रतिदिनमत्रागन्तव्यम्। काञ्चना अमिताभा चेति सखीद्वयं सहायो भवति चेत् वयं निश्चिन्ता भविष्यामः। मातः ! वयं केवलं प्रार्थयामहे—इमं क्षीणं देहं कथञ्चन संरक्ष्य भवती अस्माकं महाप्रभोर्धमम् अग्रेसरीकुरुताम्। अयम् अस्मद्वरणीयतमो धर्मो विश्वधर्मरूपेण राजताम् इति।

**विष्णुप्रिया**—तात वंशीवदन ! महति अस्मिन् आनन्ददिवसे निरन्तरं स्मरामि नाथस्य जननीम्। तस्याः सेवायामेव अहं जीवनस्य महत् सार्थक्यमन्वभवम्। जननी अस्माकं पुत्र पुत्र इति रोरुद्यमाना ग्रावाणमपि रोदयामास। सा यदि अद्य अजीविष्यत् तस्या आनन्दस्य परा काष्ठा अभविष्यत्। महाप्रभोरर्चनस्थानं, साक्षान्महाप्रभुमिव दारुमूर्तिं च दृष्ट्वा सा परममुदिता अभविष्यदिति नास्ति मे कश्चन सन्देहः। अद्य आसमुद्रहिमाचलं महाप्रभुं वन्दमानं भारतवर्षं भूयोऽपि आध्यात्मिकविषयेषु जगतः शीर्षस्थानमधिकरिष्यति इति वयम् आशास्महे। तद् यथा तथा वा भवतु; त्वम् अद्य एव हरिनामसङ्कीर्तनयज्ञं प्रारभस्व, मन्दिरोद्बोधनदिवसे महाप्रभोः इतोऽधिकम् आनन्दकारणं नान्यत् किमपि भविष्यति।

**वंशीवदनः**—जननि ! बाढम्।

## कीर्तनम्

गौराङ्गसुन्दर-विभुर्जयताद् विहारे
विष्णुप्रिया-सुविहिते धरणी-विहारे।
वंशीधरैकपुलके जननी-विहारे
दारुस्थित-प्रभुवरो लसताद् विहारे ॥१
जय प्रभो शचीसुत जगन्नाथानन्द।
जय जय प्रियामातः सुतसुखकन्द ॥२
जय नाथ गौरहरे मुकुन्द मुरारे।
राधा-द्युति-सुवलित नदियाविहारे ॥३
गौराङ्ग-सुन्दर-विभुर्जयताद् विहारे ॥
जय जय प्रियानाथ नदिया-विहारे ॥

| | | | |
|---|---|---|---|
| भक्तानन्दं | भुवनभरणं | पूजनं | पूजितानां |
| द्वारि द्वारि | भ्रमणनिरतं | भिक्षणं | भिक्षुकाणाम्। |
| श्रीगौराङ्गं | गुणगणखनिं | पावनं | पावितानां |
| चित्तारामं | भज मणिमणिं | रञ्जनं | रञ्जितानाम् ॥४ |

## द्वितीय-दृश्यम्

[ विष्णुप्रियागृहम्। प्रविशति वृन्दावनप्रत्यागतः श्रीनिवासः ]

**श्रीनिवासः**—जगज्जननीं भगवतीं वन्दे। साम्प्रतमेव वृन्दावनात् प्रत्यागतोऽस्मि।

**विष्णुप्रिया**—कल्याणं तेऽस्तु वत्स! अधुना कीदृशा आसते श्रीमान् श्रीजीवः कविराजगोस्वामी अन्ये च वृन्दावनस्था भक्तजनाः। अपि सर्वेषां तपो वर्धते?

**श्रीनिवासः**—जननि!-त्वयि जीवन्त्यां कथं तपोहानिः कस्यापि भक्तजनस्य जायेत। सर्वत्र विद्यते श्रीः, सर्वत्र कल्याणमशेषमपरिमितञ्च। किन्तु मातः! यस्याः तव प्रख्यातः कनकचम्पकदामगौरो वर्णः महाप्रभोः कनकवर्णमपि पराजयत—सा त्वं कथम् अस्थिचर्मसार

निर्वापितानलकाष्ठखण्डमिव मसीवर्णा वर्तसे । मातः ! महाप्रभोर्विरहेण एवं संक्लिष्टासि चेत् मन्त्रशिष्यः पुत्रोऽपि वा भूत्वा संप्रार्थये गोलोकधाम्नः स्वय लक्ष्मीस्त्वं स्वस्थानमेव प्रयाहि । वयं तव अनशनक्लेशं तन्द्राहीनदिवसयामिनीयापनं निरन्तरं चिन्तापरम्परा-विमलिनं वदनं च द्रष्टुं न शक्नुमः मातः !

विष्णुप्रिया—( अश्रवणमभिनीय ) वत्स ! इतः अवधानं देहि । अवधूतसहधर्मिणी वसुधा जाह्नवी च, अद्वैताचार्य-पत्नी सीता देवी अन्याश्च महीयस्यो देशमातरो मां द्रष्टुकामा बहिस्तिष्ठन्ति । ताः सर्वा अन्तः प्रेषय । [ श्रीनिवासो निष्क्रान्तः । ]

[ ततः सर्वा मातरः प्रविशन्ति ]

सीतादेवी—मातः ! यद्यपि वयसा त्वं कनीयसी, तथापि न केवलं महाप्रभोः सम्पर्कात् , प्रोद्दीप्त-जीवनतेजसाऽपि त्वं महामहीयसी मातृस्वरूपा राजसे । वयं मातः, त्वां साष्टाङ्गं वन्दामहे ।

विष्णुप्रिया—देवि ! भवतीनाम् आशीर्वादैरेव अस्माकं सर्वार्थसिद्धिः । तव भर्तुः आचार्य-गोस्वामिनः साधनबलेन हुङ्काररवेण च अस्मन्नाथो महाप्रभुर्जगतीतलं प्रापेति सर्वैरेव सुपरिज्ञातम् । ममापि जीवनस्य केवलं लक्ष्यमासीत् आचार्यगोस्वामिनः साधनं प्राप्तलक्ष्यं स्यादिति ।

सीता—भवती मन्यते चेत् तत् सुसिद्धमेव, इतःपरं मे किमपि न प्रार्थनीयं स्यात् ।

अन्याः सर्वाः—तत् सर्वं सुसिद्धमेव । अमर्यादं जगत् अधुना सुधन्यं सञ्जातम् । वयं केवलं प्रार्थयामहे भवती दीर्घतरजीवन-परिग्रहेण अस्माकं समाराधनस्फूर्तिम् अव्याहतां करोतु इति ।

विष्णुप्रिया—जनन्यः ! भवत्य आयुष्मत्यो भवेयुः । निखिलजगतः प्रभूततरं कल्याणं संसाधयेयुरिति मे प्रार्थना । नाहमितोऽधिकम् आयुष्कालं वाञ्छामि । परन्तु चिरान्तर्धानात् प्रागेव भवतीभिः सह मे सन्दर्शनं जातमिति मे परममोदकारणम् ।

सीतादेवी—जननि! तव ते जीवनवृत्तान्तं श्रोतुं परमसमुत्सुका वयम्। मधुनिःस्रवणेन अस्माकं सर्वासां श्रोत्रविनोदनं कुरु।

विष्णुप्रिया—मातरः तत् भवतीभिः श्रूयताम्।

गौराङ्गोऽपि प्रणयवचनप्राप्तनित्यप्रसादां
प्रेमोन्मत्तां नवनवविभूत्यादि-समूढचित्ताम्।
त्यक्त्वा पत्नीं जगदघविमोक्षाय सन्न्यासमाप्त,
सुष्ठु व्यक्तं परमकरुणाभक्ति माहात्म्यमृद्धम्॥५

जाह्नवी देवी—तत्र मातः तवैव परं माहात्म्यम्। तव त्यागमहिम्नः फलं स्वयं श्रीश्रीमहाप्रभुः। किन्तु वयं भवत्या जीवनकथां श्रोतुं परमोत्कण्ठिता वर्तामहे। कुरु कृपां जननि!

विष्णुप्रिया—शृणुत मातरः!

चतुर्दशवयःकालात्तपस्तप्तं परं मया।
विशेषतश्च पत्युर्मे तिरोधानादनन्तरम्॥६
अष्टात्रिंशद्वयःकालात् स्वप्नदृष्टो महाप्रभुः।
निर्दिशति यथाकालं भक्तिधर्मं सुखावहम्॥७
षट्पञ्चाशत्ततो वर्षा यापिता ध्याननिष्ठिताः।
पश्यामि यन्महिम्नाद्य मातुः पुण्यप्रवाहिणीः॥८

सीतादेवी—जननि! अस्माकं कर्तव्यविषयेऽपि भवत्या उपदेशाः सविनयं प्रार्थ्यन्ते।

विष्णुप्रिया—शृणुत

बोधनं जननीशक्तेर्देशव्यापि निरन्तरम्।
कर्तव्यं युगमातृणां नातः किञ्चिच्छुभंकरम्॥९
सुगतसमयलीलाऽभ्युन्नतिर्यादृशी सा
परममधुररूपा मातृयत्नायतासीत्।
शुभनवयुगसाधु-प्रेमभक्तिप्रकर्षः
परयतनपराभि-र्मातृभिस्तद्वदस्तु॥१०
जनन्यो नितरां धन्याः समाजस्थितिहेतवः।
प्राणरूपाः परीवारे विश्वालोकप्रकाशिकाः॥११

शाश्वतिक-साधनाः प्रीतिपर-द्योतना-
स्तपस्यामृत-मधुर-धाराः।
शरण-भरण-पोषण- चिर स्नेह-वितरण-
मधुरिम-फुल्ल रूप-साराः ॥१२

किरण-प्रसारण- तमोविदूरण-
तत्परा मातरो धन्याः।
समीरण-गतौ सर्वत्र चरथ
निरर्गल-हृदयसुनिषण्णाः ॥१३

**वसुधा देवी**—मातः! वयं नार्यः सर्वथा दुर्बलाः पति-सन्तान-मुखापेक्षिण्यः। वल्लरीरूपा वयं तरुविग्रहरोहिण्य एव।

**विष्णुप्रिया**—मातरः! आकर्षणशक्तिर्न दौर्बल्यम्। आकर्षण-शक्तिः संरक्षणशक्तेश्च परिपोषिका। सत्यमेव—

कुलुकुलुनिनादि- सरित्प्रवाहै-
र्दिशि दिशि धावतानिशम्।
मानसभूमीः पररससाराः
प्लावयत यूथमशेषम् ॥१४

कुरुत मातरः सर्वा जगति शान्तिकारणम्।
प्रेमामृत-महाभाण्ड सुधाधाराप्रवाहनम् ॥१५

**सर्वाः**—वयं भगवतीं दृष्ट्वा सुधन्याः सार्थकजन्मानो जाताः। जगज्जननीं भगवतीं वयं भूयो भूयः प्रणमामः।

जनन्या दीर्घतरजीवनधारणमस्माकं नित्यकाम्यम्।

**विष्णुप्रिया**—

दर्शनकातरा यूयं मां द्रक्ष्यथ निरन्तरम्।
नरलोकस्थितां तद्वत् परलोकविचारिणीम् ॥१६
शृणुत सावधाना मद्वचस्तुष्टा भविष्यथ।
प्रोन्मुक्ते हृदयद्वारे प्रवेक्ष्यामि महादरम् ॥१७
दीर्घविरहकातर्यात् करुणं पश्यति प्रभुः।
गमनं मेऽनुमन्यन्तां भवत्यो युगमातरः ॥१८

( ध्यानस्था—महाप्रभुमुद्दिश्य )

प्रभो !

सिन्धौ बिन्दुस्तपनकिरणे लीयते दीपलेखा
तारा-दीप्ति हिमकर-करे सैकते धूलिलेशः ।
शब्दब्रह्मण्यतिसुचपलो वाहतः क्षुद्रनादस्-
तद्वचाहं प्रियतम-तपोराशि-लीना भवेयम् ॥१६
मातरः ! अन्यत् किमपि प्रियं कर्तुं शक्नोमि ?

सर्वाः— न हि न हि मातः । तथापि इत्थं भवतु ।

( भरतवाक्यम् )

प्रियागौर-सम्मेलन- भक्ति-प्रेमविमिश्रण-
जाता परा सुरधुनीधारा ।
करोतु धरित्रीमिमां शाश्वतिकपुण्यसीमां
देवद्रुमच्युतपुष्पसारा ॥२०
सेवा-दया-शुभ-शान्ति- मित्रता-ममता-क्षान्ति-
सौरभाह्लादितपूर्णविश्वम् ।
सुधायतां विषभाण्डं हिंसाद्वेषप्रचण्डं
घटयतु सौभ्रात्र-प्रकर्षम् ॥२१
जयतु श्रीगौरप्रिया. लीलया मङ्गलधिया
बोधितश्रीकृष्णचैतन्यम् ।
विखण्डितवङ्गदेशं भक्तिप्रेमपरवशं
करोति या पुण्यमिलनधन्यम् ॥२२
अद्वैतनित्यानन्द- हरिदासरामानन्द-
सनातनरूपश्रीनिवासाः ।
श्रीजीव-जगदानन्द- मृदङ्गानन्द-मुकुन्द-
मुरारयोऽपि जयन्तु सुहासाः ॥२३
जय प्रभु-गौरहरे जय विष्णुप्रिये ।
जय जय शचीदेवि नमो भक्तिश्रिये ॥२४

जय जय प्रेमधर्म जय भक्तवृन्द ।
सर्वत्र राजतु शुभो मधुर आनन्दः ॥२५
जय जय गौरहरे
कृष्ण मुकुन्द मुरारे शौरे ।
जय जय विष्णुप्रिये
राधिके पूर्णसारात्सारे
नराकारे नदीया-विहारे ॥२६
गौडाञ्चलगोविन्द- प्राणप्रियाह्लादानन्द-
भक्तपादधूलिः परात्परा ।
विष्णुप्रिया-गौरहरि- पादपद्मरेणुधारि-
दीन-यतीन्द्रविमल-विमलकरा ॥२७

———

# श्रीभक्तिविष्णुप्रिय—नाटकस्य श्लोकानाम्

## अकारादिक्रमेण सूचीपत्रम्

---

## "भक्ति विष्णुप्रिय"-नाटकस्य छन्दःसूची

## सन्न्यासग्रहणात् प्राक् महाप्रभुं प्रति
### श्रीश्रीविष्णुप्रियाया उक्तिः

प्रभो !

विशालपारावार- सञ्चारिमीनाकार-
"प्रिया" तव जन चक्षुरगोचरा ।
त्वयि जगद्धरभूधरे श्रीगौराङ्गनटवरे
भविष्यति क्षीणा जलधारा ॥१

अनन्ते चिरवसन्ते धरित्री परसुकान्ते
क्षुद्रा वल्लरी नृत्यपरा ।
महाकाशे दिगन्ते ध्यानयोगप्रशान्ते
मेघधारा स्वल्पतोयधरा ॥२

तपस्यातपने "प्रिया" तेजोरूपलवतया
पर स्थास्यति ते विरहविधुरा ।
ब्रह्माण्डहृदयगौर- क्षीणप्रवाहाकार-
विष्णुप्रिया धीरसंचारा ॥३

सेवाभक्ति-संवलिते क्षेममय-प्रेमपथे
धूलिधोरणीकणिकाकारा ।
गौरमहासङ्गीते त्वयि विश्वसञ्जीविते
विष्णुप्रिया मृदुल-तानपरा ॥४

# श्री विष्णुप्रियां प्रति निवेदनम्

यस्य हि लपनं मधुरं श्रवणं मधुरम्।
भण तज्जननि नाथमनिवारम्॥
धरणीभारहरण- नाथपङ्कजचरण-
शृङ्खलं न, भयेयं नूपुरम्।
गहनघोरविपिने दुर्गपथविचरणे
कण्टकं न, कुसुमं सुकुमारम्॥१
मातृपदसंबलो दीनो यतिविमलो
भणति हि जननीं वारंवारम्।
त्वमसि गौरविधुरा तारासारपरा
तारयसि मे पितरमनिवारम्॥२
त्वं हर्त्री कर्त्री भवसि विश्वधात्री
परं स्थिरज्योतिः परात्परम्।
शक्तेरसि शक्तिः गतेश्च महागतिः
पारावारेऽपारे पारम्॥३
धरणीपापहरे भक्तिशक्तिसारे
पादं मयि निधेहि शोकहरम्।
ममतैकाधारे सुतस्नेहसारे
प्रोद्भासय यतिस्नेहाङ्कुरम्॥४